श्रीः

श्रीमुरारिकविविरचितम्

# अनर्घराघवम्

नाम

नाटकम्

श्रीलक्ष्मणसूरिविरचितया

आकराख्यया

व्याख्यया

सहितम्

श्रीमत्तञ्जानगरे विराजमानायाम्

श्री 'पूर्णचन्द्रोदय' मुद्राक्षरशालायाम्

मुद्रितम्

सत्

विजयतेतराम्

( मूल्यं रू० २-०-०. )

१९००

॥ श्रीरामचन्द्राय नमः ॥

# श्रीमुरारिकविप्रणीते अनर्घराघवनाटके

श्रीलक्ष्मणसूरिविरचिताऽऽकराख्यव्याख्यासहिते

## प्रथमोऽङ्कः ।

निष्प्रत्यूहमुपास्महे भगवतः कौमोदकीलक्ष्मणः
कोकप्रीतिचकोरपारणपटू ज्योतिष्मती लोचने ।
याभ्यामर्धविबोधमुग्धमधुरश्रीरर्धनिद्रायितो
नाभीपल्वलपुण्डरीकमुकुलः कम्बोः सपत्नीकृतः ॥ १ ॥

सेवेऽन्तरायशान्त्यै चन्द्रादित्यौ गदाभृतो नेत्रे ।
युगपद्ययोः प्रकाशान्नाभ्यब्जं प्राप शंखसादृश्यम् ॥ १ ॥
आदाविदं सिसृक्षुर्नाभ्या यस्योदरं विशन् धाता ।
सर्वं यथास्वमगमत्तस्मै नारायणाय तेऽस्तु नमः ॥ २ ॥
देवीं गिरामुपासे समुचितपदसंविधानमभिकाङ्क्षन् ।
आहुर्यदीयशक्तिं सर्वस्य च बीजमर्थस्य ॥ ३ ॥
रामं द्विषद्विरामं वन्देऽखिललोकमंगलारामम् ।
सीतालक्ष्मणभरतकशत्रुघ्नाद्यैः समेतमभिरामम् ॥ ४ ॥
क्वेदमतीव गभीरं नाटकमपि चाल्पचेतनः क्वाहम् ।
व्याचिख्यासुरहं तद्धस्तेनेन्दुं जिहीर्षामि ॥ ५ ॥
इत्थं विजानतोऽपि त्वरयति रघुवीरभक्तिगरिमा मे ।
तन्नन्दन्त्विदमार्या व्याख्यानं सम्यगाकराभिख्यम् ॥ ६ ॥
आद्याङ्ककथासारो दशरथमुपगम्य कौशिकोऽभ्यर्थ्य ।
कृच्छ्रेण तेन मुक्तौ प्रातिष्ठत रामलक्ष्मणौ प्राप्य ॥ ७ ॥

अत्रतावत्तत्रभवान्सकलकविकुलचूडामणिः मुरारिर्नाम कविः " नाटकान्तं

कवित्वम्" इति आलंकारिकवचनमनुरुध्यमानस्तन्निर्मित्साव्याजेन परमपुषार्थसाधनभूतभगवद्गुणगणसंकीर्तनादिकमभिधित्समानः स्वाभिमतदेवतानमस्काररूपमंगलाचरणं स्वाचरितं शिष्यशिक्षार्थं श्लोकद्वयेनादौ निबध्नाति । उक्तञ्च भगवता भाष्यकारेण "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि प्रथन्ते" इत्यादिना ग्रन्थादौ मंगलस्य कर्तव्यत्वम्, तत्र च पुराणादिकं यथा अनिष्टनिवृत्तिद्वारा इष्टप्रापकम्. तद्वत्काव्यमपि, उक्तञ्च "काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये" इति ततोऽप्यस्यायं विशेषः "कान्तासम्मिततयोपदेशयुजे" इति अस्य चायमर्थः पुराणादेस्तावत् सुहृद्वत्साम्नाहितप्रापकत्वं काव्यस्य तु कान्तावत्स्वारस्येन स्वायत्ततानयनद्वारेति, उक्तञ्च विद्यानाथेन "कान्तासम्मितया यया सरसताम्" इत्यादिना, तत्रापि श्राव्यप्रबन्धतः दृश्यप्रबन्धस्य उत्कर्षः अपरोक्षतया अनुभवोत्पादनात्, तत्रापि नाटकस्यैवाभ्यर्हितत्वात्तत्रैव प्रेक्षावतामत्यादरः उक्तञ्च "पूर्वं प्रकृतिरन्येषां" इति, समग्राङ्गोपेतत्वं प्रकृतित्वं । यथादर्शपूर्णमासादेः । अर्थात्प्रकरणादेर तथात्वं सूचितम्. अत एव रूपकाणां नाटकं प्रधानं. तेषु च स्मरणमात्रेणाखिलार्थप्रापककथानायकनिबन्धनेषु प्रवणता आञ्जस्येन भवति. तथाच रामकथाश्रयस्यैव तथात्वं स्वारस्येन भवतीति निर्विचिकित्समेतत् । अतःखलु तत्रैव कवयः प्राचुर्येण प्रहतेऽपि भूरिशो यतन्ते; वक्ष्यति च "यदि क्षुण्णम्" इत्यादिना । तदाश्रयेष्वपीदमेव रूपकं प्रशस्यतमं भाति. अस्य सर्वथा निर्दोषत्वात् । तस्मादिदं बहुभिः व्याख्यातमपि प्रेक्षावतां व्याचिख्यासा न परिहीयत इत्यलं विस्तरेण.

एवं महाप्रयोजनं नाटकमुपक्रममाणश्च कविः पूर्वरङ्गस्य प्रधानाङ्गभूतां नान्दीमाह निष्प्रत्यूहामिति तदुक्तं. "यद्यप्यङ्गानि भूयांसि पूर्वरङ्गस्य नाटके । तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये;" इति ।

**निष्प्रत्यूहामिति** — कोकानां चक्रवाकाणां "कोकश्चक्रे वृके ज्येष्ठ्यां खर्जूरीद्रुमदर्दुरे" इति मेदिनी । प्रीतौ हर्षणे, चकोराणां जीवंजीवाख्यपक्षिणां "जीवंजीवश्चकोरकः" इत्यमरः । पारणे उपवासान्तभोजनसंपादने च पटु चतुरं "पटुर्दक्षेच नीरोगे चतुरेप्यभिधेयवत्" इति मेदिनी । ज्योतिः ययोस्ते । अत्र ज्योतिश्शब्दः सूर्याचंद्रमसौ लक्षयति "अग्निर्मूर्धाचक्षुषी चंद्रसूर्यौ" इति श्रुतेः । एतेन हिरण्यगर्भावस्थाऽत्र सूचिता । सर्वधनीत्यादिना "नकर्मधारयान्मतुप्" इत्यस्यानित्यत्वदर्शनात् पटुज्योतिष्मती इत्यस्य साधुता, यद्वा, ज्योतिरस्त्यनयोरिति-

ज्योतिष्मती नित्ययोगे मतुप्, सदा प्रकाशे इत्यर्थः पटुनी च ज्योतिष्मती चेति कर्मधारयः कोःपृथ्व्या मोदकः कुमोदको विष्णुः तस्येयं कौमोदकी गदा लक्ष्म चिन्हं यस्य तस्य, भगवतः ऐश्वर्यादिषाड्गुण्यवतः उत्पत्यादिज्ञानवतश्च "ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसःश्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भगइतीरणा" इति। "उत्पत्तिं च विनाशं च भूतानामागतिंगतिं। वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति।" इति च स्मरणात्, तस्य विष्णोः, तथाविधे लोचने निष्प्रत्यूहं विघ्नाभावाय 'अव्ययं विभक्ति' इत्यादिना प्रत्यूहशब्दस्यार्थाभावेऽव्ययीभावः ततः चतुर्थ्याः 'नाव्ययीभावात्' इत्यादिना अम्, 'विघ्नोऽन्तरायःप्रत्यूहः' इत्यमरः। उपास्महे चिंतयामः बहुवचनं सशिष्याभिप्रायं 'अस्मदो द्वयोश्च' इतिवा, ते विशिनष्टि याभ्यां लोचनाभ्यां कर्तृभ्यां इह यच्छब्दोपादानात् पूर्वत्र तच्छब्दः प्रयोक्तव्यइति ननियमः तस्य प्रायिकत्वात्, अर्धे भागे विबोधः प्रकाशः अर्धविबोधः तेन मुग्धा सौम्या "मुग्धः सौम्ये नवे मूढे" इति वैजयन्ती, अतएव मधुरा प्रिया 'स्वादुप्रियौ च मधुरौ' इत्यमरः श्रीः शोभा यस्य सः तथोक्तः इह 'गोस्त्रियोः।' इति ह्रस्वो न श्रीशब्दस्यास्त्रीप्रत्ययान्तत्वात्, अर्धं निद्रां आयितः प्रापितः अर्धनिद्रायितः अर्धनिद्रवत् आचरित इतिवा, इह चंद्रसूर्ययोः सान्निध्ययौगपद्येन विकाससंकोचयोः समवस्थां प्रापितइत्यर्थः, नाभीपल्वलस्य नाभिसरसः अत्ररूपकं पुण्डरीकमुकुळः श्वेतपद्मकुड्मलः "पुण्डरीकं सिताम्भोजम्" इत्यमरः "कंबोःशङ्खस्य 'कंबुर्नावलये शंखे' इत्यमरः सपत्नीकृतः सदृशः संपद्यमानःकृतः सपत्नशब्दादभूततद्भावे च्विर्दीर्घश्च। तस्य सादृश्यवाचित्वंचस्पष्टमुक्तंकाव्यादर्शे "प्रतिपक्षप्रतिद्वंद्वप्रत्यनीकाविरोधिनः—तस्यचानुकरोतीति शब्दाःसादृश्यवाचकाः" इति। सपत्नी कृत इति च पदद्वयं केचिदिच्छन्ति। तन्मते द्वादशपदेयं नान्दीत्येतन्न संगच्छेत "नान्दी पदैर्द्वादशभिरष्टाभिर्वाप्यलंकृता" इति तल्लक्षणात, तत्र च 'सुप्तिङंतंपदम्' इति पदत्वं केचिदिच्छन्ति। अन्ये तुपादएवपदमिति "न पदं पदमित्याहुः वाक्यार्थः पदमुच्यते" इति वचनात् वाक्यमेवपदमित्यपरे। सुप्तिङन्तंपदमितिपक्षेपि द्वादशभिरष्टाभिर्वेत्यत्र वाशब्दः विकल्पार्थ इत्येके। समुच्चयार्थ इत्यपरे। तत्र विकल्पपक्षमाश्रित्यानेन श्लोकेन द्वादशपदां नान्दीं रचयांबभूव। समुच्चयपक्षमप्यङ्गीकृत्य द्वितीयश्लोकेन विंशतिपदां नान्दीं चकार। पादः पदमिति पक्षेऽपि विकल्पपक्षाङ्गीकारेण द्वाभ्यां श्लोकाभ्यामष्टपदां नान्दीं च कृतवानिति बोध्यम्। इयं वाग्रूपा नान्दी। नान्दीश्लोके माङ्गल्यवाचकानि शङ्खादिपदानि प्रयोज्यानि उंक्त हि दशरूपके "माङ्गल्या शङ्खचन्द्राब्जकोककैरवशंसिनी" इति। अत्र कोकशब्दः शङ्खचन्द्राब्ज-

पर्यायशब्दाश्चोपात्ताः। अत्र प्रत्यूहपरिहाररूपाभिलषितार्थाशंसनादाशीर्नामालंकारः, तदुक्तं "आशीर्नामाभिलषिते वस्तुन्याशंसनं यथा" इति। अत्र नेत्रधर्मयोर्विबोधनिद्रयोः पुण्डरीकविकाससंकोचत्वेन प्रयोगात्समाधिर्नामगुणः। उक्तं च काव्यादर्शे "अन्यधर्मस्ततोऽन्यत्र लोकसीमानुरोधिना। सम्यग्विधयिते यत्र स समाधिः स्मृतो यथा" इति। वामनेन त्वयं वक्रोक्त्याख्यालंकार इष्यते "सादृश्याल्लक्षणावक्रोक्तिः" इति सूत्रितं च। अत्र बहवो गुणा वक्तव्याः सन्ति तथापि ग्रन्थविस्तरभियोपरम्यते। अत्र सर्वगुरोर्मगणस्योपादानाच्छुभत्वम्। वृत्तं शार्दूलविक्रीडितम्। तल्लक्षणं तु " सूर्याश्वैर्मसजास्ततास्सगुरवःशार्दूलविक्रीडितं " इति "अर्थतःशब्दतोवाऽपि मनाक्काव्यार्थसूचनम्" इति वचनात् काव्यार्थः किञ्चित्सूच्यते, अत्र भगवतः सीतारामाविवाहार्थं प्रयत्नं कुर्वतो विश्वामित्रस्येत्यर्थः, लक्ष्यतेऽनेन स्वर्गादिरिति लक्ष्म यागस्तस्य निष्प्रत्यूहं प्रत्यूहपरिहाराय प्रस्थितावितिशेषः कुमोदको दशरथःतस्यापत्ये कौमोदकी रामलक्ष्मणौ उपास्महे। अनेन प्रथमाङ्ककथा सूचिता। कः विष्णवंशभूतो रामः अकप्रीतिचकोरपा इति पदच्छेदः, अकं परदुःखं हिंसेतियावत्, तत्र प्रीयन्त इत्यकप्रियो राक्षसाः प्रीयतेः कर्त्तरि क्विप्, तेषां ईतौ हिंसायां चकोरान् तृप्यतः ऋषीनितियावत्, चकतृप्तावितिधातोरौणादिक ओरन्। तान् पातीति चकोरपाः। पातेः कं, बाधित्वा "अन्येभ्योऽपि दृश्यते" इति विच् विश्वपाशब्दवत्, अनेन द्वितीयाङ्ककथा सूचिता। रणपटुज्योतिष्मती लोचना ई इति पदच्छेदः ईलक्ष्म्यंशभूता सीता "राघवत्वेऽभवत् सीता" इति वचनात्। लोचना दीप्तिमती रलयोरभेदात्। रणपटु त्रिपुरयुद्धसमर्थं ज्योतिःप्रकाशं ऐशं धनुः ज्योतिःशब्दो लाक्षणिकोऽत्र, "मनोज्योतिः" इतिवत्। तत् पणत्वेन प्रशस्तमस्या इति रणपटुज्योतिष्मती एतेन तृतीयाङ्ककथा सूचिता। याभ्यां रामलक्ष्मणाभ्यां वनं प्रस्थिताभ्यामिति शेषः अर्धविबोधेन मूर्च्छादिना। मुग्धं यथा तथा। अघुरश्रीर्नष्टश्रीकोऽभूत् दशरथ इति शेषः। एतेन तुरीयाङ्ककथा सूचिता। अर्धनिद्रायितः वालिभयेन सम्यगकृतस्वापः सुग्रीव इत्यर्थः। स च। उकुलो विभीषणः स च तौ। ओः शिवस्य कुलमिव नामेव कुलं यस्येति विग्रहः। शिवस्यापि भीम इति नाम्ना सादृश्यं सूचितं। सपत्नीकृतः असपत्नं सपत्नं कृतवतः कंबोः कार्मुकात् सुग्रीवपक्षे वालिनः विभीषणपक्षे रावणात् ल्यब्लोपेपञ्चमी। तं निहत्येत्यर्थः कमेर्वुगित्यौणादिकोवुक् बाहुलकाद्ध्रस्वोऽपि जंबूशब्दवत्। नाभी प्रधानभूतौ तत्तद्राज्यं प्रापितावितियावत्। एतेन पञ्चमषष्ठाङ्ककथा सूचिता। सप्तमाङ्ककथातु पल्वलपुण्डरीकं पल्वलवद्विस्तीर्णं पुण्डरीकं श्वेतच्छत्रं "पुण्डरीकं सिताम्भोजे श्वेतच्छत्रे च भेष-

अपि च ।

**विरमति महाकल्पे नाभीपथैकनिकेतन-**
**स्त्रिभुवनपुनःशिल्पी यस्य प्रतिक्षणमात्मभूः ।**
**किमधिकरणं कीदृक्कस्य व्यवस्थितिरित्यसा-**
**वुदरमाविशद्द्रष्टुं तस्मै जगन्निधये नमः ॥ २ ॥**

---

जे" इति विश्वः । रामो दधारेतिशेषः इत्यनेन सूचिता ॥ १ ॥

**विरमतीति** । महांश्चासौ कल्पश्च महाकल्पः महाप्रलयः "आन्महतः" इत्यादिना महच्छब्दस्यात्वं तस्मिन् विरमति अवसानं गते सति "व्याङ्परिभ्यो रमः" इति रमेः परस्मैपदं । सृष्ट्यारम्भे सतीत्यर्थः यस्य विष्णोः नाभीपथः नाभीमार्गएव "ऋक्पूर" इत्यादिना पथिन्शब्दस्य समासान्तोऽप्रत्ययः एकनिकेतनं मुख्यवासस्थानं यस्य सः "एकेमुख्यान्यकेवलाः" इत्यमरः त्रयाणां भुवनानां समाहारः त्रिभुवनम् पात्रादित्वात् द्विगोरिति न ङीप् । तस्य पुनःशिल्पी भूयःस्रष्टा । शिल्पं कलाकौशलं ततो मत्वर्थीय इनिः । असावात्मभूर्ब्रह्मा कस्य किमधिकरणं क आश्रयः कस्य व्यवस्थितिरसाधारणस्वभावः कीदृक् कीदृक्छब्द एवं व्युत्पाद्यते केवेयमिति वा कामिवेमां पश्यंति जना इति वा केव दृश्यमानेति वा कामिवात्मानं पश्यतीति वा, कीदृक् एवं लिङ्गान्तरेपि तादृगित्यादिशब्दान्तरेऽप्यूह्यं । इत्येवं द्रष्टुं यस्य विष्णोः उदरं कुक्षिं प्रतिक्षणं प्रत्यवसरं "अव्ययं विभक्ति" इत्यादिना वीप्सायामव्ययीभावः । अविशत् प्रविष्टवान् । तस्मै जगन्निधये जगदाधाराय निश्चयेन धीयते धार्यतेऽनेनेति निधिः "उपसर्गे-घोः किः' इति निपूर्वाद्धाञः किः । नमः "नमःस्वस्ति" इत्यादिना चतुर्थी । **हरिणीवृत्तम्** । तल्लक्षणंतु "रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदा" इति अस्मिन्श्लोकेतु रावणवधादिकथा किंचित्सूच्यते । तथाहि । त्रिभुवनपुनःशिल्पी ब्रह्मायस्यात्मभूः यदुत्पत्तिकारणं तस्मिन्महाकल्पे रावणे विरमति हते नाभीपथैकनिकेतनः पुष्पकविमानेन आकाशमार्गमाश्रयन्सन् रामइतिशेषः "नाभ्या आसीदन्तरिक्षं" इति श्रुतेः कार्यकारणयोरभेदानिर्देशेन नाभीशब्दोऽत्रान्तरिक्षवाची. एवं प्रस्थितःसन् अधिकरणं अधिकारो राज्यतन्त्रं किं कथं वर्तते कस्य व्यवस्थितिः कीदृक् प्रकृतीनां राज्यांगभूतानां मर्यादाचकथं वर्तत इति. द्रष्टुं उदरमयोध्यां जन्मभूमित्वसामान्याल्लक्षणा. अविशत् पुनः प्रविष्टः तस्मै जगन्निधये इत्यनेनच राज्याभिषेकः सूच्यते ॥ २ ॥

( नान्द्यन्ते )

**सूत्रधारः**—भो भो लवणोदवेलावनालीतमालतरुकन्दलस्य त्रिभुवनमौलिमण्डनमहानीलमणेः कमलाकुचकलशकेलिकस्तूरिकापत्राङ्कुरस्य, भगवतः पुरुषोत्तमस्य यात्रायामुपस्थानीयाः सभासदः, कुतश्चिद्द्वीपादागतेन कलहकन्दलनाम्ना कुशीलवेन रौद्रबीभत्सभयानकरसभूयिष्ठं कमपि प्रबन्धमभिनयता नित्यं किलायमुद्वेजितो लोकः। तत्कस्यचिदभिमतरसभाजः प्रेक्षणकस्य प्रयोगानुज्ञया नाट्यवेदोपाध्यायबहुरूपान्तेवासी मध्यदेशीयः सुचरितो नाम भरतपुत्रोऽहं भवद्भिरनुगृह्ये यतः ॥

**नान्द्यन्तसूत्रधारइति** पूर्वरङ्गं प्रविष्टे सूत्रधारे नान्दीं पठित्वाऽवशिष्टं च पूर्वरङ्गकार्यं कृत्वा गते सति तत्सदृशोऽपरः सूत्रधारः प्रविश्य प्रस्तावनामुपक्रमत इत्यर्थः। उक्तञ्च दशरूपके "पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते। प्रविश्य तद्वदपरःकाव्यमाख्यापयेन्नटः" इति। सूत्रधारलक्षणं तु "आसूत्रयन् गुणान्नेतुः कवेरपि च वस्तुनः। रङ्गप्रसादनप्रौढः सूत्रधार इहोच्यते" इति। आहेतिशेषः। भो इति भो भोः सभासदो हे सभ्याः "सत्सू" इत्यादिना सदेः क्विप्। संबोधनं प्ररोचनयाऽभिमुखीकरणार्थम्। प्ररोचनालक्षणं तु "निवेदनं प्रयोज्यस्य निर्देशो देशकालयोः। काव्यार्थसूचकैः शब्दैः सभायाश्चित्तरञ्जनम्। कविकाव्यनटादीनां प्रशंसा च प्ररोचना।" इति। लवणोदवेलायां लवणसमुद्रतीरे "उदकस्योदःसंज्ञायाम्" इत्युदकशब्दस्योदादेशः वनाल्यां वनसमूहे तमालतरुकन्दलस्य तापिञ्छवृक्षनवाङ्कुरभूतस्य तद्वत्सुभगस्येत्यर्थः, "कन्दलंतु नवाङ्कुरे" इति धरणिः। यद्वा। लवणोदवेलैव वनाली तस्याः तमालतरोः कन्दलमिति रूपकम्। त्रिभुवनस्य मौलिश्चूडा किरीटं वा "चूडाकिरीटं केशाश्च संयता मौलयस्त्रयः" इत्यमरः तस्य मण्डनमलंकारभूतः महानीलमणिः मरकतरत्नं तस्य। इदमपिरूपकम्। कमलाकुचकलशयोर्लक्ष्मीस्तनकुंभयोः केल्यर्थं क्रीडार्थं कस्तूरिकाङ्कुरस्य मृगमदमयस्य मकरादिरचनाविशेषस्य। एतेन विशेषणत्रयेण नीलत्ववर्णनेन सह सुभगत्वाविकार्यत्वसुगन्धित्वगुणाः भगवत्स्वरूपस्य सहजा इति दर्शितं। भगवतः षाड्गुण्यपरिपूर्णस्य पुरुषोत्तमस्य महाविष्णोः उत्तमश्चासौ पुरुषश्चेति कर्मधारयः "उत्तमः पुरुषस्त्वन्यः.परमात्मेत्युदाहृतः" इति स्मरणात्। पुरुषेषूत्तम इति वा। तस्य यात्रायामुत्सवे "यात्रातु यापनोपाये गतौ देवार्चनोत्सवे" इतिविश्वः। उपस्थनी-

प्रीतिर्नाम सदस्यानां प्रिया रङ्गोपजीविनाम् ।
जित्वा तदपहर्तारमेष प्रत्याहरामि ताम् ॥ ३॥

(आकाशे कर्णं दत्वा ।) किं ब्रूथ । 'वैदेशिको भवानसमग्रपात्रः कथमीदृशे कर्मणि

---

याः उपस्थिताः मिलिता इत्यर्थः । 'भव्यगेय' इत्यादिना निपातनात्कर्तर्यपि कृत्यः । भवन्तइतिशेषः एवंभूता हे सभासद इति संबोधनं विशेषणं वा । मद्विज्ञापनं शृणुतेत्यर्थः । तदेवाह कुतश्चिद्द्वीपाद्दक्षिणद्वीपात् आगतेन कलहकन्दलनाम्ना तन्नामकेन, अन्वर्थसंज्ञाचेयं, तेन रावणस्यापि ध्वनिः । कुशीलवेन गायकेन कुत्सितं शीलं वाति गच्छतीति दुःशीलेनेति चार्थः रौद्रेण उग्ररसेन बीभत्सेन विकृतरसेन भयानकेन घोररसेन च भूयिष्ठं प्रचुरं तत्प्रायमित्यर्थः कमपिप्रबन्धं, नाटकं अभिनयता प्रयुञ्जानेन तेन गायकेन सर्वोऽप्ययं लोकः नित्यमुद्वेजितो भीषितः किल । तत्तस्माद्धेतोः अभिमतरसं शृंगारादिरसं भजतीत्यभिमतरसभाक् तस्य "भजोण्विः" प्रेक्षणकस्य नाटकस्य प्रयोगानुज्ञया प्रयोगानुमत्या नाट्यवेदोपाध्यायस्य नाट्यशास्त्रोपदेष्टुः बहुरूपेष्वनेकनाटकेषु अन्तेवासी शिष्यः "शयवासवासिष्वकालात्" इति सप्तम्या अलुक् "रूपं स्वभावे सौन्दर्ये नाटके पशुशब्दयोः" इति विश्वः नाट्याचार्यमुख्यादभ्यस्तनानाविधाभिनय इत्यर्थः । मध्यदेशीयो हिमवद्विन्ध्ययोर्मध्यदेशे भवः । एतेन तस्यार्यावर्तजन्यत्वाच्छ्लाघ्यत्वं दर्शितम् भरतस्य (भावरागतालज्ञस्य) नटस्य पुत्रः तदुक्तम् "भकारो भाववाची स्यात् रकारो रागवचकः । तकारस्तालवाची स्यात्त्रयं भरतं विदुः" इति । तद्भरतं प्रशस्तमस्यास्तीति भरतः अर्श आद्यच् "भरतो नाट्यशास्त्रे च दौष्यन्तौ शबरे नटे"। इति विश्वः । तादृशोऽहं भवद्भिर्युष्माभिः अनुगृह्यै अनुगृहीतो भवानि कर्मणि लोट् । यतो यस्माद्धेतोः । प्रीतिरिरिति । सदसि साधवः सदस्याः सभ्यास्तेषां प्रीतिर्नाम प्रियमेव रङ्गोपजीविनां नटानां प्रिया इष्टा । तस्मादेषोऽहं तदपहर्तारं तत्प्रीत्यपहारिणं कलहकन्दलं जित्वापरिभूय तां प्रीतिं प्रत्याहरामि प्रत्यानेतुमाशंसे "आशंसायां भूतवच्च" इति भविष्यति लट् । अत्र प्रियाहरणोक्त्या रावणेन तामहरणं एष प्रत्याहरामीत्यनेन तस्याः प्रत्यानयनाय रामोत्साहरूपबीजं च सूचितम् ॥ ३ ॥

आकाश इति । "किं ब्रवीषीति यन्नाट्ये विनापात्रं प्रयुज्यते । श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितं ॥" इति तल्लक्षणाद्यत्र व्यक्तिं विना श्रुत्वेव

प्रगल्भते' इति । ( विहस्य । सप्रश्रयमञ्जलिं बध्वा । ) हन्त भोः, किमेवमुदीर्यते । भवद्विधानामाराधने प्रवृत्तिरेव मे पात्राणि समग्रयिष्यति । यतः ।

**यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् ।**
**अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ४ ॥**

---

प्रयोगस्तत्राकाशे कर्णं दत्वेति नाटके प्रयुज्यते । वैदेशिक इत्यारभ्य प्रगल्भत इत्यन्तं सभ्यवचनानुवादः विदेशे देशांतरे भवो वैदेशिकः । अध्यात्मादेराकृतिगणत्वाट्ठञ् । असमग्रपात्रोऽसंपूर्णसामग्रीकः ईदृशे ऽपहृतप्रत्यानयनरूपे कर्मणि कथं प्रगल्भते धृष्णोति इति किंब्रूथेति योजना । युष्मद्युपपद इति प्रथमपुरुषः । विहस्येति । कथं एतेऽपि न जानत इति हासं कृत्वा । सप्रश्रयं विनयेन सह । अञ्जलिबन्धपूर्वकं सूत्रधार आहेति शेषः । सर्वत्र च क्रियाऽभावे आहेत्यध्याहार्यम् । हन्तेति कथमेभिरप्येवमुच्यत इति खेदे । यद्वा । समग्रपात्रोऽहामेति हर्षे । यद्वा । मद्व्यवसायो नान्यथा स्यादिति निश्चये "हन्तदानेऽनुकम्पायां वाक्यारम्भविषादयोः । निश्चये च प्रमोदे च" इति हैमः । किमेवमुदीर्यते मम सामग्र्यसंपत्तिं कथं मन्त्रयन्ते भवन्त इति भावः । तर्हि तत्संपादनं कुत इत्यत आह भवद्विधानामाराधने पूजने प्रवृत्तिर्व्यवसाय एव मे मम पात्राणि नाट्यसामग्रीः समग्रयिष्यति समग्रशब्दात्तत्करोतीति णिच् । तदेवान्वयव्यतिरेकाभ्यामाह. **यान्तीति** । अध्यायन्याय इत्यादिना निपूर्वादिणः नियन्त्यनेनेति न्याय इतिरूपं निपात्यते । तत्र प्रवृत्तस्य धार्मिकस्येति यावत् तिरोऽञ्चन्ति गच्छन्तीति तिर्यञ्चस्तिर्यक्स्रोतसो मृगादयः "तिरसस्तिर्यलोपे" इति तिर्यादेशः तेऽपि सहायतामनुचरत्वं यान्ति गच्छन्ति एवमन्वयमुक्त्वा व्यतिरेकमाह न पन्थाः अपन्थास्तमपन्थानं अत्र नञा स्वाश्रयसदृशप्रतियोग्युच्यते नञः तथाविधार्थस्यापि स्मृतत्वात् " तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्तिताः ।" इति । तेन दुर्मार्गमित्यर्थः पथो विभाषेतिविकल्पितत्वान्न समासान्तः अत एव च अपथं नपुंसकमिति न क्लीबत्वम् । गच्छन्तं तु तुशब्दः पूर्वतो भेददर्शनाय सह सदृशं उदरं यस्य स सोदरः 'वोपसर्जनस्य' इति सहस्य सः भ्रातापि विमुञ्चति परित्यजति " शे मुचादीनां " इति मुचेर्नुम् । किमुतान्य इत्यपेरर्थः अनेन धार्मिकस्य रामस्य वानरा अपि सहाया बभूवुः दुर्मार्गगामिनं रावणं तु विभीषणोऽपि त्यक्तवानिति सूच्यार्थसूचनान्मुद्रालंकारः "सूच्यार्थसूचनं मुद्रा प्रकृतार्थ-

(पुनराकाशे कर्णं दत्वा) किं ब्रूथ । ' तर्हि प्रहितेयमस्माभिः पत्रिका ' इति

( प्रविश्य नटः पत्रिकां ददाति । सूत्रधारो गृहीत्वा वाचयति । )

यत्र सर्वपुरुषार्थस्यन्दिनि

चेतःशुक्तिकया निपीय शतशः शास्त्रामृतानि क्रमा-
द्वान्तैरक्षरमूर्तिभिः सुकविना मुक्ताफलैर्गुम्फिताः

परैः पदैः" इति तल्लक्षणात् । यत एवं तस्मात् सामग्र्यसंपत्तिशङ्कां मा कुरुतेति भावः ॥ ४ ॥

तर्हीति । पात्रसंपत्या भवान् नाटकप्रयोगे समर्थश्चेत् तदर्थं अस्माभिः सदस्यैः इयं पत्रिका प्राहिता प्रेषिता नटद्वारेतिशेषः । पत्रिकासूचितं नाटकं अभिनेतव्यमिति भावः । वाचयति पठति चौरादिकोऽय धातुः । यत्रेत्यारभ्य त्वरामहे इत्यन्तः पत्रिकार्थः । सर्वपुरुषार्थानां धर्मादीनां रसभावादीनां च. स्यंदिनि प्रवहणशीले ताच्छील्ये णिनिः यत्र यस्मिन्सन्दर्भे । चेत इति — शास्त्रामृतानि शास्त्रजलानि 'पयः कीलालममृतम्' इत्यमरः अत्र रूपकम् एवमुत्तरत्रापि चेतःशुक्तिकया स्वान्तमुक्तास्फोटेन करणेन शतशो बहुवारं निपीयनितरांपीत्वा पीङ्पान इति दैवादिकधातोः रूपं निपीयेति नतु पिबतेः । तस्य त निपायेत्येव रूप अंतरङ्गस्यापीत्वादेर्बहिरंगेणापि ल्यपा बाधस्यज्ञापितत्वात् "हिप्रभृतींस्तु सदाबहिरङ्गोल्यब्भरति" इति भाष्यम् । वान्तैः- स्फुटितैः अन्यत्र प्रकाशितैः इह वान्तशब्दस्य गौणार्थकत्वान्नग्राम्यता अपितु चारुतैव उक्तहिकाव्यादर्शे ॥ 'निष्ठचूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरमन्यत्र ग्राम्यकक्ष्यां विगाहते " इति अक्षरमूर्तिभिर्वर्णरूपैः अविक्षतस्वरूपैश्च मुक्ताफलैः मौक्तिकैः मुक्तमफलं वैयर्थ्यं यैस्तैश्च करणैः सुकविना कर्त्रा क्रमाद्यथाक्रमं गुम्फिताः ग्रथिताः क्रमादित्यस्य यथोद्देशं वा संबंधः क्रमाद्वान्तैरिति । उन्मीलतो जैत्रस्य भास्वरस्य वा कमनीयस्य स्पृहणीयस्य नायकस्य नेतुः कथाशरीरभूतस्येति यावत् गुणग्रामस्य गाम्भीर्यादिगुणसमूहस्य उपसंवर्गणेन गुम्फनेन प्रौढा अधिका अलंकृतिः शोभा यासां ताः हारपक्षे तु उन्मीलन्कमनीयश्च नायकः मध्यमणिः यस्मिंस्तस्य गुणग्रामस्य तन्तुसमुदायरूपसूत्रस्येतिविग्रहः अन्यत्समानं "नायकोनेतरिश्रेष्ठेहारमध्यमणावपि" इति विश्वः । एवंविधाः हारस्रजः हारोव्याहारः तद्रूपाःस्रजइति रूपकं सुदृशां विवेकिनांस्त्रीणांच सुष्ठुपश्यंतीति शोभनादृक्यासामितिचविग्रहः कण्ठेषु कण्ठस्थानेषुग्रीवासुच लुठन्तिधृताः परिवेष्टिताश्च भवन्ति ( इ ) शार्दू-

उन्मीलत्कमनीयनायकगुणग्रामोपसंवर्गण-
प्रौढालंकृतयो लुठन्ति सुदृशां कण्ठेषु हारस्रजः ॥ ५ ॥
तस्मै वीराद्भुतारंभगंभीरोदात्तवस्तवे
जगदानन्दकन्दाय संदर्भाय त्वरामहे ॥ ६ ॥'

इति (विमृश्य सहर्षस्मितं ।) मारिष, रामायणमिति शृणोषि तत्रभवतः

---

लविक्रीडितं नायकलक्षणंतु "महासत्वोतिगंभीरःक्षमावानविकत्थनः । स्थिरोानिगूढाहंकारोधीरोदात्तोदृढव्रतः" इति । एतद्धीरोदात्तलक्षणम् । तस्यैवात्र प्रकृतत्वात्तन्मात्रंदर्शितं ॥ ५ ॥

**तस्मा इति**— वीराणामद्भुत आश्चर्यकरः आरम्भ उपक्रमो यस्य तादृराद्भुतारम्भं, (एतेन ताटकावधादिपरशुरामभङ्गान्ता कथा सूचिता) गम्भीरं 'यस्य प्रभावादन्तःस्थाः शोकहर्षादयो बहिः । देहस्था नोपलभ्यन्ते तद्गाम्भीर्यमुदाहृतम् ।' इत्युक्तलक्ष्मणगाम्भीर्यविशिष्टम् । (एतेन वनयात्रादिजटायुवधान्ता कथा सूचिता ।) उदात्तं 'आशयस्य विभूतेर्वा यन्महत्वमनुत्तमम् । उदात्तं नाम तत्प्राहुरनेकगुणसंश्रयम् ।' इत्युक्तलक्षणगुणविशिष्टम् । (एतेनोत्तरकथा सूचिता ।) एवंविधं वास्त्वितिवृत्ताख्यं कथाशरीरं यस्मिंस्तस्मै जगतः आनन्दकन्दाय तद्धेतुभूताय तस्मै संदर्भाय तादृशं प्रबन्धं द्रष्टुं 'क्रियार्थोपपदस्य च' इत्यादिना चतुर्थी त्वरामह उत्सुकाः स्मः ॥ कथाशरीरं च द्विविधमाधिकारिकं प्रासङ्गिकं चेति । पताका प्रकरी चेति प्रासङ्गिकमपि द्विविधम् । आधिकारिकत्वं नाम मुख्यत्वम् । उक्तं च दशरूपके 'तत्राधिकारिकं मुख्यमङ्गं प्रासङ्गिकं विदुः'। इत्यादि । तद्विनियोगं तत्र तत्र यत्किंचिद्दर्शयिष्यामः अत्र गूढार्थवर्णनाऽऽलिकापरपर्यायप्रहेलिका नाम वीथ्यङ्गमुक्तम् । 'सोपहासा निगूढार्था नालिकैव प्रहेलिका ।' इति तल्लक्षणात् ॥ ६ ॥

इतिशब्दः पत्रिकार्थसमाप्त्यर्थः । सहर्षस्मितमिति गूढस्यापि पत्रिकार्थस्य स्वेनावगतत्वाद्धर्षः तत्प्रयुक्तं स्मितं च ताभ्यां सह । मारिषेति पारिपार्श्विकं प्रति सूत्रधारसंबोधनम् । 'भावोऽनुगेन सूत्री च मार्षेत्येतेन सोऽपि च ।' इत्युक्तत्वात् । मार्ष एव मारिषः । तल्लक्षणं तूक्तं भावप्रकाशे—'भरतेनाभिनीतं यो भावं नानारसाश्रयम् । परिष्करोति पार्श्वस्थः स भवेत्पारिपार्श्विकः । ' इति । तत्रभवतः पूज्यस्य 'इतराभ्योऽपि दृश्यते' इति पञ्चमीसप्तमीभिन्नविभक्तिभ्योऽपि भवच्छब्दयोगे तसिलादिविधानात् । इह षष्ठ्यर्थे त्रल्, एवमन्यत्रापि ॥

कवित्वावतारप्रथमतीर्थस्य वल्मीकिजन्मनो मुनेः सरस्वतीनिर्यासो यशःशरीरमिक्ष्वाकूणां ।

**नटः**—अथ किम् ।

**सूत्रधारः**—तत्प्रतिबद्धप्रबन्धानुबन्धिनी परिषदाज्ञा ।

**नटः**—(विहस्य ।) अहो, सकलकविसार्थसाधारणी खल्वियं वाल्मीकीया सुभाषितनीवी ।

---

'श्लाघ्ये तत्रभवन्मुखाः ।' इति त्रिकाण्डशेषः । कवित्वावतारस्य ब्रह्मलोकात्साहित्यावतरणस्य प्रथमतीर्थस्य प्रथमगुरोः प्रथमक्षेत्रस्य वा 'तीर्थं शास्त्राध्वरक्षेत्रोपायनारीरजःसु च ।अवतारर्षिजुष्टाम्बुपात्रोपाध्यायमन्त्रिषु।' इति मेदिनी वल्मीकतो नाकुतो जन्म यस्य तस्य, नच वल्मीको नाम कश्चिदृषिरिति मन्तव्यम् । भृगुपुत्रस्य प्रचेतसः पुत्रोऽयम् । 'चक्रे प्रचेतसः पुत्रः' इति वचनात् । वक्ष्यति च 'आचार्यं प्राचेतसम्' इति । ननु तर्हि कथं वाल्मीकिरितीअन्तं रूपं, तस्यापत्याविषयत्वादिति चेत् । सत्यम् । पुरा किल तपस्यतोऽस्य मुनेः शरीरे वल्मीकमवर्धत, ततश्च कालान्तरे सप्तर्षिभिरनुगृहीतस्य वर्षधाराप्लाविताद्वल्मीकादागतस्य वाल्मीको वाल्मीकिरिति च नामद्वयम् । उक्तंच 'वल्मीकान्निर्गतश्चाहं नीहारादिव भास्करः । मामथाहुर्मुनिगणा वाल्मीकिस्त्वं मुनीश्वर । वल्मीकाज्जन्म ते यस्माद्द्वितीयं जन्म तेऽभवत् ॥'इति । इञ् त्वपत्यत्वोपचाराद्बाह्वादित्वाद्वा । मुनेर्मननशीलस्य 'मननान्मुनिरुच्यते' इति स्मरणात् । सरस्वतीनिर्यासश्छन्दोरूपवाङ्निष्यन्दः । 'श्लोक एव निबद्धोऽयं भवता नात्र संशयः। मच्छन्दादेव वाल्मीके त्वयि जाता सरस्वती ।' इति ब्रह्मवचनात् । इक्ष्वाकूणामिक्ष्वाकुवंश्यानां राज्ञां इक्ष्वाकुशब्दस्य तद्राजत्वादापत्यकस्याञो बहुषु लुक् । यशःशरीरं तस्य शरीरवत्प्रत्यक्षग्राह्यत्वात् । उक्तं च काव्यादर्शे—, आदिराजयशोबिम्बमादर्शं प्राप्य वाङ्मयम् । तेषामसंनिधानेऽपि न स्वयं पश्य नश्यति ।' इति । ईर्यते गम्यते ज्ञायतेऽनेनेत्ययनं रामस्यायनं रामायणं 'पूर्वपदात्संज्ञायाम्' इति णत्वम् । इतिशब्दः प्रसिद्धिवाचकः । अथकिमित्यङ्गीकारे तत्प्रतिबद्धस्य रामायणकथासंबद्धस्य प्रबन्धस्य नाटकस्य अनुबन्धिन्यनुवर्तिनी । अनेन कथाशरीरस्य प्रख्यातत्वं सूचितम् । विहस्यातिप्रहत एवाभिनवइवैषामौत्सुक्यमिति विहसनं कृत्वा । अहो इति विस्मये । सकलकवीनां सार्थस्य सङ्घस्य साधारणी साधारणभूता समानमाधारणमाधारोऽस्या इति साधारणी टित्वान्ङिप् । साधारण-

**सूत्रधारः**—मारिष, किमुच्यते ।

अपिकथमसौ रक्षोराजस्तताप जगत्त्रयी-
मपिकथमभूदिक्ष्वाकूणां कुले गरुडध्वजः ।
अपिकथमृषेर्दिव्या वाचः स्वतः प्रचकाशिरे
सुचरितपरीपाकः सर्वप्रबन्धकृतामयम् ॥ ७ ॥

तत्रापि तावन्निरूपयामि रूपकमभिरूपमीदृशम्। (मुहूर्तमिव स्थित्वा।स्मरणमभिनीय। सोल्लासम्) अस्ति मौद्गल्यगोत्रसंभवस्य महाकवेर्भट्टश्रीवर्धमानतनुजन्मनस्तन्तु-

---

शब्दादजन्तान्ङीबिति रुचिपत्युक्तिस्तु चिन्त्यैव । इयं रामायणाख्या सुभाषितनीवी सुशब्दमूलद्रव्यं 'नीवी स्त्रीकटिबन्धने । मूलद्रव्ये परिपणे 'इति हैमः । तस्मान्नातिमनोहर एषामाशय इति भावः । एतेन मृदवं नाम वीथ्यङ्गमुक्तं, सकलकविकुलोपजीव्यस्य सर्वसाधारणत्वरूपदोषारोपात् । 'दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तत्' इति तल्लक्षणात् । किमुच्यतइत्येवं न वक्तव्यमित्यर्थः ।

अपीति— असौ रक्षोराजो रावणः जगत्त्रयीं त्रिलोकीं त्रगशब्दात् 'टिड्ढाणञ्' इत्यादिना ङीप् । अयचः स्थानिवद्भावेन तयबन्तत्वात् । द्विगोरिति ङीबिति रुचिपत्युक्तिस्तु रभसात् । द्विगुत्वस्यैवात्राभावात् स्वत इति तृतीयपादस्थपदं पूर्वपादद्वयेऽपि संबध्यते । स्वतः स्वयमेव स्वशब्दात्सार्वविभक्तिकस्तसिः । अपिकथं ततप, काक्वा तापं न कृतवानेवेत्यर्थः अपिकथमिति ज्ञातहेतुविवक्षायां उक्तं च 'ज्ञातहेतुविवक्षायामप्यादिकथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरवबाढयोः।' ।इति तापिरन्तर्भावितण्यर्थः । गरुडध्वजो विष्णुः इक्ष्वाकूणां कुले स्वतः अपिकथमभूत् स्वेच्छया न बभूवेत्यर्थः । ऋषेर्वाल्मीकेः दिव्या दिवि भवा अमानुष्य इत्यर्थः 'द्युप्राक्' इत्यादिना यत् । गिरश्छन्दोरूपा वाचः स्वतोऽपिकथं प्रचकाशिरे स्वयमेव नाविर्बभूवुरेवेत्यर्थः । कथं तर्हि तेषां सद्भाव इत्यत आह सर्वेषां प्रबन्धकृतां कवीनामपि सुचरितपरिपाकः पूर्वपुण्यपरिणाम एव अयमेवं रावणकृतलोकपीडादिरूपो जात इति शेषः । अयं भावः समस्तकविकुलपूर्वपुण्यवशादेव तुच्छस्यापि रावणस्येन्द्रादिहिंसासामर्थ्यम्, ततश्च लीलाकैवल्यन्यायेन संकल्पमात्रेण सृष्ट्यादिकारिणोऽपि स्वतो भावविकाररहितस्यापि भगवतो रघुकुलेऽवतारादि, ततश्च वाल्मीकिमहर्षेर्विनैवाभ्यासश्रमं तद्गुणवर्णने निरर्गलसरस्वतीप्रसादः, तस्मात्सर्वसाधारणत्वं युक्तमेव नायं दोषोऽतः परिषदाज्ञातीव युज्यत इति भावः ॥ ७ ॥

पुनरपि प्रोत्साहयति तत्रापीत्यादिना । तत्रापि रामकथाश्रयप्रबन्धेष्व-

मतीनन्दनस्य मुरारेः कृतिरभिनवमनर्घराघवं नाम नाटकम् । तत्प्रयुञ्जानाः सामाजिकानुपास्महे । (विचिन्त्य सहर्षम् ।) अहो, रमणीया खल्वियं सामग्री परिषदाराधनस्य । यतः ।

**मद्वर्ग्या रसपाठगीतिगतिषु प्रत्येकमुत्कर्षिणो**
**मौद्गल्यस्य कवेर्गभीरमधुरोद्गारा गिरां स्यूतयः ।**

---

पि । तावत्साकल्येन । अभिरूपं मनोज्ञम् । ईदृशं सदस्योदाहृतगुणभूयिष्ठम् । रूपकं नाटकम् । 'यथा मुखादौ पद्मादेरारोपे रूपकप्रथा । तथैव नायकारोपे नटे रूपकमिष्यते ।' इत्युक्तनिर्वचनम् । निरूपयामि पर्यालोचयामि । सोल्लासं सहर्षम् । स्मृतं रूपकमाह—अस्तीति । मौद्गल्यगोत्रसंभवस्य तन्नामकवंशजस्य तत्प्रवरस्य वा, महाकवेर्महाकाव्यकर्तुः, भट्टस्य पुज्यस्य चतुर्दशकलाभिज्ञस्य वा श्रीमतो वर्धमानाख्यस्य तनुजन्मा पुत्रस्तस्य, तन्तुमतीति तन्मातुर्नाम । मुरारेस्तन्नामधेयस्य । कृतिः रचनाविशेषः । अभिनवमितः पूर्वमनभिनीतं, नाटकमस्तीति योजना । प्रयुञ्जाना अभिनयन्तः । 'प्रोपाभ्यां युजेरयज्ञपात्रेषु' इत्यात्मनेपदम् । समजन्ति सङ्घीभवन्त्यस्मिन्निति समाजः तं समवयन्तीति सामाजिकास्तान् । 'समवयान् समवैति' इति ठक् । उपास्मह आराधयामः 'पूर्वरङ्गे सभापूजा कवेर्गोत्रादिकीर्तनम् । नाटकादेस्तथा नाम सूत्रधारोऽप्यथामुखम् ।' इत्युक्तेः कविगोत्रादिस्तोत्रं कृतम् । सामग्री पात्रादिसाधनसंपत्तिः । रमणीया खलु मम पुष्कलैवेत्यर्थः । तदेव विशदयति मद्वर्ग्या इति—मम वर्गे भवा मद्वर्ग्याः 'अशब्दे यत्खावन्यतरस्याम्' इति पाक्षिको यत् । रसे शृङ्गारादिहेतुकसात्त्विकाभिनये, पाठे वाचिकाभिनये, गीतावाङ्गिकाभिनये, गतावाहार्याभिनये च, प्रत्येकमेकैकस्मिन्, वीप्सायामव्ययीभावः । एकैकोऽपीति वा, उत्कर्षिणोऽभ्यासदार्ढ्याच्छ्रैष्ठ्यं गताः, अत्र 'भवेदभिनयोऽवस्थानुकारः स चतुर्विधः । आङ्गिको वाचिकश्चैवमाहार्यः सात्त्विकस्तथा' ॥ इत्यभिनयस्य चातुर्विध्यम् । तत्राङ्गिको गीतिः सोऽपि चतुर्विधः — 'अङ्गेनालिङ्गयेद्गीतं हस्तेनार्थप्रदर्शनम् । चक्षुर्भ्यां भावयेद्भावं पादाभ्यां तालनिर्णयः ।' इत्युक्तेः । वाचिकः पाठः । सत्वेन (मनसा) निर्वृत्ताः सात्त्विकाः शृङ्गारादिरसाः 'स्तम्भप्रलयरोमाञ्चाः स्वेदो वैवर्ण्यवेपथू । अश्रु वैस्वर्यमित्यष्टौ सात्त्विकाः परिकीर्तिताः ।' इत्युक्ताः पारिशेष्यात्साहचर्याच्च गतिशब्देनाहार्याभिनय उक्तः । आहार्यो नाम कृत्रिमवेषेणान्यप्रकारानुकरणं, गतशब्दस्यापि 'हरतेर्गतताच्छील्ये' इत्यत्र तादृगर्थस्य

धीरोदात्तगुणोत्तरो रघुपतिः काव्यार्थबीजं मुनि-
र्वाल्मीकिः फलति स्म यस्य चरितस्तोत्राय दिव्या गिरः ॥ ८ ॥

अयं तु प्राचेतसीयं कथावस्तु बहुभिः प्रणीतमपि प्रयोक्ष्यमाणो नापराध्यति श्रोत्रियपुत्रः । पश्य ।

यदि क्षुण्णं पूर्वैरिति जहति रामस्य चरितं
गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः ।

---

स्मरणात् । मौद्गल्यस्य कवेर्मुरारिकवेः गिरां स्यूतयो वाग्रचनाविशेषाः 'षिवु तन्तुसंताने' इति धातोः क्तिन्यूठि च रूपं स्यूतिरिति । गभीराश्च मधुराश्च उद्गारा गुम्भनानि यासां तथाविधाः भवन्तीति शेषः । 'ध्वनिमत्ता तु गाम्भीर्यम्' 'बन्धे पृथक्पदत्वं च माधुर्यमुदितं बुधैः ।' इत्युक्तलक्षणगाम्भीर्यमाधुर्यविशिष्टा इत्यर्थः । धीरोदात्तगुणेन उत्तर उत्कृष्टः 'उत्तरं प्रतिवाक्ये स्यादूर्ध्वोदीच्युत्तमेऽन्यवत्' इति विश्वः धीरोदात्तलक्षणं तु पञ्चमश्लोके व्याख्यातं । रघुपती रामः काव्यार्थस्य नाटकाभिधेयस्य रसभावादेः बीजं हेतुः, काव्यार्थभूतं बीजमिति वा तस्यैवातिप्रख्यातत्वसूचनायाहमुनिर्मननशीलः एतेन तदुक्तार्थस्य याथातथ्यं सूचितम् । वाल्मीकिः यस्य रामस्य चरितस्तोत्राय चरितं स्तोतुं दिव्या गिरोऽमानुषीश्छन्दोमयीर्वाचः फलति स्म प्राप्तवान् तादृशो रामः काव्यार्थबीजमिति संबन्धः । यद्वा । वाल्मीकिर्दिव्या गिरो यस्य चरितस्तोत्राय फलति स्म यत्स्तोत्रेण स्वगिरः कृतार्थयामासेत्यर्थः । यद्वा । यस्य चरितस्तोत्राय फलति स्म कवीनामितिशेषः, कवीना गिरो रामचरितस्तोत्रार्हाः कृतवानित्यर्थः । 'फल निष्पत्तौ' इति धातोः प्राप्तिरेवार्थो गम्यते तथापि धातूनामनेकार्थत्वादर्थान्तरेऽपि वृत्तिः । एतत्प्ररोचना नाम वीथ्यङ्गम् । लक्षणं तूक्तम् । ॥ ८ ॥

तस्य बहुभिर्बहुधा व्याख्यातत्वेऽपि पुनस्तत्प्रयोगे पिष्टपेषणदोषो नावतरतीति वक्तुमाहायमित्यादि । श्रोत्रियस्याधीतवेदस्य पुत्रः 'श्रोत्रियंश्छन्दोऽधीते' इति निपातनात्साधुः । अयं मुरारिः प्राचेतसीयं वाल्मीकिप्रोक्तं बहुभिः कालिदासादिकविभिः प्रणीतं व्याख्यातमपि । कथावस्तु कथानायकस्य रामस्य चरितं प्रयोक्ष्यमाणः स्वग्रन्थगोचरं करिष्यमाणः सन् नापराध्यत्यपराधार्हो न भवति अकर्मकोऽयं धातुस्तर्ह्येवास्य श्यनो विधानात् । तत्र हेतुमाह यदीति—रामस्य चरितं पूर्वैर्वाल्मीकिप्रभृतिभिः कविभिः क्षुण्णमिति प्रहतमित्येवमाभिप्रेत्य, कवय आधुनिकाः यदि जहति त्यजन्ति चेत्, जगति लोके कः पुनरन्यो रा-

**स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुर-**
**स्फुरद्वाग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः ॥ ९ ॥**

उपक्रममाणश्च स कविः स्वनिर्भासितशब्दब्रह्माणमाचार्यं प्राचेतसं, गिरां च देवतामेवमुपश्लोकितवान् ।

**तमृषिं मनुष्यलोकप्रवेशविश्रान्तिशाखिनं वाचाम् ।**
**सुरलोकादवतारप्रान्तरखेदच्छिदं वन्दे ॥ १० ॥**
**धातुश्चतुर्मुखीकण्ठशृङ्गाटकविहारिणीम् ।**
**नित्यमगल्भवाचालामुपतिष्ठे सरस्वतीम् ॥ ११ ॥**

---

मादिति शेषः एतावद्भिर्गुणैः शौर्यगाम्भीर्यादिभिः जयत्युत्कर्षं प्राप्नोति रामसदृशगुणो न कोऽपि पुमानस्त्यत एव सर्वेऽपि तं स्तुवन्तीति भावः। ननु स्तुत्यान्तराभावे तूष्णीं स्थीयतां, किं चर्वितचर्वणवत्स्तुतस्यैवस्तुतिः क्रियत इत्याशङ्क्य 'प्रतिष्ठां काव्यबन्धस्य यशसः सरणिं विदुः ।' 'उपश्लोक्यस्य माहात्म्यादुज्ज्वलाः काव्यसंपदः ।' इति चाभियुक्तवचनात्स्वात्मनो यशोरूपोपकारस्यान्यथाऽसिद्धिव्यतिरेकेणाहोत्तरार्धेन, तेन तेन गुणानामोजःकान्त्यादीनां गरिम्णा गौरवेण गुरुशब्दस्य 'प्रियस्थिर' इत्यादिना इमनिचि गरादेशः, गम्भीरं प्रसन्नं मधुरं मनोहरं च अत एव स्फुरदुज्ज्वलं वाग्ब्रह्म येषां ते, अत्र ब्रह्मन्शब्दो व्यापकत्वसामान्याद्वाचि प्रयुक्तः 'वाग्वै परमंब्रह्म' इति श्रुतेः । 'शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ।' इति स्मृतेश्च । एवंभूताः कवयः कथमुपकरिष्यन्ति, रामगुणस्तवनाभावे स्वात्मोपकारो न स्यादेवेत्यर्थः । वृत्तं शिखरिणी 'रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी' इति तल्लक्षणात् ॥ ९ ॥

स्वनिर्भासितमुपदेशं विना स्वत एवाविर्भूतं शब्दब्रह्म वाग्विलासो यस्य तं, आचार्यं कवित्वसंप्रदायगुरुं, प्राचेतसं वाल्मीकिं गिरां देवतां सरस्वतीं च। उपश्लोकितवान् श्लोकाभ्यां स्तुतवान् । **तमिति**—वाचामित्युभयान्वयि वाचां छन्दोरूपगिरां मनुष्यलोकप्रवेशे भूलोकागमने विश्रान्तिशाखिनं श्रमपरिहारयोग्यच्छायाद्रुमं अत एव सुरलोकात् देवलोकात् अवतरत्यस्मिन्निति अवतारः अधिकरणे घञ् भूलोकः तस्य प्रान्तरेण दूराध्वना "प्रान्तरं दूरशून्योऽध्वा" इत्यमरः । योखेदः आयासः तस्य च्छित् नाशकः तं वन्दे स्तौमि ॥ १० ॥

इन्दानीम् सरस्वतीं स्तौति धातुरिति । धातुः ब्रह्मणः चतुर्मुख्याः (समाहारद्विगोर्ङीप्) मुखचतुष्टयस्य कण्ठशृङ्गाटके गलचतुष्पथे (रूपकं)

**नटः**—( सहर्षम् । ) भाव, तत्प्रस्तूयतां । अस्य हि मौद्गल्यानां ब्रह्मर्षीणा-मन्वयमूर्धन्यस्य मुरारिनामधेयस्य बालवाल्मीकेर्वाङ्मयममृतबिन्दुनिष्यन्दि कन्द-लयति कौतुकं मे ।

**सूत्रधारः**—मारिष, स्थाने भवतः कुतूहलम् । ईदृशमेवैतत् । तथाहि ।

तत्तादृगुज्ज्वलककुत्स्थकुलप्रशस्ति-
सौरभ्यनिर्भरगभीरमनोहराणि ।
वाल्मीकिवागमृतकूपनिपानलक्ष्मी-
मेतानि बिभ्रति मुरारिकवेर्वचांसि ॥ १२ ॥

---

"शृङ्गाटकचतुष्पथे" इत्यमरः । विहारिणीं विहरणशीलां नित्यं सदापि प्रगल्भा वाचालाचेति कर्मधारयः यद्वा प्रगल्भां वाचां लाति आदत्त इति तां सरस्वतीम् उपतिष्ठे उपासे ॥ ११ ॥

प्रस्तूयतां उपक्रम्यतां अन्वयमूर्धन्यस्य वंशश्रेष्ठस्य मूर्धन्‌शब्दात् "शरी-रावयवाच्च" इति भवार्थेयत् ॥ नामैव नामधेयं "नामरूपभागेभ्यो धेयः" इति धेयप्रत्ययः । बालवाल्मीकिरिति वाल्मीकिवत् निरर्गलसरस्वतीप्रसादपात्रभूतस्य । कन्दलयति वर्धयति । स्थाने युक्तं । एतत् नाटकं ईदृशमेव कुतूहलास्पदमेव ।

**तत्तादृगिति** । तत्तादृशः अतिप्रसिद्धिस्य तच्छब्दः प्रसिद्धिवाची । तादृक्‌शब्दः तत्प्रकारवाची ततश्च तत्तादृक्‌छब्देन अतिप्रसिद्धत्वं उच्यते । उज्ज्वलस्य रूपसंपन्नदेहस्य "रूपसंपन्नदेहत्वं औज्यल्यं परिकीर्त्यते" इति वचनात् । ककुत्स्थस्य तन्नाम्नो राज्ञः कुलप्रशस्त्याः वंशप्रशंसायाः सौरभ्येण गुणगौरवेण निर्भरं अतिशयेन गभीराणि प्रसन्नानि । अत एव मनोहराणि रम्याणि च । एतानि मुरारिकवेर्वचांसि सूक्तयः । वाल्मीकिवागमृतकूपस्य रामा-यणसुधाऽन्धोः निपानलक्ष्मीं आहावशोभां बिभ्रति दधति । निपीयतेजलं अस्मि-न्निति निपानं अधिकरणेल्युट् यथाकूपस्थं जलं सर्वैस्साधारण्येन दुर्ग्रहमपि तदेव तदन्तिकस्थजलाशये पूरितं सत्सर्वैः सुग्रहं भवति एवं वाल्मीकीयस्य अतिगंभीर-तया दुर्बोधत्वात् तत एव उद्धृतस्य अस्य नाटकस्य सुबोधत्वाच्च ततोऽप्यस्य परमोपयोगः, ततश्चास्य अवश्यमभिनेयत्वं सूचितम् । अत्रवाल्मीकीयप्रबन्ध-स्तुतिप्रसंगेन अस्याभिनेयत्वसाधनात् अवलगितन्नाम वीथ्यंगमुक्तं भवति । तल्ल-क्षणमाहभरतः "यत्रान्यास्मिन् समावेश्यकार्यमन्यत् प्रसाध्यते । परानुरोधात्तद्-ज्ञेयं नाम्नाऽवलगितं बुधैः ॥" इति ( वृ० ) **वसन्ततिलकम्** । तल्लक्षणन्तु "उक्तं वसन्ततिलकं तभजा जगौ गः" इति ॥ १२ ॥

(नेपथ्ये गीयते)

दिणअरकिरणुक्करो पिआअरो को वि जीअलोअस्स ।
कमलमउलंकवालीकिअमहुअरकड्ढणविअड्ढो ॥
दिनकरकिरणोत्करः प्रियाकरः कोऽपि जीवलोकस्य ।
कमलमुकुलाङ्कपालीकृतमधुकरकर्षणविदग्धः ॥ १३ ॥

**सूत्रधारः**—(आकर्ण्य ।) कथमुपक्रान्तमेव नर्तकैः, यदियं दशरथोत्सङ्गाद्रामभद्राकर्षिणो विश्वामित्रस्य प्रावेशिकी ध्रुवा । (पुरोऽवलोक्य ससंभ्रमम्) अये कथमत्रैव तत्रभवतः कमलयोनिजन्मनो मुनेरायतनात्प्रतिनिवृत्तेन ऋत्विजा वाम-

---

**नेपथ्य इति** "कुशीलवकुटुंबस्य स्थानं यदतिशोभनं। वर्णिकाग्रहणस्थानं नेपथ्यमिति तद्विदुः ॥" इति। **ध्रुवेति** "प्रथयति पात्रविशेषानपि सामाजिकमनांसि रञ्जयति । अनुसन्दधाति च रसान् नाट्यविशेषे ध्रुवा गीतिः ॥" इत्युक्तलक्षणा "ध्रुवाः पञ्च प्रयोक्तव्या रसाभिनयसिद्धये। प्रावेशिकी चापरा स्यात् परिक्रमणिका तथा। उपस्थितिर्निष्क्रमणी ध्रुवाः पञ्च प्रकीर्तिताः ।" इत्युक्तासु अत्र प्रावेशिकी । "इतिवृत्तार्थसंबद्धरसभावप्रकाशकं । पात्रप्रवेशि यद्गानं तत्प्रावेशिकमुच्यते" इति ॥ अत्र दशरथसमीपात् रामानयनार्थं विश्वामित्रप्रवेशसूचनात् प्रावेशिकत्वं । **गीयत इति** रसाभिनयनिष्पत्त्यर्थमिति शेषः ॥ **दिनकरेति**— जीवलोकस्य प्राणिसमुदायस्य प्रियाकरः सुखकरः "सुखप्रियादानुलोम्ये" इति कृञोडाच् । कोऽपि अनिर्वचनीयमहिमा दिनकरकिरणोत्करः सूर्यकान्तिसमूहः । कमलमुकुले पद्मकोशे अङ्कपालीकृतस्य कृतपरिरंभणस्य संश्लिष्टस्येति यावत् "अंकपालीपरीरंभे धात्रीवेदिकयोस्त्रियां." इति मेदिनी । मधुकरस्य भ्रमरस्य कर्षणे उद्गमने विदग्धः समर्थः अङ्कपालीगतेति पाठे तु कमलमुकुलमेव अङ्कपाली उपमाता तत्र गतस्येत्यादि भातीति शेषः । यद्वा । कर्षणविदग्धः किरणोत्करः विजयत इति शेषः ॥ १३ ॥

उपक्रान्तमेवेति नाट्यमिति शेषः । उत्संगः सामीप्यं । रामभद्राकर्षिणः रामं स्वाश्रममानिनीषोः । "नृत्तं वाद्यानुगं प्रोक्तं वाद्यं गीतानुवर्ति च । अतो गीतप्रधानत्वात्तदादावभिधीयते" इति वचनाद्ध्रुवायाः प्राथम्यं । एवं विश्वामित्रप्रवेशसूचनानन्तरं तदुपयोगिप्रवेशान्तरसूचनार्थं प्रविष्टपात्रस्यनिर्गमनार्थंचाह पुरोवलोक्येत्यादि । संभ्रमः त्वरा भयं वा । महाराजो दशरथः तत्रभवतः पूज्यस्य कमलयोनिजन्मनः ब्रह्मपुत्रस्य मुनेः वसिष्ठस्य आयतनादाश्रमात् प्रतिनिवृत्तेन प्र-

देवेन किमपि तद्वाचिकमभिधीयमानो महाराजो दशरथस्तिष्ठति । तदेहि न द्वयोस्तृतीयेन भवितव्यमित्यावामप्यनन्तरकरणीयाय सज्जीभवावः ।

( इति निष्क्रान्तौ । )

॥ प्रस्तावना ॥

त्यागतेन वामदेवेन तन्नाम्ना ऋत्विजापुरोहितेन किमपि अस्माभिरनिर्धारितं तस्य वसिष्ठस्य वाचिकं संदेशवाचं "वाचोव्याहृतार्थायां" इति ठक् "संदेशवाग्वाचिकंस्यात्" इत्यमरः । अभिधीयमानः उच्यमानःसन् अत्रैव अस्मत्समपिएव तिष्ठति वर्तते नोति द्वयोः मन्त्रयमाणयोः सतोः तत्र तृतियो न तिष्ठेदिति भावः । अन्यथा रहस्यभेदनेन अपाण्डित्यप्रसंगात् । किंच । आवयोश्च उत्तरोत्तरप्रवेशोचितपात्रसंविधानरूपकार्यस्य सत्वात्तदर्थमावामपि तत्र सज्जीभवावइत्युक्त्वा निष्क्रान्तौ सूत्रधारो नटश्च । प्रस्तावनेति तल्लक्षणंतु "सूत्रधारोनटीं ब्रूते मारिषं वा विदूषकं । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्या यत्तदामुखं । प्रस्तावना वा" इति । तस्याश्च त्रीण्यङ्गानि "कथोद्घातः प्रवर्तकं । प्रयोगातिशयश्चेति त्रीण्यंगान्यामुखस्य तु ।" इत्युक्तत्वात् । इहतु "अयं दशरथस्तिष्ठति" इति प्रयोगात् प्रयोगातिशयो नाम प्रस्तावनाङ्गं "एषोऽयमित्युपक्षेपात्सूत्रधारप्रयोगतः । पात्रप्रवेशो यत्रैष प्रयोगातिशयो मतः" । इत्युक्तत्वात् । "सूचयेद्वस्तुबीजंवा" इति वचनादिह दशरथ इति पात्रं सूचितं । "एषामन्यतमेनात्र पात्रंचाक्षिप्य सूत्रभृत् । प्रस्तावनान्तेनिर्गच्छेत्ततो वस्तु प्रपञ्चयेत्" । इति वचनात् सूत्रधारनिष्क्रमणानन्तरं तत इत्यादि वस्तुप्रपञ्चनाय आरभ्यते । बीजं, बिन्दुः, पताका, प्रकरी, कार्यं, इति पञ्च अर्थप्रकृतयः आरम्भः, यत्नः, प्राप्त्याशा, नियताप्तिः फलागमः, इति यथाक्रमं पञ्चावस्थाः । मुखं, प्रतिमुखं, गर्भः, विमर्शः, निर्वहणं, इति पञ्चसन्धयः । सन्धिर्नाम एकेन प्रयेजनेनान्वितानां कथांशानामवान्तरप्रयोजनसंबन्धः उक्तंच "अन्तरैकार्थसंबन्धेः सन्धिरेकान्वये सति" । इति तत्र बीजारंभसमन्वितोमुखसंधिः एवमन्येपि यथाक्रमं योज्याः । यदल्पमुपन्यस्तं पश्चाद्बहुविस्तारिस्यात् तद्बीजमिवबीजम् । महत्फलं आप्तुं औत्सुक्यं आरंभः । तस्य च मुखसंधेः उपक्षेपादीनि द्वादशाङ्गानि । तानि च प्रतिमुखादिसंधितदङ्गानि च यथोपयोगं संगृह्य दर्शयिष्यामः । "द्वेधाविभागःकर्तव्यः सर्वस्यापीहवस्तुनः । सूच्यमेवभवेत्किंचित् दृश्यश्राव्यं तथापरं । नीरसोऽनुचितस्तत्र संमूच्योवस्तुविस्तरः" इति उक्तत्वात् ।

( ततः प्रविशति यथोपदिष्टो दशरथो वामदेवश्च । )

**दशरथः**— अहो, बहुधा श्रुतमपि भगवतो वसिष्ठस्यानुशासनं नवं नवमिव प्रमोदयति माम् ।

**वामदेवः**—

**मधुकैटभदानवेन्द्रमेदःप्लवविस्रामिषमेव मेदिनीयम् ।**
**अधिवास्य यदि स्वकैर्यशोभिश्चिरमेनामुपभुञ्जते नरेन्द्राः ॥ १४ ॥**

**दशरथः**— ( सविमर्शस्मितम् । ) सखे वामदेव,

**तस्याज्ञयैव परिपालयतः प्रजा मे**
**कर्णोपकण्ठपलितंकरणी जरेयम् ।**

---

सूच्यार्थश्च पञ्चधा सूच्यते । " विष्कंभचूलिकांकास्यांकावतारप्रवेशकैः " इति " एभिःसूच्यं सूचयित्वा दृश्यमङ्कैः प्रदर्शयेत् " इत्यतः अङ्कैर्दृश्यनिरूपणं । " यदातुसरसंवस्तुमूलादेवप्रवर्तते । आदावेवतदाङ्कःस्यादामुखाक्षेपसंश्रयः " इत्युक्तत्वादत्र प्रस्तावनानन्तरं अङ्कारंभः अङ्कलक्षणंतु " प्रत्यक्षनेतृचरितो बिन्दुव्यक्तिपुरस्कृतः । अङ्कोनानाप्रकारार्थसंविधानरसाश्रयः " इति । **ततः प्रविशतीत्यादि** । अहो आश्चर्यं भगवतः पूज्यस्य वसिष्ठस्य गुरोः अनुशासनं आज्ञा बहुधा श्रुतमपि बहुप्रकारेण श्रुत्वा अनुष्ठितमपि नवं नवमिव अत्यन्तनूतनमिव वीप्सायां द्विरुक्तिः **मध्विति**— मधुकैटभदानवेन्द्रयोः मधुकैटभाख्यासुरयोः मेदसः धातुविशेषस्य प्लवन मेलनेन " प्लवःस्यात्प्लवनेमेले " इतिमेदिनी विस्रं आमगन्धि " विस्रंस्यादामगन्धि यत् । " इत्यमरः । आमिषम् मांसामितियत् इयमेव मेदिनी भूमिः विधेयप्राधान्यादियमितिस्त्रीत्वं, एनां मेदिनीं अन्वादेशत्वेन एनादेशः स्वकैः आत्मीयैः यशोभिः दानादिनिमित्तैः अधिवास्य सुरभीकृत्य " संस्कारोगन्धमाल्याद्यैः यत्स्यात्तदाधिवासनं । " इत्यमरः । चिरं उपभुञ्जतेयदि अनुभवन्तिचेत् तर्हितेनरेन्द्राः राजानः नेतरइत्यर्थः । यथा दुर्गन्धिवस्तु अपरिहार्यं चेत्तत् गन्धमाल्यादिभिः वासयित्वा अनुभवन्ति तद्वदस्याः पृथिव्याः आसुरमेदोमयत्वेन दुर्गन्धित्वात् अपरिहार्यत्वाच्च दानादिजन्ययशोरूपवासनाद्रव्यैः वासयित्वा अनुभवन एव राजत्वं तस्मादर्थिकामपूरणे वैमुख्यं मागाइतितात्पर्यं । मेदिनीशब्दनिर्वचनेन निरुक्त्यलंकारः । **वृत्तं औपच्छन्दसिकम्** । तल्लक्षणन्तु " पर्यन्ते यौ तथैवशेषमौपच्छन्दसिकम् । " इति ॥ १४ ॥

**तस्येति** । तस्य गुरोः आज्ञयैव आदेशेनैव प्रजाः जनान् " प्रजास्यात्सन्ततौ जने " इत्यमरः प्रपूर्वाज्जनेः " उपसर्गेचसंज्ञायां " इति डः अदन्तत्वात्-

**यद्गर्भरूपमिव मामनुशास्ति सर्व-**
**मद्यापि तन्मयि गुरुर्गुरुपक्षपातः ॥ १५ ॥**

**वामदेवः**— महाराज, किमुच्यते। समानवृत्तेरपि कस्यचित् क्वचिदेव तारामैत्री। तथाहि तत्रभवान्।

**साधारणो रघूणां गुरुर्भवन्नपि विशेषदृष्टिस्ते।**
**नामोदयति किमिन्दुः कुमुदं पुनरस्य सर्वस्वम् ॥ १६ ॥**

---

टाप्। परिपालयतः रक्षतः मे इयं दृश्यमाना जरा षित्वादङ् कर्णोपकण्ठस्य कर्णप्रदेशस्यपलितंकरणी पूर्वमविद्यमानस्य केशरोमादिशौक्ल्यस्य उत्पत्तिसाधनभूता "आढ्यसुभग" इत्यादिना कृञः करणे ख्युन् "पलितं जरसा शौक्ल्य केशादौ" इत्यमरः। एतेन अतिवृद्धत्वंद्योतितं कर्णान्तिकरोमपलितस्य शैघ्रयादर्शनात् एवंभूतमपि मां गर्भरूपमिव अतिबालमिव "प्रशंसायांरूपप्" "बालके तरुणापिस्याद्गर्भरूपः" इति विश्वः। गुरुः वसिष्ठः सर्वं अनुशासनीयं अद्यापि अनुशास्ति आज्ञापयति शास्तेर्द्विकर्मकत्वात् "अकथितंच" इति मामित्यस्य कर्मत्वं, एवंच गुरुशासनस्य अनर्थकत्वाभावादस्माभिरविदितमपि आस्तिमहाप्रयोजनमितिभावः। यतएवं तस्मात् गुरोः वसिष्ठस्य पक्षपातोमय्यभिमानः गुरुः महान्। यद्वा। गुरुः गुरुपक्षपातइति बहुव्रीहिः ॥ १५ ॥

**महाराजेति**। "महाराजेति भूपतिः" इतिसंबोधनलक्षणस्योक्तत्वात्। किमुच्यतइति गुरोःत्वयि पक्षपाताधिक्यं नाश्चर्यमित्यर्थः। तदेवोपपादयति **समानेति**। समानवृत्तेरपि तुल्यस्वभावस्यापि कस्यचित् पुरुषस्य क्वचिदेव कस्मिंश्चित्पुरुष एव तारामैत्री चक्षुःप्रीतिः स्नेहाधिक्यमितियावत् तारयोः कनीनिकयोर्मैत्री स्नेहइति समासः। अन्योन्यदर्शनमात्रेण यावज्जीवं यत्र निरातिशयप्रीतिः तत्रतारामैत्रीशब्दप्रयोगः। यद्वा। ताराणां नक्षत्राणां परस्परं समानसंबन्धेऽपि कस्याचित् क्वचिदेव मैत्री। यथा। शुक्रस्य बुधे अतिमैत्री शनौ मैत्री कुजे शत्रुत्वाभावमात्रं। यद्वा। चन्द्रस्य कृत्तिकादिषु बह्वीषु तारासु पत्नीष्वपि रोहिण्यामतिप्रीतिः चित्रायां प्रीतिः अन्यासु न तथा एवमित्याद्यपि यथामति बहुधा उत्प्रेक्ष्यते। तदेवविशदयति **साधारण इति**—तत्रभवान् पूज्यः **वसिष्ठः** रघूणां रघुवंश्यनां रघुशब्दस्य तदपत्ये लक्षणा। साधारणो गुरुर्भवन्नपि गुरुत्वसामान्यं वहन्नपि ते तव विषय इति शेषः। यद्वा ते त्वया निमित्तेन। उक्तंचवामनेन "तेमेशब्दौ निपातौ त्वयामयेत्येतस्मिन्नर्थे" इति। यद्वा ते इति निपातः त्वयी-

**दशरथः**— वामदेव, मम हि गुरुवचनश्रवणतृष्णामङ्कुशीकरोति श्रोत्रवृत्तिरिन्द्रियान्तरानुसारिणो हृदयगजस्य । तन्न किंचिदपरमवशिष्यते ।

**वामदेवः**— महाराज, निःशेषमभिहितं । इमां तु सर्वसंदेशसंग्रहकारिकां अतिप्रयत्नेन भगवान्भवन्तमनुस्मारयति ।

**दशरथः**— (सादरम् ।) अवहितोऽस्मि । किमाज्ञापयति ।

**वामदेवः**— **हुतमिष्टं च तप्तं च धर्मश्चायं कुलस्य ते ।**
**गृहात्प्रतिनिवर्तन्ते पूर्णकामा यदर्थिनः ॥ १७ ॥**

---

त्यर्थे विशेषा दृष्टिःयस्यसः बाहुलकाद्विशेषेतिकर्तरिघञ् । तस्मान्नाश्चर्यमितिपूर्वेण संबंधः तत्रदृष्टान्तमाह नेति । इन्दुः चन्द्रः किंनामोदयति सर्वंआह्लादयत्येवत्यर्थः पुनः किन्तु अस्यचन्द्रस्य कुमुदं कैरवं "सितेकुमुदकैरवे" इत्यमरः सर्वस्वं मूलधनमिव अतिप्रेमास्पदमित्यर्थः ॥ १६ ॥
हि यस्मात् मम श्रोत्रवृत्तिः श्रोत्रेन्द्रियव्यापारः गुरुवचनस्य श्रवणेतृष्णां इच्छां इन्द्रियांतरस्य चक्षुरादीतरेन्द्रियस्य मयूरव्यंसकादित्वात् अन्यदिन्द्रियमिन्द्रियांतरमित्यस्वपदविग्रहः । अनुसारिणः अनुधावनशीलस्य हृदयगजस्य अङ्कुशीकरोति सृणीकरोति "अङ्कुशोस्त्रीसृणिःस्त्रियां" इत्यमरः । अङ्कुशनिरुद्धगजवत् निरुद्धवृत्तिकं सत् गुर्वादेशश्रवणैकप्रवणमिति भावः । तत् तस्मात् अपरं किंचित् वक्तव्यान्तरं । एतेन इतः पूर्वं वामदेवेन गुरुवचन यत्किंचिदुक्तं सूच्यते । नावशिष्यत इति काका अवशिष्यते वा न वा इति प्रश्नः । अवशिष्यतइति कर्मकर्तरिप्रयोगः । निर्गतः शेषः यस्मादिति क्रियाविशेषणं । अभिहितं उक्तं इमां वक्ष्यमाणां सर्वसंदेशानां समस्तनियोगानां सग्रहकारिकां संक्षेपश्लोकं "कारिकातुकृतौश्लोके" इति विश्वः । यद्वा । सर्वसंदेशानां सर्वशास्त्रार्थसिद्धान्तभूतानुष्ठानविधीनां संग्रहकारिकां क्रोडीकारश्लोकं । यद्वा । संग्रहस्य सम्यग्ज्ञानस्य ग्रहेर्ज्ञानार्थकत्वस्मरणात् कारिकां कर्त्रीं वक्ष्यमाणविज्ञप्तिमितिभावः । अनुस्मारयति ज्ञापयति । सादरं श्रद्धयासह । अवहितोस्मि श्रवणानुकूलव्यापारोस्मि । हुतमिति । अर्थिनः याचकाः "अर्थाच्चासान्निहिते" इति मत्वर्थीय इनिः । पूर्णकामाः पूरितमनोरथास्सन्तः ते गृहात् प्रतिनिवर्त्तन्त गच्छन्तीति यत् तदेव हुतं होमः भावेक्तः तदेव इष्टं यागश्च यजेः क्तेःसंप्रसारणादि "अग्निहोत्रंतपस्सत्यं वेदानामनुपालनं । आतिथ्यं वैश्वदेवं च इष्टमित्यभिधीयते" इत्युक्तलक्षणम् । तदेव तप्तं तपश्च । तइत्युभयान्वायि अयमेव ते कुलस्य धर्मश्च । यद्वा । यदिति

**दशरथः**—( सहर्षम्। ) सुष्ठु शिरसि कृतमाचार्यवचनम्। किंच।

अस्मद्गोत्रमहत्तरः क्रतुभुजामद्यायमाद्यो रवि-
र्यज्वानो वयमद्य सा भगवती भूरद्य राजन्वती।
अद्य स्वं बहु मन्यते सहचरैरस्माभिराखण्डलो
येनैतावदरुन्धतीपतिरपि स्वेनानुगृह्णाति नः॥ १८॥

**वामदेवः**— राजर्षे, सहजानुभावगम्भीरमहिमानो यूयमेव तादृशाय यशसे। केवलं तु वयमुपदेष्टारः।

---

यद्यर्थे आर्थिनः ते गृहात् पूर्णकामाः प्रतिनिवर्तन्ते यदि तर्ह्येव ते त्वया हुतं इष्टं तप्तं च भवति कर्मणि क्तः नान्यथेति भावः। धर्मश्चायं कुलस्य ते इत्यनेन नायमपूर्वोधर्म उपादिश्यत इत्यर्थः एतेन रामलक्ष्मणप्रदानेन विश्वामित्रप्रार्थना अवश्यं पूरणीयेति प्रत्यासत्त्या सूचितं॥ १७॥

सुष्टुसम्यक् शिरसि कृतमित्यनेन अतिविनयस्सूचितः। गुर्वाज्ञामेवाभिनन्दति **अस्मादित्यादिना**—येनहेतुना अरुन्धतीपतिरपि वसिष्ठोपि अपिस्संभावनायां। एतावत् ईदृशं अनुशासनं नः अस्मान्प्रति स्वेनस्वयमेव अनुगृह्णाति प्रसादीकरोति। ततः अस्माकं गोत्रस्य वंशस्य महत्तरः कूटस्थः अयं रविः सूर्यः अद्य अस्मिन्नेवाहनि क्रतुभुजां देवानां निर्धारणे षष्ठी आदौभवः आद्यः दिगादित्वाद्यत् श्रेष्ठ इत्यर्थः। किंच वयं अद्यैव यज्वानः विधिना इष्टवन्तः "सुयजोर्ङ्वनिप्"। "यज्वातु विधिनेष्टवान्" इत्यमरः। इतः पूर्वं यज्वत्वसत्यपि इदानीमेवाप्रतिबन्धा सिद्धिरितिभावः। सा अतिप्रशस्ता भगवती सर्वैश्वर्यसंपन्ना "भगःश्रीकामे" इत्याद्यमरः भूः भूमिः अद्य राजन्वती सुराजविशिष्टा। "राजन्वान्सौराज्ये" इति निपातनात् साधुः "उगितश्च" इति ङीप्। आखण्डलः इन्द्रः सहचरैः सहायैरस्माभिः स्वं आत्मानं अद्य बहुमन्यते संभावयति। पूर्वं तु मम साहाय्येपि सामान्यक्षत्रियबुध्या असंभावितात्माऽभूत् अद्य तु भगवतः वसिष्ठस्य अनुग्रहपात्रमिति मत्साहायकेन आत्मसंभावनामपि कुर्यादिति भावः॥ १८॥

किमात्मनः तत्प्रसादानर्हत्वसंभावनया वा उत अर्हत्वेपि स्वस्मिन्न्यूनत्वसंभावनयावा आहोस्वित् तस्मिन्नशक्तिसंभावनयावा एवं ब्रवीषीति त्रेधा विकल्प्य आद्यंप्रत्याह **सहजेति**। सहजानुभावेन नैसर्गिकप्रभुत्वेन गंभीरः अगाधः महिमा येषां ते यूयमेव तादृशाय यशसे वसिष्ठप्रसादलभ्यदानादिनिमित्तख्यातये

उन्निद्रयति हि कुमुदाकरमशरन्निशानिशातनिस्तुषोऽपि तुषारकिरणः ।
स पुनः किमुच्यते भगवान् द्वितीयपरमेष्ठी वसिष्ठः ॥ १९ ॥

अपि च ।

इदं वो याज्यानामुदितमुदितं यत्कुलमभू-
द्यदिष्टं वा कुर्वन्नकृत सगरः पूर्तमुदधिम् ।
असौ पूर्वेषां ते सुचरितपताका यदमर-
स्रवन्ती कृत्स्नोऽयं त्रिभुवनगुरोस्तस्य विभवः ॥ २० ॥

कल्पन्त इति शेषः । आजन्मसिद्धप्रभुत्वादिविशिष्टाः श्लाघ्यगुणवन्तश्च यूयं । अतः तादृशधर्मानुष्ठानयोग्या एवेत्यर्थः । द्वितीयं प्रत्याह । केवलंत्विति तादृशधनादिमहत्वाभावात् वयं तथाऽनुष्ठातुमशक्ताः गुरुसंदेशनिवेदनमात्रे शक्ताः । तस्मादन्यूनविभवा यूयमेवतदर्हा इत्यर्थः । तृतीयं कैमुतिकन्यायेनव्युदस्यति । उन्निद्रयतीति—तुषारकिरणः चन्द्रः शरन्निशायां शरत्कालरात्रौ निशातः तनूकृतः उल्लीढ इति यावत । अत एव निस्तुषः निर्मलः धान्यत्वग्वाच्यपि तुषशब्दः इह लक्षणया मालिन्यपरः । तथा न भवतीति अशरन्निशानिशातनिस्तुषः तथाभूतस्सन्नपि कुमुदाकरं कुमुदसरः, उन्निद्रयति विकासयति । उन्निद्रशब्दात् तत्करोतीति णिच् । अपिशब्दात् शक्त्यसंपत्तिः सूचिता । एवंस्थिते । किमुवक्तव्यं तस्येत्याह. स इत्यादि । सः अतिप्रसिद्धः भगवान् द्वितीयपरमेष्ठी द्वितीयब्रह्मा सर्वथा आनन्तर्याद्द्वितीयत्वं तस्य । सः वसिष्ठः कुमुदः जगदानन्दस्य आकरं आश्रयं त्वां उन्निद्रयति उचितकाले बोधयति इति किमुच्यते नेदमद्भुतमिति भावः । काव्यार्थापत्यलंकारः । 'कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यते' । इति तल्लक्षणं । (वृ) कुमुदाकरं । तल्लक्षणन्तु 'एकादशभिर्वर्णैरष्टादशभिः क्रमाद्द्वभौ पादौ । तत्कुमुदाकरवृत्तं चरमौतु दशाक्षरौ यस्य' इति । कुमुदाकरपदेन तद्वृत्तसूचनान्मुद्रालंकारश्च ॥ १९ ॥

इत्यसंभावनात्रयं निरस्य वसिष्ठप्रसादकृतैव त्वत्कुलप्रसिद्धिरित्याहद्वाभ्यां प्रथममन्वयमुखेनतद्दर्शयति इदमिति — याज्यानां याजयितुयोग्यानां वः इदं कुलं उदितमुदितं अत्यन्तमभ्युदयविशिष्टं वीप्सायां द्विरुक्तिः । यद्वा । उदितमुदितमिति समस्तंपदं अभ्युदयविशिष्टं अतएव तुष्टंच अभूत् इतियत् । सगरः इष्टं अश्वमेधयागं । कुर्वन् हेत्वर्थे शता । उदधिं समुद्रं पूर्तं खातादिविषयकं 'वापीकूपतटाकानि देवतायतनानिच । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ।'

किं च ।

**कौशिकस्वीकृतस्यापि यदाज्ञातिक्रमादभूत् ।**
**त्रिशङ्कोरुपभोगाय न द्यौरपि न भूरपि ॥ २१ ॥**

**प्रतिहारी**—जयतु जयतु देवः । देव, भगवान्कौशिको द्वारमध्यास्ते ।

**दशरथः**—( ससम्भ्रम ) किं कौशिकः ।

**वामदेवः**—अहं तमुपेत्य श्रौतेन विधिना पुरस्कृत्य प्रवेशयामि तपोनिधिम् ( इति प्रतिहार्या सह निष्क्रान्तः । )

**दशरथः**—( सहर्षम् । )

**यः क्षत्रदेहं परितक्ष्य टङ्कैस्तपोमयैर्ब्राह्मणमुच्चकार ।**
**परोरजोभिः स्वगुणैरगाधः स गाधिपुत्रोऽपि गृहानुपैति ॥ २२ ॥**

---

इति खातादेरपि पूर्तत्वस्मरणात् । अकृत कृतवान् कर्तरि लुङ् । इति यत् असावमरस्रवन्ती गंगा ते पूर्वेषां सुचरितपताका पुण्यवैजयन्ती इति यत् अयं कृत्स्नः सर्वोपि त्रिभुवनगुरोः लोकत्रयमान्यस्य तस्य वसिष्ठस्य विभवः माहात्म्यमेव नान्यथेति भावः ॥ २० ॥

इदानींव्यतिरेकमुखेन उक्तार्थद्रढीकरणपूर्वकं 'असूचितस्य पात्रस्य प्रवेशो नोपपद्यते ' इत्युक्तत्वात् विश्वामित्रप्रवेशसूचनार्थमाह **कौशिकेति**—कौशिकस्वीकृतस्यापि विश्वामित्रपरिगृहीतस्यापि त्रिशंकोः यदाज्ञातिक्रमात् वसिष्ठादेशोल्लंघनेन द्यौःस्वर्गोवा भूः भूमिर्वा उपभोगाय नाभूत् ' तुमर्थाच्चभाववचनात् ' इति चतुर्थी श्लोकद्वयोक्ताः सगरभगीरथत्रिशंकुकथाः अतिस्पष्टत्वान्न विव्रियन्ते ॥ २१ ॥

**प्रतिहारीति** । तल्लक्षणं तु ' सन्धिविग्रहसंबद्धं नानाकार्यसमुत्थितं । निवेदयन्ति याः कार्यं प्रतिहार्यस्तु ताःस्मृताः ' । इति भरतः । द्वारमध्यास्ते द्वारि तिष्ठति । ससंभ्रमं सत्वरं । श्रौतेनविधिना श्रुत्युक्तप्रकारेण । पुरस्कृत्य अर्घ्यपाद्यादिना पूजयित्वा । यइति— यः मुनिः क्षत्रदेहं जन्मनासिद्धं क्षत्रियजातिशरीरं तपोमयैः तपोरूपैः स्वरूपार्थेमयट् । चिन्मयमितिवत । नतुप्राचुर्ये तथा सति रूपकत्वायोगात् । टङ्कैः पाषाणदारणैः 'टङ्कःपाषाणदारणः' इत्यमरः परितक्ष्य सर्वतः तनूकृत्य क्षत्रत्वं विहायेत्यर्थः । ब्राह्मणं ब्राह्मणत्वं उच्चकार प्राप्तवान् । ननुब्राह्मणशब्दस्य भावे ष्यञो विधानात् ब्रह्मन्शब्दस्य च प्राणभृज्जातीत्याञि टिलोपस्य दुर्वारत्वाच्च कुतो ब्राह्मणमिति भावे रूपासिद्धिरितिचेत् ।

( ततः प्रविशति वामदेवोपदिश्यमानवर्त्मा विश्वामित्रः । )

**विश्वामित्रः**—सखे वामदेव, त्वमधुनैव वसिष्ठाश्रमादागतोऽसि । कच्चित्कुशली तावदरुन्धतीनाम्ना तपोमयेन ज्योतिषा सह चरितधर्मा तत्रभवान्मैत्रावरुणिः ।

**वामदेवः**—विशेषेण पुनरद्य याज्यकुलमुपतिष्ठमाने चिरंतनप्रणयिनि कौशिके ।

**विश्वामित्रः**—सखे वामदेव, चिरेण दशरथो द्रष्टव्य इति सर्वमनोरथानामुपरि वर्तामहे ।

---

बाढं । तथापि 'तपःश्रुतंच जातिश्च त्रयं ब्राह्मणकारकं' इति भाष्यप्रयोगात् अत्रि टिलोपो नभवतीतिज्ञेयम् । अन्यथा तस्येदमित्यण्यापि टिलोपादुर्वार एव ब्राह्म इति योगविभागात् । अपत्यत्वेतु शब्दसाधुत्वेपि इह अर्थासामञ्जस्यात् परोरजोभिः निर्मलैः राजदन्तादित्वात् रजःशब्दस्य परानिपातः । पारस्करादित्वात् परशब्दस्य सुट् । परःशतादिवत् । रज इति तमसोप्युपलक्षणं । यत्तूच्यते रुचिपतिना । 'सात्त्विकतामसगुणसद्भावात् कौशिकस्य' इति तन्न । तेजस्तमसोरिव तयोस्सामानाधिकरण्यासंभवात् । तदीयकोपादेरपि लोकानुग्रहार्थमात्रत्वेन सात्विकत्वमेव । यथा राजादेः । अन्यथा रावणादिवधकर्तृत्वेन भगवतोपि तद्दोषस्य दुर्वारत्वादित्यलं विस्तरेण । स्वगुणैः क्षमासत्यादिभिः अगाधः अतिगभीरः सः तादृशः गाधिपुत्रोऽपि विश्वामित्रोपि गृहानुपति गृहमागच्छति । ( वृ ) उपजातीयं ॥ इन्द्रवज्रोपेन्द्रवज्रामिश्रत्वे उपजातीयत्वं ॥ २२ ॥

चरितः अनुष्ठितो धर्मो येन स चरितधर्मा 'धर्मादनिच्' इति अनिच् कृतकृत्यइत्यर्थः मित्रश्च वरुणश्च मित्रावरुणौ 'देवताद्वन्द्वे च' इति पूर्वपदस्यानङ् तयोरपत्यं मैत्रावरुणिः वसिष्ठः अरुन्धतीनाम्ना तपोमयेन प्रचुरतपस्केन ज्योतिषासह ज्योतिश्शब्दोत्र गौणः दुर्धर्षत्वसाम्यात् । लाक्षणिकोवा सस्त्रीकस्यैवाग्न्युपास्त्यधिकारदर्शनात् । संपत्त्यर्थो वा 'योषावाक्गौतामाग्नि' रिति श्रुतेः । तेन सह कच्चित्कुशली तावत् साकल्येन कुशलवान् वर्तते वा 'कच्चित्कामप्रवेदने' 'यावत्तावच्च साकल्ये' इतिचामरः । 'ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयं । वैश्यं क्षेमं सदा पृच्छेत् शूद्रमारोग्यमेवच ।' इति मनुवचनात् कुशलशब्दप्रयोगः याज्यकुलं दशरथगृहं उपतिष्ठमाने रामलक्ष्मणलिप्सया आगते सति । चिरेणेत्यादि —दशरथदिदृक्षा सर्वार्थादपि अधिकत-

**वामदेवः**— (सविनयं ।) भगवन्कुशिकनन्दन, धन्यः खल्वयं राजा सावित्रो यमेवमनुरुध्यन्ते भवन्तोऽपि ।

**विश्वामित्रः**—सर्वं धन्य एवायम् ।

नमन्नृपतिमण्डलीमकुटचन्द्रिकादुर्दिन-
स्फुरच्चरणपल्लवप्रतिपदोक्तदोःसंपदा ।
अनेन समृजेतरां तुरगमेधमुक्तभ्रम-
तुरंगखुरचन्द्रकप्रकरदन्तुरा मेदिनी ॥ २३ ॥

(पुरोऽवलोक्य सहर्षं ।)

चिरादक्ष्णोर्जाड्यं शमयति समस्तासुरवधू-
कचाकृष्टिक्रीडाप्रसभसुभगंभावुकभुजः ।

---

दर्शनेन चिरं मम मनोरथ इति भावः । सावित्रः सूर्यवंश्यः अयं राजा दशरथः धन्यः खलु सुकृत्येव । अनुरुध्यन्ते द्रष्टुमिच्छन्ति । तदुक्तमन्यथा साधयति नमन्नित्यादिना —नमतां प्रह्वीभवतां नृपतीनां शत्रुनृपाणां मण्डल्याः समूहस्य गौरादित्वात् ङीष् । मकुटचन्द्रिका किरीटकान्तिः तस्याः दुर्दिनं वर्षणं व्याप्तिरितियावत् 'दुर्दिनं वर्षणे मेघच्छन्ने ऽह्न्यवदिनेपिच ।' इति वैजयन्ती । तेन । स्फुरद्भ्यां प्रकाशमानाभ्यां चरणपल्लवाभ्यां पादकिसलयाभ्यां प्रतिपदं पदे पदे वीप्सायामव्ययीभावः । उक्ता कथिता दोस्संपत् बाहुबलं यस्य तेन अनेन दशरथेन, मेदिनी भूमिः मेध्यते हिंस्यते अत्रेति मेधः तुरगस्यमेधः तुरगमेधः अश्वमेधयागः तास्मिन् मुक्तश्च भ्रमंश्च तुरङ्गः अश्वः तस्य खुरः शफ एव चन्द्रकं मेचकः 'मयूरस्य समौचन्द्रकमेचकौ' इत्यमरः । मयूरबर्हेषु चन्द्रवत् यत् वर्तुलाकारं दृश्यते तच्चन्द्रकं इह तद्वद्वर्तुलत्वेन रूपणं । तस्य प्रकरेण आधिक्येन दन्तुरा निम्नोन्नता समृजेतरां मृष्टा । कर्मणि लिट् (वृ) पृथ्वी । तल्लक्षणन्तु 'जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुः' ॥ २३ ॥

चिरादिति—समस्तासुरवधूनां अखिलदैत्यस्त्रीणां कचाकृष्टिक्रीडायां केशाकर्षणकेल्यां प्रसभं बलात्कारेण सुभगंभावुकौ निरर्गलीभवन्तौ भुजौ यस्य सः । सुभगशब्दात् 'कर्तरिभुवः' इत्यादिना खुकञ् खित्वान्मुमि सुभगंभावुक इति रूपं च्विविषयत्वेन असुभगः सुभगो भवतीति समासः । अत एव त्रिलोक्यां लोकत्रयेपि जङ्गालं अतिजवं 'जङ्गालोतिजवस्तुल्यौ' इत्यमरः जङ्गाशब्दात् 'प्राणिस्थादातोलच्' इति मत्वर्थीयोलः । सर्वजगद्व्यापकमितियावत् । उज्ज्वलं

त्रिलोकीजङ्घालोज्ज्वलसहजतेजा मनुकुल-
प्रसूतिः सुत्राम्णो विजयसहकृत्वा दशरथः ॥ २४ ॥

सखे वामदेव, इयमनेन पीयूषतुषारशीकरासारवर्षिणी सुजनसंवादकौतुकमेघलेखा पौरस्त्येनेव मरुता लोकनाथेन सहस्रशिखरीक्रियते ।

**वामदेवः**—भगवन् अद्य दिलीपकुलकुशलकर्मकल्पलतानवाङ्कुरग्रन्थिभिरुद्गीर्यन्ते किसलयानि । यदत्रभवानपि त्रिभुवनसनातनगुरुरेवमस्मै नरेन्द्राय स्पृहयति ।

( इति परिक्रामतः )

**दशरथः**—( सहर्षं ससंभ्रममासनादुत्थायोपसृत्य च । ) भगवन्कुशिकनन्दन, ऐक्ष्वाकः पङ्क्तिरथोऽभिवादयते ।

---

दीप्यमानं सहजं नैसर्गिकं तेजः प्रतापो यस्य सः । मनुकुले प्रसूतिरुत्पत्तिर्यस्येति व्यधिकरणबहुव्रीहिः सुत्राम्णः इन्द्रस्य विजयस्य असुरकर्मकपराभवस्य सहकृत्वा सहायकृत् ' सहे च ' इति सहशब्दात् कृञः कर्तरि क्वनिप् । पित्वात्तुक् च । एवंभूतो दशरथः चिरात् चिरकालव्याप्तं अक्ष्णोः जाड्यं उत्कण्ठां जडशब्दात् गुणवचनेत्यादिना भावेष्यञ् शमयति शांतां करोति ' शमोऽदर्शने ' इति मित्वादुपधाह्रस्वः ॥२४ ॥

लोकनाथेन दशरथेन पौरस्त्येन पूर्वदिग्भवेन ' दक्षिणापश्चात्पुरसस्त्यक् । ' इति पुरश्शब्दाद् भवार्थे त्यक् । मरुता वायुना ' मरुतौ पवनामरौ ' इत्यमरः पीयूषतुषारशीकरासारस्य अमृतशीतलाम्बुकणधारायाः वर्षिणी वर्षणशीला सुजनसंवादकौतुकं सज्जनसल्लापगोष्ठीकुतूहलमेव मेघलेखा मेघपङ्क्तिः ' लेखालिपिराजिकयोर्मता ' इति मेदिनी । सहस्रशिखरीक्रियते बहुविस्तारीक्रियते ' शिखरं शैलवृक्षाग्रविस्तारेष्वपि दृश्यते । ' इति विश्वः । यथा पुरोवातनुन्ना कादम्बिनी जलधारावर्षणाय कल्पते एवं दशरथगोष्ठी सुखाय कल्पतेति भावः दिलीपकुलस्य कुशलकर्माणि पुण्यान्येव कल्पलताः तासां नवाङ्कुराणां ग्रन्थिभिः पर्वभिः ' ग्रन्थिस्तु ग्रन्थिपर्णे ना बन्धे रुग्भेदपर्वणोः ' इतिमेदिनी । किसलयानि पल्लवानि उद्गीर्यन्ते उद्गम्यन्ते दिलीपकुलपुण्यानि फलोन्मुखानीतियावत् तत्र हेतुमाह यदिति — अत्रभवान् पूज्यः त्रिभुवनस्य सनातनगुरुः पुराणगुरुः मान्य इत्यर्थः भवानपि यत् यतो हेतोः एवं अस्मै नरेन्द्राय स्पृहयति दशरथं द्रष्टुमिच्छतीति भावः ' स्पृहेरीप्सितः ' इति संप्रदानं आसनादुत्थायेति ' ऊर्ध्वं

**विश्वामित्रः**—स्वस्ति भवते सहपरिवाराय ।

( इति सर्वे यथोचितमुपविशन्ति । )

**दशरथः**—( सप्रश्रयम् । ) भगवन्विश्वामित्र,

**कच्चित्कान्तारभाजां भवति परिभवः कोऽपि शौवापदो वा**
**प्रत्यूहेन क्रतूनां न खलु मखभुजो भुञ्जते वा हवींषि ।**
**कर्तुं वा कच्चिदन्तर्वसति वसुमतीदक्षिणः सप्ततन्तु-**
**र्यत्संप्राप्तोऽसि किं वा रघुकुलतपसामीदृशोऽयं विवर्तः ॥ २९ ॥**

---

प्राणाह्युत्क्रामन्ति यूनः स्थविर आयति । प्रत्युत्थानाभिवादाभ्यां पुनस्तान् प्रतिपद्यते' इति वाक्यमनुस्मरन् । इक्ष्वाकोः गोत्रापत्यं ऐक्ष्वाकः जनपदक्षत्रियाञ्चि 'दाण्डिनायने' तिनिपातनाट्टिलोपः पङ्क्तिरथः दशरथः अभिवादयते नमस्कारोति वदसंदेशवचन इति चौरादिकस्य धातोः अभियोगे नमस्कारे वृत्तिः । परिवारैः साहिताय सहपरिवाराय 'प्रकृत्याशिषि' इति सहशब्दस्य प्रकृतिभावः । नमस्वस्तीत्यादिना चतुर्थी । कच्चिदिति—कान्तारभाजां अरण्यवासिनां श्वापदेभ्य ( हिंस्रजन्तुभ्य ) आगतः शौवापदः 'ततआगतः' इत्यणि द्वारादित्वादैच् । 'शुनोदन्तदंष्ट्रे' त्यादिना श्वन्शब्दस्य दीर्घः । 'अथ हिंस्रपशुर्व्यालिः श्वापदश्शिबिरित्यपि ।' इति त्रिकाण्डशेषः । कोऽपि यःकश्चित् परिभवः तिरस्क्रिया कच्चिद्भवति वा । वनवासिनां दुष्टजन्तुभ्यः पीडा जातावेति प्रथमःप्रश्नः । कान्तारभाजामिति कर्मणि षष्ठी । 'कर्तृकर्मणोः कृति' इति उभयत्रषष्ठीविधानात्कर्तरिषष्ठीपरिग्रहे तु तत्संबन्धी यः कश्चित्परिभवो भवतां भवतिवेति प्रथमप्रश्नः, उत शौवापदः वेति द्वितीयप्रश्नः । तपस्विवनेकुतो हिंस्रवास इत्यस्वारस्येन पक्षान्तरेण शङ्कते द्वितीयपादेन । क्रतूनां यज्ञानां प्रत्यूहेन विघ्नेन क्रतुभुजो देवाःहवींषि न खलु भुञ्जते वा नाश्नन्ति किं । खलु जिज्ञासायां । दैत्यराक्षसादिभिः यज्ञो विघ्नितो वेति द्वितीयप्रश्नः । कुतो महतां क्षुद्रैः विघ्न इत्यस्वारस्येन पुनः शंकते तृतीयपादेन । वसुमतीदक्षिणः भूमिदक्षिणाकः सप्ततन्तुः मखः कर्तुं कर्तव्यत्वेन अन्तः मनसि कच्चिद्वसति वर्तते वा वसतीति गौणोयं प्रयोगः । कूलं पिपतिषतीति वत् । वसतिक्रियायाः विशेषणत्वेनाप्राधान्यं । करोतेश्च विशेष्यत्वेन प्राधान्यं । ततश्च तुमुना तत्कर्मणोऽभिहितत्वात् सप्ततन्तुमिति द्वितिया न भवति किं वा यष्टुकाम आगतासीति तृतीयःप्रश्नः । नहिभवादृशां आगमनमकारणं स्यात् अतन्तर्क्यत इत्याह । यदिति

**विश्वामित्रः**— ( विहस्य )

जनयति त्वयि वीर दिशां पतीनपि गृहाङ्कणमात्रकुटुम्बिनः ।
रिपुरिति श्रुतिरेव न वास्तवी प्रतिभयोन्नतिरस्तु कुतस्तु नः ॥ २६ ॥

अपिच

दत्तेन्द्राभयदक्षिणाद्भुतभुजासंभारगम्भीरया
त्वद्वृत्त्या शिथिलीकृतस्त्रिभुवनत्राणाय नारायणः ।

---

यत् यस्मात् संप्राप्तोसि स्वयमेव मद्गृहमागतोस्यतएवं पृच्छ्यत इति भावः । आप्तकामानां उक्तविधागमनं नस्यादिति मत्वाह किंवेति —यद्वा रघुकुलतपसां रघुवंशपूर्वपुण्यानामीदृशः भवदागमनरूपः अयं विवर्तः किं परिणामो वा अन्यथा भवद्दर्शनस्य दुर्लभत्वादिति भावः । ( वृ ) स्रग्धरा । तल्लक्षणन्तु 'म्रभ्नैर्यानां त्रयेण त्रिमुनियतियुता स्रग्धरा कीर्तितेयं' इति ॥ २९ ॥

जनयतीति—हे वीर त्वयि दिशां पतीनपि इन्द्रादिदिक्पालानपि गृहाङ्कणमात्रे गृहचत्वर एव कुटुंबिनः व्यापारवतः जनयति कुर्वाणे सति । जगद्रक्षाकृत्यस्य त्वयाऽनुष्ठितत्वादिति भावः । रिपुः शत्रुरिति श्रुतिरेववार्तैव 'श्रुतिःश्रोत्रे तथाम्नाये वार्तायां श्रोत्रकर्मणि' इति विश्वः । तत्रहेतुमाह । प्रतिभयोन्नतिः भयप्रादुर्भावः न वास्तवी न यथार्थभूता । सत्येवं कुतः कस्मात्कारणात् नः अस्तु पूर्वोक्तश्वापदादिकृतबाध इति शेषः । यद्वा । रिपुरिति श्रुतिरेव न, सत्येवं वास्तवी प्रतिभयोन्नतिः कुतोस्त्विति । ( वृ ) द्रुतविलम्बितं । तल्लक्षणन्तु 'द्रुतविलम्बितमाह नभौ भरौ।' इति ॥ २६ ॥

**दत्तेत्यादि** । नारं आपः अयनं आश्रयः अस्येति नारायणः विष्णुः 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ।' इति मनुवचनात् । दत्ता इन्द्राय अभयदक्षिणा अभयवाक् याभ्यां तयोः 'दक्षिणा वाचि यज्ञदानप्रतिष्ठयोः' इति विश्वः । अत एव अद्भुतयोः भुजयोः संभारेण समृध्या बलेनेति यावत् । गंभीरया दुराधर्षया । यद्वा । दत्तेन्द्राभया दक्षिणा सव्येतरा अद्भुता च भुजेति समासः । यद्वा। दत्तेन्द्राभयदक्षिण इति व्यस्तं पदं दशरथसंबोधनं । त्वद्वृत्त्या त्वद्व्यापारेण त्रिभुवनत्राणाय जगत्त्रयपालनं कर्तुं 'तुमर्थाच्च' इत्यादिना चतुर्थी 'संयोगादेः' इत्यादिना त्रैडो निष्ठातोनः शिथिलीकृतः प्रयत्नशैथिल्यमापादितः सन् अन्तस्तोषेण भूभरणश्रमनिवृत्त्युत्पन्नान्तरहर्षेण तुषारैः शीतलैः सौरभमयैः

अन्तस्तोषतुषारसौरभमयश्वासानिलापूरण-
प्राणोत्तुङ्गभुजंगतल्पमधुना भद्रेण निद्रायते ॥ २७ ॥

**दशरथः**— (सवैलक्ष्यस्मितम्) भगवन्विश्वामित्र, अभ्यमित्रीणस्य तत्रभवतः शुनासीरस्य नासीरपूरकेण पदातिपरमाणुना मयापि कदाचिदुद्धृतं धनुः तन्मूलोऽयमलीकलोकप्रवादो भवन्तमप्याप्याययति ।

**विश्वामित्रः**— (सोत्साहस्मितं) सखे,

त्रैलोक्याभयलग्नकेन भवता वीरेण विस्मारित-
स्तज्जीमूतमुहूर्तमण्डनधनुःपाण्डित्यमाखण्डलः ।

---

अतीव सुगन्धिभिश्च 'तत्प्रकृतवचनेमयट्' इति प्राचुर्यार्थे मयट् । श्वासानिलैः श्वासवायुभिः आपूरणं पूर्तिः येषां तैः । प्राणैः असुभिः उत्तुंगस्य उन्नतस्य भुजंगस्य शेषस्य तल्पं शयनीयं अध्यास्येति शेषः । यद्वा । अन्तरित्यादि विभक्त्यर्थेऽव्ययीभावः भुजङ्गतल्प इत्यर्थः अन्तर्गृहमितिवत् 'तल्पमट्टे कलत्रेच शयनीयेच न द्वयोः ।' इति मेदिनी । भद्रेण सुखं निद्रायते निद्राति इहनिद्रातीति क्विप् ततः आचारार्थे क्यङ् । सर्वजगद्रक्षाधुरंधरे त्वयि कुतोऽस्माकं पीडाशङ्केति भावः अतिशयोक्तिरलंकारः । ॥ २७ ॥

वैलक्ष्यं आत्मस्तुतिश्रवणाल्लज्जा । अमित्रं शत्रुं अभि लक्षीकृत्य अलंगच्छतीति अभ्यमित्रीणः 'अभ्यमित्राच्छ च' इति चात्खः । 'योगच्छत्यलं विद्विषतः प्रति । सोऽभ्यमित्रोऽभ्यमित्रीयोप्यभ्यमित्रीण इत्यपि ।' इत्यमरः । तस्य तत्रभवतः शुनासीरस्य इन्द्रस्य नासीरपूरकेण पदातिपरमाणुना पदातिष्वत्यल्पेन मयापि कदाचित्कस्मिंश्चिदवसरे उद्धृतं धनुः न किंचिदनुष्ठितमिति भावः । तन्मूलः तद्धनुर्ग्रहणहेतुकः अलीकोमिथ्याभूतः अज्ञातमूलत्वात् । लोकप्रवादः किंवदन्ती । भवन्तमप्याप्याययति प्रीणयति प्यायतेर्णिच् । उत्प्रासः अभिप्रायः । त्रैलोक्याति— त्रिलोक्येव त्रैलोक्यं चतुर्वर्णादित्वात्ष्यञ् । तस्य अभये अभयदाने प्रतिभुवा लग्नकेन 'स्युर्लग्नकाः प्रतिभुवः' इत्यमरः । वीरेण भवता कर्त्रा । आखण्डलः इन्द्रः तत् अतिप्रसिद्धम् मूयते बध्यतेऽस्मिन्निति मूतः जीवनस्य मूतः जीमूतः मेघः पृषोदरादित्वात्साधुः तत्र मुहूर्तमण्डनं क्षणालंकारभूतं धनुःपाण्डित्यं चापकौशलं विस्मारितः अभ्यासवैधुर्याद्विस्मृतिं प्रापितः । न केवलं धनुःशिक्षावैधुर्यमेव अपितु अस्वास्थ्यमपि प्रापित इत्याह किंच भवता अजस्रं अनवरतं मखेषु यागेषु अर्पितेन

किंचाजस्रमखार्पितेन हविषा संफुल्लमांसोल्लस-
त्सर्वाङ्गीणवलीविलुप्तनयनव्यूहः कथं वर्तते ॥ २८ ॥

**वामदेवः**—महाराज भूकाश्यप, यथाह भगवान् कौशिकः । स्वयमेकथा सुधर्मायामध्यक्षीकृतमहमपि किंचिद्ब्रवीमि.

त्वय्यर्धासनभाजि किन्नरगणोद्गीतैर्भवद्विक्रमै-
रन्तःसंभृतमत्सरोऽपि भगवानाकारगुप्तौ कृती ।

---

हविषा पुरोडाशादिना करणेन संपुल्लैः विकसितैः प्रवृद्धैरितियावत् मांसैः उल्लसन्तः उद्भूताः अत एव सर्वाङ्गीणाः सर्वाङ्गं व्याप्ताः 'तत्सर्वादेः' इत्यादिना खः 'कुमति च' इति णत्वं च वलयः त्वक्संकोचाः 'त्वक्संकोचास्तुवलयः' इति धनंजयः तैः विलुप्तनयनव्यूहः पिहिताक्षिसमूहस्सन् कथं वर्तते दौस्थ्यं भजति कथमिति क्षेपे प्रश्ने वा ॥ २८ ॥

कश्यपस्यापत्यं काश्यपइन्द्रः ऋष्यण् । भूकाश्यप भूपते अध्यक्षीकृतं साक्षाद्दृष्टं । तदेवाह त्वयीति— त्वयि अर्धमासनस्य अर्धासनं तद्भजतीति अर्धासनभाक् 'भजो ण्विः' तस्मिंस्तथाभूतेसति इन्द्रेण दुर्जयानसुरान्विजित्य तेन समविभक्तमेकासनमधिरूढे सतीत्यर्थः । आखण्डल इन्द्रः किन्नरगणेन उद्गीतैः स्तुतैः भवद्विक्रमैरसुरविजयनिमित्तैरितिशेषः । हेतौ तृतीया । अन्तर्मनासि संभृतो निबिडः मत्सर आत्मसमक्षमन्यस्तुत्यसहनद्वेषो यस्य तथाभूतः सन्नपि 'मत्सरोऽन्यशुभद्वेषे' इत्यमरः । आकारगुप्तौ तादृशमत्सरलिङ्गमुखवैकृतादिच्छादने भगवान् प्रयत्नवान् सन् 'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिषु' इत्यमरः । तत्र कृतीकुशलश्च 'कृती कुशलइत्यपि' इत्यमरः । कृतशब्दान्मत्वर्थीय इनिः । कुतो ज्ञायते तत्राह — उन्मीलतस्तादृशस्तुतिश्रवणेनोज्जृम्भमाणस्यभवदीयदक्षिणभुजायां रोमाञ्चस्य रोमोद्गमस्य विघ्नेन ताडनेन (भावे निष्ठा) उल्लसन्नुद्गच्छन् वाष्पोऽश्रु येभ्यस्तैरेव नेतरैरिति भावः । विलोचनैः आनन्दमभिनयत्यन्तर्मुदित इव बहिः प्रकटयति । यद्ययं प्रीत एव स्यात्तर्हि लोचनान्तरेणापि बाष्पायेत, कार्यलिङ्गेन हि कारणमनुमीयते सर्वत्र । 'आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च । नेत्रवक्त्रविकारैश्च दृश्यतेऽन्तर्गतं मनः ।' इति न्यायाच्च । तद्वैपरीत्यदर्शनादिन्द्रे त्वत्प्रसादकाङ्क्षित्वात्कारणोत्थैरेवाश्रुभिरान्तरं मत्सरं गोपायतीन्द्र इति गम्यते, तस्माद्विश्वामित्रोक्तं सत्यमेवेति भावः ॥ २९ ॥

उन्मीलद्भवदीयदक्षिणभुजारोमाश्चविड्डोल्लस-
द्राघ्यैरेव विलोचनैरभिनयत्यानन्दमाखण्डलः ॥ २९ ॥

**दशरथः**—(सस्मितम् ।) वामदेव, त्वमपि भगवन्तं विश्वामित्रमनुप्रविष्टोऽसि ।

एतस्मै समराङ्गणप्रणयिने तिष्ठेत कः प्रज्वल-
द्दंभोलिद्युतिमण्डलोद्भटभुजस्तंभाय जम्भारये ।
निर्यद्भिर्बहिरेष रोषदहनज्योतिःस्फुलिङ्गैरिव
स्वै रज्यद्भिरपीक्षणैः समतनोदाग्नेयमस्त्रं द्विषाम् ॥ ३० ॥

**विश्वामित्रः**—( दशरथस्यबाहुशिखरमास्फालयन् ) राजर्षे वसिष्ठशिष्य,

संवृत्तोऽयं यदि तव भुजच्छायया संप्रतीन्द्रो
निर्विघ्नश्रीरियमभिनवा कीदृशी ते प्रशस्तिः ।

अनुप्रविष्टोऽस्यपारमार्थिकस्तुतिपरोऽसि । इन्द्रेण युद्धे स्थातुं शक्त एव नास्ति तस्य सहायापेक्षा कुत इत्याह **एतस्मा इति**— समराङ्गप्रणयिने युद्धप्रियाय प्रज्वलतो दीप्यमानस्य दम्भोलेर्वज्रायुधस्य द्युतिमण्डलेन कान्तिसमूहेन उद्भटो भयंकरः भुजस्तम्भो यस्य तस्मै एतस्मै जम्भारये इन्द्राय कस्तिष्ठेत शत्रुत्वेनात्मानं प्रकाशयेत् ' प्रकाशनस्थेयाख्ययोश्च ' इति तिष्ठतेस्तङ् । ' श्लाघह्नुस्था ' इत्यादिना ' एतस्मै ' इत्यस्य संप्रदानत्वम् । वज्रिणः प्रतियोद्धैव नास्तीति भावः । अथ यः कश्चिन्मोहाद्दर्पाद्वा युयुत्सुः स्यात्तत्राप्याहोतरार्धेन– एष इन्द्रः बहिर्निर्यद्भिर्निर्गच्छद्भिः रोषदहनज्योतिःस्फुलिङ्गैः कोपाग्निकणैरिव स्थितैः अत एव रज्यद्भिः रागं प्राप्नुवद्भिः ' कुषिरजो ': इत्यादिना कर्मकर्तरिप्रयोगोऽयम् । स्वैरीक्षणैरपि द्विषां शत्रूणां आग्नेयमग्निदेवताकं ' सास्य देवता ' इत्यधिकरणे ' अग्नेर्ढक् ' अस्त्रमायुधं समतनोत्सृष्टवान् । तत्कोपाग्निनैव दग्धः स्यादिति भावः ॥ ३० ॥

आस्फालयन्नामृशन् । अनेनात्यादरो दर्शितः । प्रथमसंबोधनेन तस्य निर्दोषत्वं, द्वितीयसंबोधनेन तस्य सत्वोत्कर्षश्च दर्शितः । मदुक्तिः सत्यैव, तथापि नैतदिक्ष्वाकुष्वद्भुतमित्याह **संवृत्त इति** —इन्द्रः संप्रतीदानीं तव भुजच्छायया बाहुकर्तृकपालनेन ' छाया स्यादातपाभावे प्रतिबिम्बार्कयोषितोः । पालनोत्कोचयोः कान्तिसच्छोभापङ्क्तिषु स्मृता । ' इति विश्वमेदिन्यौ । निर्विघ्नश्रीर्निरुपद्रवलक्ष्मीर्निःसपत्न इति यावत् संवृत्तोऽभूद्यदि तर्हि इयमभिनवा कीदृशी ते प्रशस्तिः न काप्यपूर्वा तव ख्यातिरित्यर्थः । हि य-

इक्ष्वाकूणां लिखितपठिता स्ववंधूगण्डाभित्ति-
क्रीडापत्रप्रकरमकरीपाशुपाल्यं हि वृत्तिः ॥ ३१ ॥

**दशरथः**— भगवन् सर्वाद्भुतनिधे, भवन्तमुक्तिप्रत्युक्तिकयानुगन्तुमपि के वयम् । एवं किल त्रिशंकुसंकीर्तनोपाख्यानपारदृश्वानः पौराणिकाः कथयन्ति ।

त्रासोत्कंपित्रिदशपरिषन्मौलिमाणिक्यमाला-
बालादित्यप्रकरकिरणस्मेरपादारविन्दे ।
प्राचीमेतां भुवनरचनामन्यथा निर्मिमाणे
कार्पण्योक्तीस्त्वयि रचितवानन्तरायं महेन्द्रः ॥ ३२ ॥

---

स्मात् इक्ष्वाकूणामिक्ष्वाकुवंश्यानां राज्ञां इक्ष्वाकुशब्दस्य तद्राजत्वात्तदपत्ये बहुषु लुक् । वृत्तिर्वृत्तान्तः लिखिता पठिता च लिखितपठिता सम्यगभ्यस्तेत्यर्थः । कथं तदाह स्ववंधूनां देवस्त्रीणां गण्डभित्तिषु कपोलप्रदेशेषु 'भित्तिः कुड्यप्रदेशयोः' इति मेदिनी । क्रीडापत्राणां विनोदार्थं लिख्यमानानां पत्राकाररचनाविशेषाणां पाशुपाल्यं रक्षणं तदेव तेषां वृत्तिरिति भावः । एवममरीरक्षकत्वोक्त्या देवानामपि तदधीनत्वं दर्शितम् । अतो नायमपूर्वो धर्मो येन विस्मयः स्यादिति भावः । अत्रानाश्चर्यसमर्थनात्काव्यलिङ्गं, सर्वश्रैष्ठ्यस्य भङ्ग्यन्तरेण कथनात्पर्यायोक्तिश्चालंकारौ । वृत्तं मन्दाक्रान्ता तल्लक्षणं तु 'मन्दाक्रान्ता जलधिषडगैम्भौं नतौ ताद्गुरू चेत् ।' इति ॥ ३१ ॥

उक्तिप्रत्युक्तिकया प्रत्युक्तिदानेनापि । किमु वक्तव्यं कृत्येनेति भावः त्रिशङ्कोः संकीर्तनस्योपाख्यानस्य (करणे ल्युट्) इतिहासस्य पारदृश्वानः पारं दृष्टवन्तः 'दृशेः क्वनिप्' पुराणं विदुरधीयते वा पौराणिकाः 'आख्यानाख्यायिकेतिहासपुराणेभ्यश्च' इतिठक् । त्रासेति — त्वयि प्राचीं पुरातनीं एतां भुवनरचनां जगत्सृष्टिं अन्यथा प्रकारान्तरेण निर्मिमाणे निर्मातुं प्रवृत्ते अत एव त्रासेन तज्जनितभयेन उत्कम्पिन्या वेपमानायाः त्रिदशपरिषदो देवसमूहस्य मौलिमाणिक्यमालायाः किरीटमणिपङ्क्तेरेव 'चूडा किरीटं केशाश्च संयता मौलयस्त्रयः ।' इत्यमरः बालादित्यप्रकरस्य बालसूर्यसमूहस्य किरणेन स्मेरे प्रकाशमाने पादारविन्दे यस्य तथाभूते सति 'नमिकम्पि' इत्यादिना स्मयते रः । स्मेरत्वं चोपचारात् । अराणि विन्दतीत्यरविन्दं गवादित्वात् शः । महेन्द्रो देवेन्द्रः कार्पण्योक्तीर्दैन्यवचनानि अन्तरायं विघ्नं रचितवान् । न तु स्वसामर्थ्येन तव सृष्टिप्रवृत्तिं निरोद्धुमशकदिति भावः ॥ ३२ ॥

(विहस्य ।)

जवादाराद्धुं त्वामुपनमति वर्गे दिविषदा-
मपध्वस्तो मन्दैरजनि रथहंसैः कमलभूः ।
नियच्छामो जिह्वां न तव चरितेभ्यः किमुत ते
सुधासध्रीचीनामतिपतति वाचामवसरः ॥ ३३ ॥

(अञ्जलिं बध्वा) भगवन् प्रसीद तावत् । उत्तरोत्तरेषां महोत्सवानां कदाचिदपि न तृप्यन्ति पुंसां हृदयानि, यदियं त्वदुपस्थानसुलभसंभावनातिप्रसंगसंगीतनर्त्तकी मे चित्तवृत्तिर्नियोगानुग्रहाय स्पृहयति ।

अपि च ।

एताभिस्तव कौतुकोक्तिभिरपि त्रैविद्यमूर्त्तेरिव
त्वष्टस्यामरशिल्पिना दिनकृतोऽवच्छेदवेदाक्षरैः ।

---

न केवलमिन्द्र एव त्वयि दैन्यमाचारीदपि तु ब्रह्मापीत्याह जवादिति— दिविषदां वर्गे देवसङ्घे त्वामाराद्धुं प्रारब्धसर्गान्तरविरामाय प्रसादयितुं ब्रह्मर्षित्वदानेन समाधातुं वा (दैवादिकस्य राधेरनुदात्तेत्त्वेन नेट् ।) जवाद्वेगेन उपनमत्यागच्छति सति । कमलभूर्ब्रह्मा मन्दैर्वेगरहितैः रथहंसै रथनियुक्तै रथमूतैर्वा हंसैः अपध्वस्तः परित्यक्तः 'अपध्वस्तः परित्यक्ते निन्दितेऽप्यचूर्णिते ।' इति विश्वः । अजन्यभूत् 'दीपजन' इत्यादिना पाक्षिकश्च्लेश्चिण् । तव चरितेभ्य एवमादिभ्यश्चरित्रेभ्यः जिह्वां रसनां न नियच्छामो नोपसंहरामः 'इषिगमियमां छः' इतिच्छः । तर्ह्युच्यतां तत्राह किमुतापितु सुधासध्रीचीनाममृतसहचरीणां 'सहस्य सध्रिः' 'यः सहाञ्चति सध्र्यङ् सः' इत्यमरः । ते वाचामवसरोऽवकाशः अतिपतत्यतिक्रामति । त्वदुक्तिमधुरसास्वादभङ्गभयाद्देवोपरम्यत इति भावः ॥ ३३ ॥

यद्यप्युपर्युपरि सल्लापगोष्ठी सुखयत्येव तथापि प्रस्तुतार्थानवबोधादाकुलोऽस्मीत्याह यदित्यादिना । त्वदुपस्थानेन त्वदागमनेन सुलभायाः सुखेन लब्धुं शक्यायाः संभावनाया अतिप्रसङ्गोऽतिशय एव संगीतं रङ्गस्थलं तत्र नर्तकी । यद्वा । संभावनायामतिप्रसङ्गोऽत्यासक्तिस्तत्र संगीतविशिष्टनर्तनकार्त्री । यद्वा । तव उपस्थान आराधने यः संभावनातिप्रसङ्गः पूजाविशेषस्तत्र संगीते नर्तकी । नियोगानुग्रहाय संदेशरूपं प्रसादं लब्धुम् स्पृहयतीच्छति एताभिरिति— वयं ऋग्यजुःसामाख्यास्तिस्रो विद्या एव त्रैविद्यं मूर्तिर्यस्य तस्य 'एषा एव त्रयी

पूताः स्मो वयमद्य यद्यपि तथाप्याज्ञामपि स्यामहो
वोढा विष्टिरनर्घता रघुकुले कल्पान्तमुन्मीलतु ॥ ३४ ॥

**विश्वामित्रः**— ( विहस्य ) ऐन्दुमतेय, किमन्यन्नियोज्यम् ।

निर्मुक्तशेषधवलैरचलेन्द्रमन्थ-
संक्षुब्धदुग्धमयसागरगर्भगौरैः ।
राजन्निदं बहुलपक्षदलन्मृगाङ्क-
च्छेदोज्वलैस्तव यशोभिरशोभि विश्वम् ॥ ३५ ॥

पुनरिदानीमपि,

---

विद्या' इति श्रुतेः । अमराशिल्पिना विश्वकर्मणा त्वष्टस्य-तनूकृतस्य । इदं विशेषणद्वयं साभिप्रायम् । दिनकृतः सूर्यस्य अवच्छेदैः खण्डरूपैः वेदाक्षरैरिव स्थिताभिः एताभिः पूर्वोक्ताभिः तव कौतुकोक्तिभिर्विनोदस्तुतिवचनैरपि अद्य यद्यपि पूताः स्मः पवित्रीकृता एव तथापि आज्ञामपि वोढा स्यां निर्वाहको भवेयम् । रघुकुले विष्टिर्मूल्यरहिता ' विष्टिः कर्मकरेऽमूल्ये भद्राजूप्रेरणेषु च' इति हैमः । अनर्घतातीव पूज्यत्वं अनर्घशब्दोऽत्यर्घवाचकोऽघोरशब्दवत् । कल्पान्तमाकल्पं अत्यन्तसंयोगे द्वितीया उन्मीलतु विकसतु ॥ ३४ ॥

इन्दुमत्या अपत्यं पुमानैन्दुमतेयः 'स्त्रीभ्यो ढक्' । अनेन संबोधनेन हे दशरथ त्वत्पित्रा अजेन सर्वराजन्यककाङ्क्षितापि त्वन्माता तेषां पश्यतामेव यथोदूढैवं त्वत्पुत्रेण रामेणापि सीता परिणेया, एतदर्थमेव ममागमनमिति सूचितम् । निर्मुक्तेति— राजन् हे दशरथ, निर्मुक्तशेषवन्मुक्तकञ्चुकशेषाख्यसर्पवत् धवलैः शुभ्रैः । एतेन पाताललोकव्याप्तिरुक्ता । अचलेन्द्रेण मन्दरगिरिणैव मन्थेन मन्थदण्डेन 'वैशाखमन्थमन्थानमन्थानो मन्थदण्डके ।' इत्यमरः । संक्षुब्धस्य सम्यगालोडितस्य 'क्षुब्धस्वान्त' इत्यादिनार्थविशेषेऽनिट्कत्वं निपात्यते । दुग्धमयसागरस्य गर्भवत्फेनोद्वर्तनस्थानवत् गौरैः शुभ्रैः । एतेन समुद्रान्तभूव्याप्तिः सूचिता । बहुलपक्षे कृष्णपक्षे 'बहुलः कृष्णपक्षेऽपि' इतित्रिकाण्डशेषः । दलन्विशीर्यमाणो यो मृगाङ्कच्छेदश्चन्द्रखण्डस्तद्वत् उज्ज्वलैर्दीप्तैः । एतेन स्वर्गलोकव्याप्तिरुक्ता । कृष्णपक्षे चन्द्रकलाया अतिधावल्यं प्रसिद्धमेव, एवंरूपैस्तव यशोभिः कर्तृभिः इदं विश्वमशोभि शोभितम् ॥ ३५ ॥

यशस्तोमानुच्चैरुपचिनु चकोरप्रणयिनी-
रसज्ञापाण्डित्यच्छिदुरशशिधामभ्रमकरान् ।
अपि त्वत्तेजोभिस्तमसि शमिते रक्षतु दिशा-
मसौ यात्रामैत्रीं नभसि नितराममम्बरमणिः ॥ ३६ ॥

किंतु कतिपयदिवसानायुधसध्रीचा रामभद्रेण सन्निहितवैतानक्रियाणामस्माकमाश्रमपदं सनाथीकरिष्यते । अपि च ।

मध्येकृत्य घनं धिनोति जलधिः स्वैरम्बुभिर्मेदिनीं
हन्ति स्वैः किरणैस्तमिस्रमरुणं कृत्वाऽन्तराले रविः ।

इदानीं विवक्षितमर्थं सामान्येन निर्दिशति पुनरित्यादिना । यश इति— चकोरप्रणयिनीनां चकोरस्त्रीणां रसज्ञापाण्डित्यस्य जिह्वाकौशलस्य छिदुरं छेदकं 'विदिभिदि' इत्यादिना कुरच् । शशिधाम इयं चन्द्रकान्तिरिति भ्रमकरान् भ्रान्तिहेतुभूतान् यशसः स्तोमान् समूहान् उच्चैरधिकं इदानीमपि उपचिनु वर्धय क्षीरपिष्टजलयोः सारूप्याच्चक्षुषा भेदाग्रहेऽपि जिह्वया यथा विवेचनं भवत्येवमपि चकोर्यस्त्वद्यशो यथा न गृह्णीयुस्तथा धावल्यगुणेनेव माधुर्येण चाविशिष्टं वर्ध्यतामित्यर्थः । अयं भावः— इतः पूर्वं त्वया यद्यश आर्जितं तद्व्यवहारमात्रसुभगं, इत ऊर्ध्वं रामद्वारा यद्यशस्तच्चकोरीक्षुन्निवर्तनक्षमामृतकिरणवत्तापत्रयनिवर्तनप्रयोजनं भविष्यति , तद्धेतुत्वान्मदागमनस्य रामं प्रेषयेति ध्वनिः । न केवलं यशस एवातिशयितत्वमपि तु प्रतापस्यापीत्याह अपि किंच । त्वत्तेजोभिस्त्वत्प्रतापैः दिशां तमस्यन्धकारे दुःखे च शमिते शमं प्रापिते सति, असावम्बरमणिः सूर्यः नभस्याकाशे यात्रामैत्रीं केवलं स्वच्छन्दसंचारप्रीतिं, यद्वा । पूर्वं तमोध्वंसाय या यात्राभ्यस्ता तत्र मैत्रीं संस्कारानुवृत्त्या प्रीतिं । यद्वा । सूर्यस्य हि द्वयी वृत्तिः तमोहननं लोकयात्रा चेति, तत्राद्याया अन्यथा सिद्धत्वेन द्वितीयस्यां यात्रायामेव मैत्री यात्रामैत्री तां अभक्षादिवत्समासः । नितरां रक्षतु भृशं पालयतु । एवं च मया सह रामप्रेषणद्वारा आचन्द्रार्कस्थायिनीं प्रतिष्ठां लभस्वेति फलितार्थः ॥ ३६ ॥

तदेव विशदयति किं त्विति । आयुधसध्रीचा युद्धार्थं गृहीतास्त्रेण । संनिहिता आसन्ना वैतानक्रिया यज्ञसंबन्धिदीक्षाप्रवेशादिकर्म येषां तेषाम् । 'क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके ।' इत्यमरः । कतिपयदिवसान् कानिचिद्दिनानि । अत्यन्तसंयोगे द्वितीया । सनाथीकरिष्यत उच्यतामि-

त्वं रामान्तरितश्च पालय निजैरेव प्रतापैः प्रजा-
मीदृक्कोऽपि परोपकारसुहृदामेष स्वभावो हि वः ॥ ३७ ॥

किंच ।

दृष्टः सक्षादसुरविजयी नाकिनां चक्रवर्त्ती
मात्स्यो न्यायः कथयति यथा वारुणी दण्डनीतिः ।

---

त्यर्थः । ननु तर्ह्यहमेवागच्छामि किं रामेणेत्यत आह मध्येकृत्येति— जलधिः समुद्रः घनं मेघं मध्येकृत्य मध्ये निधाय 'मध्ये पदे निवचने च' इति गतिसंज्ञा । स्वैरम्बुभिः स्वकीयैरेव जलैः मेदिनीं भुवं धिनोति प्रीणयति, तथा रविः सूर्यः अरुणं गरुडाग्रजं अन्तराले कृत्वा मध्ये निधाय स्वैः किरणैः स्वकान्तिभिरेव तमिस्रं तमस्ततिं हन्ति नाशयति, दृष्टान्तार्थं दार्ष्टान्तिके निगमयति । तथा त्वं च रामेणान्तरितो व्यवहितः सन् रामे राज्यधुरां न्यस्येति यावत् निजैरेव प्रतापैः प्रजां प्रकृतिं जात्येकवचनम् । पालय । न चायमागन्तुको धर्म इत्याह ईदृगेवंप्रकारः कोऽप्यनितरसाधारणः एषः परोपकारे सुहृदां तत्पराणामिति यावत् । वः स्वभावो हि निसर्ग एव । हिरवधारणे । तस्माद्रामकृतस्य त्वत्कृतत्वं न व्याहतमिति भावः ॥ ३७ ॥

इदानीं प्रस्तुतसाधनार्थं स्तौति दृष्ट इति— राजव्यतिक्रमेण धर्मव्यतिक्रमेण प्रजाव्यतिक्रमेण च लोकान्तरेषु न सौख्यं । तत्कुत इति चेत्— नाकिनां चक्रवर्ती इन्द्रः असुरविजय्यसुरकर्तृकाविजयवान् साक्षादृष्टः, दुर्बलत्वात्तल्लोके सुखं नास्तीति भावः । यद्वा । असुरकर्मकाविजयवान् विजयशब्दान्नित्ययोगे मत्वर्थीय इनिः । यद्वा । 'जिदृक्षि' इत्यादिना ताच्छीलिको णिनिः । ततश्च सदा युद्धशीलः सन् प्रजा न पातीति भावः । यद्वा । साक्षादसुरविजयीति च पदच्छेदः । साक्षादसुश्चेतनोऽपि सन् अविजयी शैलजयप्रवृत्तः 'अवयः शैलमेषार्काः' इत्यमरः । एतेनाधर्मयुद्धकृदित्यर्थः । यद्वा । अविरूपेण मेषरूपेण काण्वायनं मेधातिथिं जितवान् सैषा भारतीया कथा 'मेधातिथेर्मेष' इति श्रुतिश्चात्र भवति । यद्वा । अविना मेषेणोत्कर्षं प्राप्तः सन् साक्षादसुर्दृष्टः, अन्यथा प्राणहानिप्रसङ्गात् । अहल्याधर्षणकुपितेन गौतमेन निर्वृषणः कृतः सन्निन्द्रः पितृदेवतानुग्रहेण मेषवृषणं प्राप्य सजीवो बभूवेति कथानुसन्धेया । एतेन गाढो दुर्वृत्तत्वं दर्शितम् । यद्वा । साक्षात् असुरविजयीत्येव पदच्छेदः । त्रिविधो हि राजा धर्मविजयी, लोभविजयी,

पाताले द्रागहिभयमथास्त्येव नित्यानुषक्तं
तन्नः पुण्यैरजनि भवता वीर राजन्वती भूः ॥ ३८ ॥

असुरविजयी चेति। तत्र यः शत्रुं विजित्य नृपश्रियमपहृत्य, तं शत्रुं तस्मिन्नेव स्थाने स्थापयति स धर्मविजयी। यः शत्रुं विजित्य तदीयां श्रियं मेदिनीं च गृहीत्वा प्राणैर्न विकुरुते स लोभविजयी। यः शत्रुं हत्वा तदीयां श्रियं मेदिनीं च गृह्णाति सोऽसुरविजयीति। तेष्वयमिन्द्रः साक्षादसुरविजयी दृष्टः। बलवृत्रनमुच्यादिषु तथाचरणदर्शनादितिभावः। 'इन्द्रो वृत्रं हत्वा। असुरान् पराभाव्य' इत्यादिश्रुतयश्चात्र भवन्ति। एवं चासुरविजयित्वस्याधमत्वेन तस्य निन्द्यत्वं दर्शितम्। एवं राजव्यतिक्रमबाहुल्यात्तल्लोके प्रजानां न स्वास्थ्यम्। तर्हि प्रतीच्यां को दोष इत्यत आह मात्स्य इति। यद्यपि वरुण ईदृशदोषो नास्ति, तथापि तद्देशधर्मः प्रजाहितकरो न भवस्ततो वारुणी वरुणसंबन्धिनी दण्डनीतिर्दुष्टनिग्रहशिष्टपरिपालनधर्मशास्त्रमपि न साध्विति शेषः। कुतो ज्ञातमित्यत आह मात्स्यो न्यायः कथयति यथेति दृष्टान्तप्रदर्शनार्थः। अयं भावः यो बलवांस्तस्य दुर्बल आहारभूत इति मत्स्यसंबन्धी न्यायः, तेन चानुमीयते सर्वोऽपि धर्मस्तत्रैवमेव स्यादिति। न हि प्रबलेन दुर्बलस्य बाधो धर्मः, तस्मात्तत्रापि न सुखम्। एवमन्यासु दिक्ष्वप्यूह्यम्। तर्हि पाताले को दोषः तत्र प्रजाव्यतिक्रमाच्च सुखमित्याह। पाताले द्राक्सपदि अहिभयं सर्पकर्तृकं भयं अथ कार्त्स्न्येन 'मङ्गलानन्तरारम्भप्रश्नकार्त्स्न्येष्वथो अथ'।, इत्यमरः। नित्यानुषक्तमस्त्येव सदातनं भवत्येव। ननु सर्पाणां कुतस्तद्भयं तत्राह तन्त्रेण अहिभयं स्वपक्षभयम्। तदुक्तं 'तत्स्यादाहिभयं यत्तु स्वपक्षप्रभवं भयम्'। इति। अत्र कथाद्वय्यनुसन्धेया। एका तावत्। पुरा किल गरुडः क्षुधितः क्षुधा सर्वानपि सर्पान् यौगपद्येन भोक्तुमारब्धवान्, ततश्च तैः प्रतिमासमेकैकसर्पोपहारीकरणेन समाहितः। तदर्थं प्रधानैः सर्पैयः कश्चिद्गरुडबल्यर्थं बलादेव नियुज्यते, तस्य दुर्वारत्वादिति भावः। अन्या तु कथा काश्यपपत्न्यौ विनताकद्रावुच्चैःश्रवसो वालवर्णं प्रति विवदमाने शपथं चक्रतुः। तस्यानैल्ये विनतां प्रति कद्र्वा दास्यमितरथा विनताया इति। तस्य शौक्ल्यं जानाना कद्रूः स्वपक्षजयैषिणी तन्नैल्यकरणाय स्वपुत्रान्व्यादिदेश, तदनादरेण कुपिता सत्यमी भस्मसाद्भूयास्तेति शशाप अस्याः कथाया गरुडोपसर्पतः आधीनत्वेन महासंगतिः। तत यस्मादेवं तस्मात् हे वीर भूर्भूमिः नोऽस्माकं पुण्यैः पूर्वसुकृतैरेव हेतुभूतैः भवता भवल्लाभेनेत्यर्थः

**दशरथः**—( सविषाद स्वगतम् । ) कथमिदमस्माकं सकललोकशोकशङ्कूद्धरणशीलेभ्यः कौशिकपादेभ्यो रामभद्रप्रवासवैमनस्यमप्युत्पत्स्यते । दृष्टं वा निःशेषानन्दनिष्यन्दिनीनामपीन्दुकरकन्दलीनां कमलिनीनिमीलनमातंकस्थानम् । विमृश्य । का गतिः ।

कूर्मराजभुजगाधिपगोत्रग्रावदिक्करिभिरेकधुरीणः ।
मां प्रसूय कथमद्य विगीतो हा परार्थविमुखो रघुवंशः ॥ ३९ ॥

---

राजन्वती सद्राजविशिष्टा 'राजन्वान् सौराज्ये' इति निपातनात्साधुः । अजन्यभूत् । एतेन स्वयं सर्वजनानुकूलो धार्मिकश्च, धर्मोऽपि सर्वीयः, प्रजाश्च तादृश्य इति निश्चितम् ॥ ३८ ॥

सविषादं रामप्रार्थनदुःखेन सह । **स्वगतमिति** । 'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मतं' इति दशरूपके । सकललोकानां सर्वजनानां शोकशंकोः दुःखशल्यस्य उद्धरणशीलेभ्योनाशनस्वभावेभ्यःकौशिकपादेभ्यः पादशब्दोत्रपूज्यवाचकः । इदं रामभद्रस्य प्रवासेनवियोगेन वैमनस्यं दुःखं अस्माकं उत्पत्स्यते कथं । न जायेतेति भावः । अथवाजायेतैव । ननुविषममिदं अमृतान्मरणमिव सर्वदुःखहराद्दुःखोत्पत्तिरिति नेत्याह **दृष्टमिति** । वेति विकल्पार्थः 'वास्याद्विकल्पोपमयोरेवार्थेच समुच्चये' इति विश्वः । अवधारणार्थोवा दृष्टमेवेति । निःशेषानन्दनिःष्यदिनीनामपि सर्वजगदाह्लादयित्रीणामपि इन्दुकरकन्दलीनां चन्द्रिकांकुराणां कमलिनीमीलनं पद्माकरसंकोचनं कमलानि सन्त्यस्यामिति कमलिनी पुष्करादित्वादिनिः । कमलानां समूहः कमलिनीतिकेचित् । आतंकस्थानं भयहेतुत्वं 'रुक्तापशंकास्वातंकः' इत्यमरः । विमृश्य किं वा रामभद्रः प्रेष्यतां उतकौशिकाभ्यर्थना वा प्रत्याख्यायतामित्यालोच्य । उभयथाऽपि दोषमाह कागतिरिति । रामे प्रेषिते मज्जीवितस्य कागतिरिति भावः । प्रत्याख्यानेतु कागतिरिति समस्तं पदं कुत्सैवस्यादिति भावः । तदेव विशदयति **कूर्मराजेति** । कूर्मराजः कमठरूपोविष्णुः भुजगाधिपः शेषः गोत्रग्रावाणः कुलाचलाः दिक्करिणः दिग्गजाः तैः एकधुरीणः एकधुरः 'उभावेकधुरीणैकधुरावेकधुरावहे ।' इत्यमरः । 'एकधुराल्लुक् च' इति खात्वः तैः सह त्वयाभूरुद्धातामेकएव वहतीति भावः । तादृशो रघुवंशः मां प्रसूय उत्पाद्य परार्थविमुखः परकार्यमसाधयन्सन् अत एव कथं विगीतो भवतु हा कष्टं । (वृ) स्वागता । तल्लक्षणंतु 'स्वागतेति रनभाद्गुरुयुग्मं' इति ॥ ३९ ॥

**विश्वामित्रः**—( सस्मितम् । ) राजर्षे, ममकारो हि राजपुत्रेषु राज्ञामुपलालनक्लेशाय केवलं । उपयोगस्तु प्रजानां । यथैतत् ।

**कष्टा वेधव्यथा कष्टो नित्यं च वहनक्रमः ।**
**श्रवणानामलंकारः कपोलस्य तु कुण्डलं ॥ ४० ॥**

**दशरथः**—( सविनयोपरोधम् । ) भगवन्, परमनुगृहीता वयमेवमत्रभवता संभाव्यमानाः । किंतु पुनः, अकृतास्त्रः क्षीरकण्ठश्चमे वत्सोऽयमिति प्रमुग्धोऽस्मि ।

**विश्वामित्रः**—( विहस्य । ) सखे, तत्रभवन्तं मैत्रावरुणिमृषिं पुरोधाय चरितब्रह्मचर्यस्य धनुर्वेदसंस्कारास्तावदस्य कृशाश्वप्रसादादस्मास्वायतन्ते ।

**दशरथः**—( सविनयोपरोधम् । )भगवन्, उच्छ्वसितमपि रघुराजबीजिनां त्वदायत्तमेव । किमुत कार्मुकविद्यासंप्रदायः । शङ्के सहस्रकिरणकुले-

---

हि यस्मात् । राजपुत्रेषु विषये ममकारः आत्मीयत्वाभिमानः ममेति विभक्तिप्रतिरूपकमव्ययं । उपलालनक्लेशाय केवलं उपचारद्वारा आत्मानं क्लेशयितुमेवनतुसुखाय तत्र दृष्टान्तमाह कष्टेति । श्रवणानामिति पूर्वार्धेनानुबध्यते । श्रवणानां श्रोत्राणां वेधव्यथा छिद्रकरणपीडाकष्टा कृच्छ्रा 'कृच्छ्रगहनयोः कषः' इतीण्निषेधः । तथा नित्यं वहनक्रमश्च सदाधारणश्रमश्चकष्टः । एतदेव कुण्डलनिमित्तं फलं श्रवणानां । तर्हि कुत्र तदुपयोगइत्यतआह कुण्डलं कर्णभूषणं । 'कुण्डलं वलये पाशे कुण्डलं कर्णभूषणे ।' इति विश्वः । कपोलस्यतु गण्डस्यैव अलंकारो भूषणं तद्वद्रामादिनिमित्तं सुखमस्माकमेवेति भावः ॥ ४० ॥

विनयेन प्रश्रयेण उपरोधेन अन्तर्व्यथया च सह सविनयोपरोधं । अत्रभवता भवतेतिशेषः एवं रामाद्युपयोगस्त्वस्माकमेवेति वदनेन संभाव्यमानाः बहुमान्यमानाः वयं परमनुगृहीताः नितरां प्रसादपात्रीकृताः । किंतु पुनः अपि तु, अयंमे वत्सो रामः अकृतास्त्रः अशिक्षितायुधविद्यः क्षीरकण्ठः बालश्चेति हेतोः प्रमुग्धोऽस्मि । विहस्य रामस्वरूपस्य मत्स्वरूपस्य चापरिज्ञानादस्य मोह इति हासंकृत्वा । मैत्रावरुणिमृषिं पुरोधाय वसिष्ठं पुरोहितं कृत्वा चरितब्रह्मचर्यस्य अनुष्ठितोपनयनादिसंस्कारस्य अस्य रामस्य धनुर्वेदसंस्काराः अस्त्रशास्त्रप्रयोगोपसंहारादिप्रातियत्नक्रियाः 'संस्कारः प्रतियत्नेऽनुभवे मानसकर्मणि' इति मेदिनी । प्रतियत्नोगुणाधानं । तावत् साकल्येन कृशाश्वस्य अस्मद्गुरोः प्रसादात् अस्मासु आयतन्ते आयत्ता वर्तन्ते । रघुराजबीजिनां रघुराजवंश्यानां 'राजबीजी राजवंश्यः' इत्यमरः । उच्छ्वसितमपि जीवितमपि । कर्मणे प्रभवति कार्मुकं । 'कर्मण

पक्षपातेनैव सहस्रपरिवत्सरान् भगवन्तं कृशाश्वमुपासीनो दिव्यास्त्रमन्त्रमध्यगीष्ठाः ।

**विश्वामित्रः**—अलं च ते रामभद्रेऽपि बालोऽयमिति संभावनया । द्यावापृथिव्योस्तिमिरातिरस्करणीं तरणिरणुतरोऽपि निजतेजसा तिरस्करोति ।

**दशरथः**—भगवन् कुशिकनन्दन, कस्य तादृशी तलिना जिह्वा या त्वामपि ब्रुवाणमधरोत्तरेण प्रतिसंधत्ते । (अपवार्य) वामदेव, 'एवमत्रभवान् कौशिको ब्रवीति ।

**वामदेवः**—राजर्षे, किमत्र प्रष्टव्या वयम् ।

**कौशिकोऽर्थी भवान्दाता रक्षणीयो महाक्रतुः ।**
**रक्षिता रामभद्रश्चेदनुमन्यामहे वयम् ॥ ४१ ॥**

अपि च ।

**जगतीभारखिन्नानां विश्रामो भवतामयम् ।**
**यद्यथाकामसंप्राप्तिप्रीतार्थिमुखदर्शनम् ॥ ४२ ॥**

---

उकञ्' इत्युकञ् । संप्रदायः उपदेशक्रमः । सहस्रकिरणकुले सूर्यवंशे एकपक्षपातेनैव मुख्याभिमानेनैव । कृशाश्वमुनिं सहस्रंपरिवत्सराः संवत्सराः तान् अत्यन्तसंयोगे द्वितीया उपासीनः आराधयन् दिव्यास्त्राणांमन्त्रंवेदभागं 'वेदभागे गुप्तवादे मन्त्रः' इत्यमरः । अध्यगीष्ठाः अधीतवानसि इङोलुङि गाङादेशे गाङ्कुटादिभ्य इति ङित्वातिदेशेन घुमास्थेतीत्वं । इति शंके तर्कयामि । एवं स्वमाहात्म्यं किंचिदावेद्य रामस्वरूपमपि किंचित्सूचयति अलंचेत्यादिना । संभावनया अलं संभावनांमाकुर्वित्यर्थः । अणुतरोऽपि अतिसूक्ष्मोऽपि तरणिः सूर्यः द्यावापृथिव्योः रोदस्योः । 'दिवसश्च पृथिव्यां' इति चाद्द्यावादेशो दिवः । 'द्यावापृथिव्यौ रोदस्यौ' इत्यमरः । तिमिरातिस्करणीमन्धकारयवनिकां 'प्रतिसीरायवनिकास्यात्तिरस्करणीच सा' इत्यमरः । तेजसातिरस्करोति अपाकरोति ॥ तलिनास्तोकातुच्छेतियावत् । तलिनंविरलेस्तोके' इति मेदिनी । अधरस्य उत्तरेण अधरोत्तरेण प्रत्युत्तरेणेतियावत् कःप्रतिसंधत्तेनकोप्याक्षिपति । **अपवार्येति** । 'रहस्यंकथ्यतेऽन्यस्य परावृत्यापवारितम् ।' इत्युक्तं तल्लक्षणं दशरूपके । किमत्रकर्तव्यामितिशेषः । अत्र रामप्रदानविषये । **कौशिक इति** । रक्षिता रक्षणसमर्थः 'अर्हेकृत्यतृचश्च' इति अर्हेतृच् । चेत् एवंनिश्चितेसति वयं अनुमन्यामहे अंगीकुर्मः सुगममन्यत् ॥ ४१ ॥

एवं सामान्येन दातव्यत्वमुक्त्वा तस्य आवश्यकत्वमाह **जगतीति**

किं च विशेषेण ।

**पूरयितुमर्थिकामान्मैत्रावरुणेन गोत्रगुरुणा ते ।**
**संदिशता संदिष्टः समाधिदृष्टोऽयमेवार्थः ॥ ४३ ॥**

**दशरथः**—वामदेव, एवमेतत् ।

**ध्यानमयदृष्टिपातप्रमुषितकालाध्वविप्रकर्षेषु ।**
**विषयेषु नैष्ठिकानां सर्वपथीना मतिःक्रमते ॥ ४४ ॥**

( विहस्य । )

यथाकामसंप्राप्त्या ईप्सितार्थलाभेन प्रीतानां अर्थिनां मुखदर्शनमितियत् अयमेव जगतीभारेण भूभारेण खिन्नानां श्रान्तानां भवतां विश्रामः श्रमपरिहारहेतुः । अयमितिविधेयप्राधान्यात्पुंस्त्वं । ‘ उद्दिश्यमानप्रतिनिर्दिश्यमानयोरेकत्वमापादयन्ति सर्वनामानि प्रायेण तल्लिंगमुपाददते ’ ॥ इति कैयटोक्तेः ॥ ४२ ॥

वसिष्ठसंदेशार्थोऽप्ययमेवेत्याह **पूरयितुमिति** । अर्थिकामान् याचकमनोरथान् पूरयितुं पूर्णान्कर्तुं संदिशिता ‘ हुतमिष्टं ’ इत्यादिना आज्ञापयता ते गोत्रागुरुणा त्वत्कुलाचार्येण मैत्रावरुणेन वसिष्ठेन अपत्यत्वविवक्षायां अत इञि मैत्रावरुणिरितिरूपं संबंधविवक्षायां इदमर्थाणिमैत्रावरुण इति रूपमितिभेदः । समाधौ ध्याने ‘ समाधिनागुणान्तरे । ध्याननीवाकानियमेकाव्यस्यच गुणान्तरे । ’ इति मेदिनी । अयमेवार्थः संदिष्टः आज्ञप्तः । तस्माद्रामभद्रप्रेषणे गुर्वाज्ञोल्लंघनदोषोऽपिस्यादितिभावः ॥ ४३ ॥

उक्तमंगीकरोति एवमेतदिति तदेव विवृणोति **ध्यानेति** । ध्याननाम ध्येयैकाग्र्यं उक्तंच पातञ्जले ‘ तत्रप्रत्ययैकतानताध्यानं ’ इति । तन्मय्याः तद्रूपायाः दृष्टेः दर्शनस्य पातेन प्रसरेण प्रमुषितः निरस्तः कालाध्वविप्रकर्षः कालदेशव्यवधानं येषां तेषु विषयेषु विषये निष्ठया व्रतेन चरन्ति नैष्ठिकाः ‘ निष्ठोत्कर्षव्यवस्थायां नाशेऽन्ते व्रतयाच्ञयोः । ’ इतिवैजयन्ती तेषां योगिनां मतिः बुद्धिः सर्वपथीना सर्वपथव्यापिनीसती ‘ तत्सर्वादेः ’ इत्यादिना खः । क्रमते अप्रतिबंन्धेन प्रसरति । ‘ वृत्तिसर्गतायनेषु क्रमः ’ इति सूत्रेणात्रवृत्तावात्मनेपदं । वृत्तिरप्रतिबंधः । योगिनो हि ध्यानेन सर्वं साक्षात्कुर्वन्ति । स्पष्टंचैतत् ‘ प्रातिभाद्वा सर्वं ’ इति सूत्रे । अतोवसिष्ठानुशासनानुवर्त्तने न कापि क्षतिरितिभावः ॥ ४४ ॥

क्रियाणां रक्षायै दशरथमुपस्थाय विमुखे
मुनौ विश्वामित्रे भगवति गते संप्रति गृहान् ।
तपोलेशक्लेशादुपशमितविघ्नप्रतिभये ।
प्रवृत्ते वा यज्ञे रघुकुलकथैवास्तमयते ॥ ४५ ॥

( मुनिं प्रति )

त्वं च दीक्षिष्यमाणो मे रामभद्रं प्रतीक्षसे ।
तन्नः पातिव्रतावृत्तमियं चरतु मेदिनि ॥ ४६ ॥

( नेपथ्याभिमुखमवलोक्य । ) कः कोऽत्र भोः । ( प्रविश्य । )

**दौवारिकः**—किमाज्ञापयति देवः ।

**दशरथः**—आहूयतां रामभद्रः ।

**वामदेवः**—लक्ष्मणश्च ।

**दशरथः**—( सस्मितम् । ) ऋषे, पृथक्प्रयत्नापेक्षी नायमर्थः । न खलु प्रकाशमन्तरेण तुहिनभानुरुज्जिहीते ।( दौवारिको निष्क्रान्तः । )

---

तदेवव्यतिरेकमुखेन द्रढयति. क्रियाणामिति । भगवति महात्मनि मुनौ विश्वामित्रे क्रियाणां रक्षायै यागरक्षणार्थं दशरथमुपस्थाय मां प्राप्य विमुखे प्रार्थितालाभात्पराङ्मुखे संप्रति इदानीं गृहानूगते आश्रमंप्राप्ते ततश्च तपोलेशस्य क्लेशात् व्यवसायात् बलेनेतियावत् । 'क्लेशो दुःखेपि कोपेऽपि व्यवसायेऽपि दृश्यते' इति मेदिनी । उपशामितं परिहृतं विघ्नस्य प्रतिभयं भयं येन तथाभूते सति । 'प्रतिभयं भये । घोरेऽपि' इति मेदिनी । ततः यज्ञे प्रवृत्ते वा आरब्धे च सति रघुकुलस्य कथैवख्यांतिः स्थितिरेव वा अस्तमयते नश्यति तस्मादवश्यं रामो देय इतिभावः ॥ ४५ ॥

एवं निश्चित्य विश्वामित्रं संबोध्याह त्वामिति । त्वं च दीक्षिष्यमाणः यागंकरिष्यमाणः सन् रामभद्रं प्रतीक्षसे यज्ञरक्षार्थमपेक्षसे । तत् तस्मात् इयं नः मेदिनी भूमिः पतिव्रतावृत्तं चरतु त्वत्प्रसादान्मद्वंश एव वर्ततामिति भावः । प्रार्थनायां लोट् ॥ ४६ ॥

द्वारं रक्षति दौवारिकः 'द्वारादीनांच' इत्यैच् । लक्ष्मणश्चेति आहूयतामितिभावः । अयमर्थः लक्ष्मणाह्वानरूपः पृथक्प्रयत्नापेक्षी न रामलक्ष्मणयोः साहचर्यस्यानित्यनियतत्वेन रामाह्वानेनैव लक्ष्मणाह्वानमपिसिद्धमेवेतिभावः । तत्र दृष्टान्तमाह नखल्विति प्रकाशमन्तरेण प्रकाशं विना नोज्जिहीते नोद्गच्छाति ।

( ततः प्रविशतो रामलक्ष्मणौ । )

**रामः**—( सहर्षम् । )

**सुराधीशक्रोधाज्जगदपरथा कर्तुमपरे**
**पुराणब्रह्माणो भुवनपितरः सप्त च कृताः ।**
**धृतास्तुष्टेनामी बहिरपि च वैश्वानरपथा-**
**त्कथा पौराणी यच्चरितमितिह स्म प्रथयति ॥ ४७ ॥**

कथं सोऽपि भगवानस्माभिरुपचरिष्यते ( इति परिक्रामन् पुरोऽवलोक्य हर्षातिशयं निरूपयन् ) नूनं विनयनम्रयोस्तातवामदेवयोस्तृतीया प्रशान्तपावनीयमाकृतिः स भगवान् विश्वामित्रो भविष्यति ।'

**लक्ष्मणः**—( साश्चर्यस्मितम् ) आर्य,

**अयमयमीदृशप्रशमविश्वसनीयतनु-**
**र्भुवनभयंकरीः कथमधत्त रुषोऽपि मुनिः ।**

---

**सुराधीशेति** । सुराधीशक्रोधात् इन्द्रविषयककोपेन जगत् ब्रह्मसृष्टं भुवनं अपरथाकर्तुं प्रकारान्तरेण कर्तुं उक्तंच वाल्मीकीये 'अन्यमिन्द्रं करिष्यामि लोकोवास्यादनिन्द्रकः ।' इति विश्वामित्रवचनं । अपरे ब्रह्मसृष्टविलक्षणाः पुराणब्रह्माणः मरीच्यादयः सप्त भुवनपितरश्च जगत्स्रष्टारश्च कृताः निर्मिताः चशब्दान्नक्षत्राणिच 'सृजन्दक्षिणमार्गस्थान् सप्तर्षीनपरान् पुनः । नक्षत्रमालामपरामसृजत्क्रोधमूर्च्छितः ।' इति वाल्मीकीयोक्तेः । तुष्टेनदेवप्रार्थनया कोपान्निवृत्तेन येन अमीसप्तर्ष्यादयः । वैश्वानरपथाद्बहिः ज्योतिश्चक्रमार्गस्यदक्षिणतः धृताश्चस्वतेजसेतिशेषः एवंपौराणीपुराणसंबन्धिनीइतिहपारंपर्योपदेशागता 'पारंपर्योपदेशः स्यादैतिह्यमितिहाव्ययं' इत्यमरः । कथागाथायच्चरितं प्रथयतिस्म प्रख्यापयामास । प्रथप्रख्याने घटादिः चौरादिकस्यत्वमित्वेन ह्रस्वाप्राप्तेः ॥ ४७ ॥

कथमुपचरिष्यत इति निरपेक्षत्वात्तस्येतिभावः अथवा औत्सुक्यार्थं कथं तादृशस्तस्यमयोपासंनसुलभं भविष्यतीति । प्रशान्ता नैरपेक्ष्यात् पावनी पवित्रा तपोमयत्वात् । **अयमिति** । अयमयमिति द्विरुक्तिराश्चर्यद्योतनाय । ईदृशेन प्रशमेन परमशान्त्या विश्वसनीया विश्वासार्हातनुः मूर्तिर्यस्य सविश्वामित्रः भुवनभयंकरीः जगद्भीतिहेतुभूताः मेघर्तिभयेषु कृञः इति खच् ततो मुम्च भयंकरीति गौरादेराकृतिगणत्वात् ङीषित्येके । नदट् देवट् इत्यादिवत्प्रकृतेरवाटित्वमेष्टव्यमित्युज्वलादयः । रुषः कोपान् कथमधत्त हितवान् दधारेति यावत् । एवमा-

स्थितमिदमेव वा मृदुमनोज्ञतुषारतमा-
स्तमसि सति ज्वलन्ति सहसैव महौषधयः ॥ ४८ ॥

**रामः**—वत्स लक्ष्मण, एवं दुरवगाहगंभीरचरिताश्चित्रीयन्ते महान्तः । अपि च ।

व्रतविहतिकरीभिरप्सरोभिः सह जगदस्य निगृह्णतो गृणन्ति ।
नमदमरशिरःकिरीटरोचिर्मुकुलितरोषतमांसि चेष्टितानि ॥ ४९ ॥

**वामदेवः**—( दृष्ट्वासहर्षं ) कथमागतो रामभद्रः । ( मुनिंप्रति भगवन् )

ब्रह्मज्योतिर्विवर्त्तस्य चतुर्धा देहयोगिनः ।
ऋश्यशृंगचरोरंशः प्रथमोऽयं महाभुजः ॥ ५० ॥

**विश्वामित्रः**—( सहर्षसंभ्रममवलोक्य ) वामदेव, किमुच्यते, आरण्यकेषु

---

क्षिप्य स्वयमेव समाधत्ते स्थितमित्यादिना । अथवा इदं शान्तानामपि कारणकोपः स्थितमेव युक्तमेव मृद्वयः मनोज्ञाः तुषारतमाः अत्यन्तशीतलाश्च महौषधयः ज्योतिर्लताः तमसि अंधकारे आविर्भूतेसति सहसैव हठात्कारेणैव ज्वलन्ति दीप्यन्ते अतोनदोष इति भावः । अत्र आक्षेपदृष्टान्तकाव्यलिंगालंकाराः । एतेन परोरजोभिरित्यत्र रुचिपत्यभिप्रायस्यास्वरसत्वं ध्वनितं ( वृ ) नर्कुटकं । तल्लक्षणं तु ' हयदशभिर्नजौ भजजलागुरु नर्कुटकम् ' इति ॥ ४८ ॥

दुरवगाहं दुर्धर्षं गंभीरं च चरितं येषां ते महान्तः पूज्याः चित्रीयन्ते विस्मापयन्ते ' नमोवरिवश्चित्रङःक्यच् ' इति क्यच् ङित्वात्तङ् । तदेवोपपादयति व्रतेति । व्रतविहतिकरीभिः तपसोविघ्नभूताभिः अप्सरोभिः सह तासामप्राधान्यात्तृतीया । जगत् निगृह्णतः नाशयितुमुद्युक्तस्य अस्य मुनेः नमतां प्रह्वीभवतां अमराणां देवानां शिरःकिरीटरोचिषामूर्ध्निधृतमकुटशोभया मुकुलितं संजातमुकुलं तारकादित्वादितच् संकुचितमिति यावत् रोषतमः कोपांधकारः येषु तानि चेष्टितानि चेष्टाः भावेक्तः गृणन्ति स्तुवन्ति ' गॄ शब्दे ' क्र्यादिरयंप्वादित्वाद्ध्रस्वः ( वृ ) औपच्छन्दसिकं पुष्पिताग्रा वा ॥ ४९ ॥

ब्रह्मज्योतिरिति । अयं महाभुजः रामः ब्रह्माख्यं ज्योतिः तस्य विवर्तः परिणामः तस्य । चतुर्धाचतुःप्रकारेण देहयोगिनः शरीरं गृह्णतः ऋश्यशृंगचरोः तत्कृतहव्यान्नस्य ' हव्यपाके चरुः पुमान् ' इत्यमरः । प्रथमोंऽशः प्रथमो भागः ज्येष्ठपुत्र इति यावत् ॥ ५० ॥

अरण्ये भवेषु आरण्यकेषु निर्धारणे सप्तमी ' अरण्यान्मनुष्ये ' इति

किमपि प्रकृष्टतमं ब्राह्मण्यमृश्यशृंगस्य । न केवलममुना वत्सेन ब्रह्मर्षिर्विभण्डकः पुत्रवतां धुरमारोपितः । राजर्षिर्दशरथोऽपि.

**दशरथः**— भगवन् एवमेवैतत् ।

**विश्वामित्रः**— ( वामदेवं प्रति )

**ये मैत्रावरुणिं पुरोहितवतो वंशे मनोर्जज्ञिरे**
**तास्ता वैनयिकीः क्रिया विदधिरे येषां च युष्मादृशः ।**
**तेषामग्र्यलमेषते दशरथः संप्रत्यमी ये पुन-**
**र्जातास्ते ध्रुवमृश्यशृङ्गतपसामैश्वर्यमिक्ष्वाकवः ॥ ५१ ॥**

( रामलक्ष्मणावुपसर्पतः )

**वामदेवः**— वत्सौ, भगवानशेषभुवनमहनीयो, महामुनिः कौशिकः प्रणम्यताम् ।

**रामलक्ष्मणौ**—(उपसृत्य) भगवन् विश्वामित्र, सावित्रौ रामलक्ष्मणावभिवादयेते

---

वुञ् । ऋश्यशृंगस्य ब्राह्मण्यं ब्राह्मणत्वं ब्रह्मवर्चसमितियावत् ब्राह्मणादित्वात्ष्यञ् । किमपि लोकोत्तरं प्रकृष्टतमं अतीव श्लाघ्यं । अमुनावत्सेन ऋश्यशृंगेण विभण्डकः ऋश्यशृंगपिता पुत्रवताम् प्रशंसायां मतुप् धुरं नारोपितः नप्रापितः ‘रुहः पोऽन्यतरस्याम्’ इति ह्रस्वपः । अपितु । राजर्षिर्दशरथोऽपि प्रशस्तपुत्रवत्वं प्रापित इति भावः । तदनुमोदते **एवमित्यादिना** तदेव विवृणोति **यइति** । ये-राजानः मैत्रावरुणिं वसिष्ठं ‘नलोक’ इत्यादिनाषष्ठीनिषेधाद्द्वितीया । **पुरोहितवतः** पुरोधसंकृतवतः मनोर्वंशे जज्ञिरे जाताः जनेर्लिट् । युष्मादृशः भवादृशा येषां राज्ञां वैनयिकीः विनयरूपाः ‘विनयादिभ्यः’ इति स्वार्थेठक् तास्ताः क्रियाः सर्वान् संस्कारांश्च वीप्सायां द्विरुक्तिः विदधिरेविधिपूर्वकमाहितवन्तः । दशरथः संप्रतीत्युभयान्वयि संप्रति इदानीम् तेषां राज्ञां अग्र्यलं अग्रं श्रेष्ठ्यमिति यावत् एषते सामस्त्येन गच्छति ॥ ‘ईषगतिहिंसादानेषु’ इति भौवादिकधातोराङुपसृष्टस्य रूपम् ‘एषते’ इति । शेषाकांक्षापूरणद्वारा तत्र हेतुमप्याह **संप्रतीत्यादिना** संप्रति येपुनरमीरामादयः जाताः त इक्ष्वाकवः ऋश्यशृंगतपसांऐश्वर्यं विभूतिः गुणवचनेत्यादिनाष्यञ् । ‘त्वष्यञौतद्धितौ’ इति क्लीबत्वं औत्सर्गिकमेकत्वं च । ध्रुवं सत्यं । ( वृ ) शार्दूलविक्रीडितम् ॥ ५१ ॥

महनीयः पूज्यः प्रणम्यतां नमस्क्रियतां युवाभ्यामितिशेषः । सवितुः सूर्यस्य गोत्रापत्ये सावित्रौ ‘तस्यापत्यं’ इत्यण् । परिगृह्य आलिंग्य सरो-

**विश्वामित्रः**—वत्सौ, आयुष्मन्तौ भूयास्तं ।

( इति भुजाभ्यां परिगृह्य । सरोमाञ्च निर्वर्ण्य । सबहुमान स्वगतम् । )

**वसिष्ठोक्तैर्मन्त्रैर्दधति जगतामाभ्युदयिकीं**
**धुरं संप्रत्येते दिनकरकुलीनाः क्षितिभुजः ।**
**गृहे येषां रामादिभिरपि कलाभिश्चतसृभिः**
**स्वयं देवो लक्ष्मीस्तनकुतुकचारी विजयते ॥ ५२ ॥**

किं च ।

**त्वं तास्ताः स्मृतवानृचो दशतयीस्त्वत्प्रीतये यज्वभिः**
**स्वाहाकारमुपाहितं हविरपि त्रेताग्निराचामति ।**
**त्वां क्षीरोदजलेशयं क्रतुलिहः पृथ्वीमवातीतर-**
**न्नुद्वृत्ता दशकंधरप्रभृतयो निग्राहितारस्त्वया ॥ ५३ ॥**

माञ्चं रोमोद्गमेनसह निर्वर्ण्यविलोक्य । रामस्यपारमार्थिकस्वरूपस्मरणं रोमाञ्चे हेतुः । तदेव विशदयति **वसिष्ठोक्तै**रिति । दिनकरकुले सूर्यवंशे भवाः दिनकरकुलीनाः 'कुलात्खः' इति खः । उत्तरसूत्रे अपूर्वपदग्रहणाज्ज्ञापकादस्मिन्सूत्रे तदन्तविधिः एते क्षितिभुजः राजानः संप्रति इदानीम् । वसिष्ठोक्तैर्मन्त्रैः तत्प्रतिपादितैः गुप्तवादैर्धर्मप्रवचनैर्जगतां आभ्युदयिकीं अभ्युदयप्रयोजनां मंगलार्थामिति यावत् 'प्रयोजनं' इति ठक् । धुरं वहनक्रियां दधति बिभ्रति । सांप्रतिकत्वमेव स्फुटयति **गृह इत्यादिना** लक्ष्मीस्तने कुतुकेन कुतूहलेन चारी संचरणशीलः देवः नारायणः रामादिभिः रामादिभावं गताभिः चतसृभिः कलाभिः अंशैः 'अंशवृद्धावपिकला' इति त्रिकाण्डशेषः । येषां क्षितिभुजां गृहे स्वयं आत्मना विजयते क्रीडति 'विपराभ्यां जेः' इति तङ् ॥ ५२ ॥

इदानीं रामस्य स्वरूपं अवतरणहेतुं फलं च प्रत्यक्षेणसंबोध्याह **त्वमिति** । हे भगवन्, त्वं दशतयीः मण्डलसंज्ञकदशावयवविशिष्टाः 'संख्याया अवयवे तयप्' 'टिड्ढाणञ्, इत्यादिनाङीप् तास्ताः एकविंशतिशाखाभेदभिन्नाः उक्तं च आश्वलायनसूत्रवृत्तौ ' एकविंशतिशाखोऽयमृग्वेदो मुनिभिःस्मृतः ' इति । ऋगित्युपलक्षणमन्येषामपि वेदानां । स्मृतवान् ब्रह्मरूपेणेति शेषः ' यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ' इति श्रुतेः । स्मृतवानित्यनेन वेदानाममपौरुषेयत्वं ध्वनितं ' युगान्तेऽन्तर्हितान्वेदान् सेति-

**वामदेवः**— (सस्मितम्।) वत्सौ अयमत्रभवान् भवन्तौ नेतुमागतः।

**रामलक्ष्मणौ**— यदभिरुचितं भवते तातपादाय च।

(दशरथस्तौ सस्नेहमादाय "भगवन्कौशिक" इत्यर्धोक्ते मन्यूत्पीडानिगृह्यमाणकण्ठो वामदेवस्यमुखमीक्षते।)

**वामदेवः**— इमौ तौ रामलक्ष्मणौ। (इत्यर्पयति)

(विश्वामित्रः सादरं प्रतिगृह्णाति।)

(नेपथ्ये शङ्खध्वनिः)

(वामदेवो निमित्तमनुमोदमानो दशरथमुल्लासयति।)

(पुनर्नेपथ्ये)

**वैतालिकः**— सुखाय माध्यंदिनी संध्या भवतु देवस्य। तथाहि।

**किरति मिहिरे विष्वद्रीचः करानतिवामनी**
**स्थलकमठवद्देहच्छाया जनस्य विचेष्टते।**

---

हासान्महर्षयः। 'लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवा' इति स्मृतेश्च। त्वत्प्रीतये त्वां तर्पयितुं 'तुमर्थाच्च' इत्यदिना चतुर्थी त्रेताग्निः गार्हपत्याद्याग्नित्रयं त्रेताशब्दस्य युगभेदे च अग्निशब्दस्य लौकिकाग्नौ च वृत्तेः अनतिव्याप्त्यर्थं त्रेताअग्निपदयोर्ग्रहणं। स्वाहाकारं उच्चार्येति शेषः। यज्वभिः याज्ञिकैः उपाहितं प्रक्षिप्तं हविः पुरोडाशादि आचामति भक्षयति 'आङिचमः' इति दीर्घः। क्रतुलिहो देवाः क्षीरोदजलेशयं क्षीरसमुद्रे स्वपन्तं 'उत्तरपदस्य चोपसंख्यानं' इति क्षीरोद इत्यत्र उदकशब्दस्य उदादेशः जलेशयमित्यत्र 'शयवासवासिष्वकालात्' इत्यलुक्। पृथ्वीं भुवं अवातीतरन् अवतारयामासुः तरतेः णौ लुङ्। अथावतारप्रयोजनमाह दशकंधप्रभृतयः रावणादयः उद्धृत्ताः दुष्टाः त्वया निग्राहितारः निगृहीता भविष्यन्ति रावणादिवधस्यानद्यतनत्वात् कर्मणिलुट् 'स्यासिच्सीयुट्' इत्यादिना चिण्वद्भावाद्धातोरुपधावृद्धिः ॥ ९२ ॥

नेतुमिति सिद्धाश्रममिति शेषः। अभिरुचितं इष्टं। रुच्यर्थत्वाच्चतुर्थी मन्योः शोकस्य उत्पीडेन निर्बन्धेन आधिक्येन वा। उल्लासयति संतोषयति विविधेन तालेन शब्देन चरतीति वैतालिकः बोधकरः। मध्यंदिने भवा माध्यंदिनीउत्साद्यञ्ङीप् संधौभवासंध्या संधिवेलादिपाठाद्यत् अनुष्ठानकालः। सुखायतादर्थ्ये चतुर्थी एतेन 'अभिजित्सर्वदोषघ्नः' इति निमित्तान्तरं सूचितं। किरतीति। मिहिरे सूर्ये विष्वद्रीचः सर्वतो व्यापिनः 'विष्वग्देवयोश्च' इत्या-

वनगजमुखोत्कीर्णैराप्यैरपि त्रसरेणुभिः
शिशिरमसृणामेणाः कच्छस्थलीमधिशेरते ॥ ५४ ॥

अपिचेदानीं

( पटीरतरुकोटरमध्यमध्यासीनाः )

प्रत्यक्षरस्रुतसुधारसनिर्विषाभि-
राशीभिरभ्यधिकभूषितभोगभाजः ।

दिना टरद्र्चादेशः । करान् किरणान् ' बलिहस्तांशवःकराः ' इत्यमरः । किरति विक्षिपतिसति । जनस्य देहच्छाया अतिवामनी अत्यन्तह्रस्वासती गौरादेराकृतिगणत्वान्ङीष् । स्थलकमठवत् स्थलगतकच्छपेनतुल्यं ' तेनतुल्यं क्रियाचेद्वतिः ' । विचेष्टते संकुचति कमठस्य स्थले गमनाशक्तेः संकोचः । देहच्छाया पादमूलंगतेति भावः । किंच एणाः कुरंगाः 'एणःकुरंगमोरिष्यः सादृश्यश्चारुलोचनः । ' इति त्रिकाण्डशेषः । वनगजानां मुखोत्कीर्णैः हस्तोत्क्षिप्तैः आप्यैः जलमयैः ' आप्यमम्मयं ' इत्यमरः अपां समूहः आपं आपमेव आप्यं स्वार्थेष्यञ् । अन्यथा 'एकाचोनित्यं' इतिमयटोदुर्वारत्वात् । त्रसाः चराश्चतेरेणवश्चत्रसरेणवः ' त्रसामिंगंचराचरं ' इत्यमरः द्व्यणुकसमुदाया इत्यर्थः । तैरपि शिशिरां शीतलां मसृणां स्निग्धांच कच्छस्थलींजलप्रायप्रदेशं ' जलप्रायमनूपंस्यात्पुंसिकच्छस्तथाविधः ' इत्यमरः अधिशेरते अधिष्ठायस्वपन्ति अधिशीङ्स्थ्यादिनाकर्मत्वं । ॥ ५४ ॥

पटीरतरूणां चन्दनवृक्षाणां कोटरस्य निष्कुहस्य 'निष्कुहः कोटरं वा ना' इत्यमरः । मध्यं अध्यासीनाः अधिष्ठिताः उत्तरश्लोकेनास्य संबन्धः । प्रत्यक्षरेति । उरसा गच्छन्तीत्युरगाः सर्पाः 'उरसो लोपश्च' इति सलोपोगमेडश्च । तेषां कन्याः कुमार्यः कन्यायाः कनीनचेति निर्देशाद्वयसि प्रथम इति नङीप् प्रत्यक्षरं अक्षरे अक्षरे वीप्सायामव्ययीभावः स्रुतेन प्रसृतेन सुधारसेन अमृतबिन्दुना निर्विषाभिः विषरहिताभिः आशीर्भिः दंष्ट्राभिः 'स्त्रीत्वाशीर्हिताशंसाहिदंष्ट्रयोः ।' इत्यमरः अभ्यधिकं अत्यन्तं भूषितं भोगं भजन्तीति अभ्यधिकभूषितभोगभाजः 'भोगः सुखेस्त्र्यादिभृतावहेश्च फणकाययोः ' इत्यमरः । कञ्चुकात् निर्मोकात् विनिर्गतयोः रोमहर्षस्वेदयोः ऊर्मिः आधिक्यं यासां तथाभूताःसत्यः । एतेन स्तंभः प्रलयरोमाञ्चावित्याद्युक्तः सात्विकभावः सूचितः ।

गायन्ति कञ्चुकविनिर्गतरोमहर्ष-
स्वेदोर्मयस्तव गुणानुरगेन्द्रकन्याः ॥ ५५ ॥

**विश्वामित्रः**—प्रियमपि तथ्यमाह वैतालिकः ।

मन्दोद्धूतैः शिरोभिर्मणिभरगुरुभिः प्रौढरोमाञ्चदण्ड-
स्फायन्निर्मोकसंधिप्रसरदविगलत्सम्मदस्वेदपूराः ।
जिह्वायुग्माभिपूर्णाननविषमसमुद्गीर्णवर्णाभिरामं
वेलाशैलांकभाजो भुजगयुवतयस्त्वद्गुणानुद्गृणन्ति ॥ ५६ ॥

( दशरथः सवैलक्ष्यस्मितमधोमुखस्तिष्ठति )

**विश्वामित्रः**—प्रत्यासीदति दीक्षाप्रवेशकालः । तदेवंविधमधुरगोष्ठीभंगनिष्ठुराणां प्रथमे वयं तावद्भवितुमिच्छामः ।

( दशरथो रामलक्ष्मणाववलोक्य बाष्पभरतरंगितलोचनो मुनिं प्रति )
' भगवन् ' इत्यर्धोक्ते वाक्स्तंभं नाटयति

तव गुणान् शौर्यौदार्यादीन् गायन्ति स्तुवन्ति (वृ) वसन्ततिलकम् ॥ ५५ ॥

तथ्यं सत्यं तदेव प्रकटयति मन्दोद्धूतैरिति । मणिभरेण रत्नभारेण गुरुभिः अलघुभिः ' गुरुस्त्रिलिंग्यां महति दुर्भरालघुनोरपि ' इति मेदिनी अत एव मन्दोद्धूतैः मन्दमुत्कंपितैः शिरोभिः लक्षिता इति शेषः इत्थंभावेतृतिया । प्रौढैः प्रकर्षेण धृतैः रोमाञ्चदण्डैः रोमोद्गमव्यूहैः ' दण्डोयममानभेदे लगुडे धर्मसैन्ययोः । व्यूहभद्रप्रकाण्डेषु ' इति विश्वः । स्फायत्सु वर्धमानेषु अनुदात्तेत्वनिमित्तात्मनेपदित्वस्यानित्यत्वज्ञापनान्नशानच् । निर्मोकसंधिषु कञ्चुकसंधिषु प्रसरन्तः व्याप्नुवन्तः अत एव अविगलन्तश्च सम्मदस्वेदपूराः हर्षजलप्रवाहाः यासां तथोक्ताःसत्यः वेलाशैलस्य समुद्रतीरगतमलयपर्वतस्य अकंभाजः उत्संगगताःसत्यः जिह्वायुग्मेन रसनाद्वयेन अभिपूर्णात्सर्वतःपूरितात् आननात् मुखात् विषमं यथा तथा समुद्गीर्णैर्निर्गतैः वर्णैः अक्षरैः अभिरामं यथा तथा त्वद्गुणानुद्गृणन्ति स्तुवन्ति ॥ ५६ ॥

वैलक्ष्यं आत्मस्तुतिश्रवणजनितलज्जा । दक्षिाप्रवेशकालः यागार्थमितिशेषः । प्रत्यासीदति सन्निहितो भवति । तत् तस्मात् एवंविधायाः मधुरगोष्ठ्याः अद्भुतपरिषदः भंगनिष्ठुराणां वितथीकरणरूपपरुषकर्मणां वयं तावत् वयमेव प्रथमे प्रथमहेतवः 'प्रथमचरम' इत्यादिना सर्वनामता । भवितुमिच्छामः आश्रमगमनाय अनुमतिं देहीतिभावः । बाष्पभरेण अश्रुपूरेण

**वामदेवः**—भगवन् कुशिकनन्दन साधय । शिवास्ते पन्थानो वत्सयोश्च रामलक्ष्मणयोः । ( इत्युत्थाय सर्वे यथोचितमाचरन्ति )

**विश्वामित्रः**—एवमास्यतां भवद्भिः ( इति राजपुत्राभ्यामनुगम्यमानो निष्क्रान्तः )

**दशरथः**—( दीर्घमुष्णं च निश्वस्य ) वामदेव,

नूनमिदानीमस्मानिव भगवन्तमपि कौशिकमकारणवत्सलं वत्सो रामभद्रः
कच्चिदस्माद्वियोगार्तिदुःखी दुःखाकरिष्यति ।
अपूर्वविषयालोकसुखी वा सुखयिष्यति ॥ ५७ ॥

**वामदेवः**—राजर्षे, वयं कौशिको वेति क्व पुनरेष कक्ष्याविभागो रामभद्रमाधुर्यस्य पश्य ।

यदिन्दोरन्वेति व्यसनमुदयं वा निधिरपा-
मुपाधिस्तत्रायं जयति जनिकर्तुः प्रकृतिता ।

---

तरंगितेसंजाततरंगतारकादित्वादितच्कलुषेइतियावत् लोचने यस्य तथाभूतःसन् । वाक्स्तम्भं वाग्जाड्यं 'स्तंभौस्थूणाजडीभावौ' इत्यमरः । साधय गच्छ । 'प्रायेणण्यन्तकःसाधिर्गमेऽर्थेप्रयुज्यते ।' इतिवचनात् । शिवाःमंगलभूयिष्ठाः । यथोचितमाचरान्ति किंचिदनुगच्छन्ति । नूनमिदानीमित्याद्युत्तरश्लोकेनान्वेति कच्चिदिति । वत्सो रामभद्रः अस्माद्वियोगात्त्वामाद्विरहपीडयादुःखीदुःखवान् सन् सुखादित्वादिनिः । अस्मानिव अस्मान् यथादुःखयति तद्वत् इदानीं अकारणवत्सलं अकारणस्निग्धं भगवन्तंकौशिकमपि नूनं कच्चिद्दुःखाकरिष्यति दुःखयिष्यति 'दुःखात्प्रातिलोम्ये' इति डाच् । आहोस्वित् अपूर्वविषयाणां नूतनदेशानां आलोकेन दर्शनेन सुखीप्रीतःसन् सुखयिष्यति वा सुखिनं करिष्यति वा सुखिन्शब्दात्तत्करोतीति णिच् इष्टवद्भावेन "विन्मतोरिति" मत्वर्थीयस्येनेर्लुक् ॥ ५७ ॥

रामभद्रमाधुर्यस्य रामप्रियस्य 'स्वादुप्रियौतुमधुरौ ।' इत्यमरः । वयं अस्मदीया दशरथादयः कौशिकः अन्योमुनिः इतिवा एषः कक्ष्याविभागः तारतम्यग्रहणं कक्ष्याशब्दः प्रकोष्ठादिस्थानवाचीसन् इहलक्षणया तारतम्यवृत्तिकः । 'अयं निजः परोवेतिगणनालघुचेतसां । उदारचरितानांतु वसुधैवकुटुंबकं ।' इति न्यायेन रामः निजपरतारतम्यं विनैवसर्वत्रच अस्मद्वत्प्रीतःस्यादितिभावः । एवं च साधूनां साधुषुप्रीतिः साधुत्वेनैव भवति । नास्या हेत्वन्तरापेक्षा । प्रीतिर्नामसुखदुःखानुवर्तनं तत्स्वत एव भवतीत्येतत्साधयितुमाह यदिति । तत्र

**अयं कः संबंधो यदनुहरते तस्य कुमुदं**
**विशुद्धाः शुद्धानां ध्रुवमनभिसंधिप्रणयिनः ॥ ५८ ॥**

**दशरथः**— ( विमृश्य ) एवमेतत् ।

**रत्नाकरो जनयिता सहजश्च वर्गः**
**किं कथ्यताममृतकौस्तुभपारिजाताः ।**

प्रथमपादेनहेत्वाभासमुद्भाव्य द्वितीयेन दूषयति अपां निधिः समुद्रः इन्दोः चन्द्रस्यव्यसनं उदयंवा सुखदुःखे अन्वेति अनुवर्त्तत इति यत् तत्र तास्मिन् पक्षे जनिकर्तुः जायमानस्य पुत्रस्येतियावत् पितुरितिरुचिपत्युक्तंतु भ्रान्तिमूलमेव । प्रकृतिता उपादानकारणत्वं पितृत्वमितियावत् स्पष्टश्चायमर्थः प्रकृतिशब्दस्य प्रकृत्यधिकरणे चतुर्लक्षण्यां । अयमुपाधिर्जयति हेतुत्वेन वर्त्तते । एवंच चन्द्रसमुद्रयोर्जन्यजनकभावरूपापोधिमत्वान्नायंदृष्टान्तः । अथानिरुपाधिकमुदाहरणान्तरमाह **अयं कःसबन्ध इति** । कुमुदं कैरवं तस्य इन्दोः व्यसनमुदयंवा इत्यध्याहार्यं । अनुहरतं अनुसरतीतियत् 'हरतेर्गतताच्छील्ये' इतितङ् । अयंकःसबन्धः कोऽत्र उपाधिरितिभावः । निगमयतितुरीयपादेन तस्माद्विशुद्धाःसाधवः शुद्धानां साधूनां विषये अनभिसंधिप्रणयिनःहेतुं विनैव प्रीतिमन्तः । 'जनिकर्तुः प्रकृतिः' 'तत्प्रयोजकोहेतुश्च' इति सूत्राभ्यां 'तृजकाभ्यांकर्त्तरि' इत्यस्य अनित्यत्वज्ञापनाज्जनिकर्त्तुरित्यत्र कर्माणि षष्ठी शेषषष्ठीत्यपरे । अर्थान्तरन्यासः । आक्षेपः । काव्यलिंगश्च ॥ ९८ ॥

ननु इन्दुकुमुदयोरपि जलजत्वेन सहजत्वरूपोपाधिमत्वात्कथंनात्रदोषइत्याशंक्य तत्रकैरवाणां पंकजत्वेन भिन्नप्रकृतिकत्वाज्जलजत्वस्य च भाक्तत्वान्नोक्तदोष इति परिहारं मनसिकृत्य, जलजत्वेऽपि, नहि सहजानां सहजसुखदुःखानुवर्तनमैकान्तिकं व्यभिचारदर्शनात् । तस्मात्सहजत्वेऽपिनोक्तदोष इति प्रौढिवादेन परिहारं दशरथानुमोदनव्याजेन करोति **रत्नाकर इति** । अस्य इन्दोः जनयिता पिता रत्नाकरः समुद्रः अनेन प्रख्यातपितृकत्वं सूचितं । अस्य सहजो वर्गश्च किं कथ्यतांनवक्तव्यमेवातिप्रसिद्धत्वादितिभावः । अमृतं कौस्तुभः पारिजातः एतदुपलक्षणं लक्ष्म्याश्च । तैः अमृतादिभिः रत्नाकरेण च किं बंधुत्वस्याप्रकाशनात्तैः किंप्रयोजनं । एवं स्थितेऽपि यद् यस्माद्धेतोः अयं इन्दुः कुमुदबंधुरितिव्यपदिश्यते नत्वमृतबंधुः कौस्तुभबंधुरित्यादि । तस्मात् इह लोके तत्पुनः परस्परप्रीतिहेतुत्वंतु अचिन्त्यं तर्केण निश्चेतुमशक्यं ' अतीन्द्रियास्तुये भावा न

किं तैरचिन्त्यमिह तत्पुनरन्यदेव
तत्वान्तरं कुमुदबन्धुरयं यदिन्दुः ॥ ५९ ॥

( पुरोऽवलोक्य ) कथं लोचनपथमतिक्रान्तः सरामलक्ष्मणो भगवान् । तद्वयमपि वत्सप्रवासदुर्मनसं दक्षिणकोसलेश्वरदुहितरमुपेत्य देवीं सान्त्वयामः ॥

( इति निष्क्रान्ताः सर्वे । )

इति मुनीन्द्रसंवादो नाम प्रथमोऽङ्कः ।

---

तांस्तर्केण योजयेत् । ' इति स्मृतेः । कुतोऽचिन्त्यं तत्राह अन्यदेव तत्वान्तरं उत्प्रेक्षकबुद्ध्यगम्यत्वाद्विलक्षणं वस्त्वन्तरमेवतत् । यदेवं निर्हेतुकं बंधुत्वं घटयति नतदस्मत्तर्कगम्यमिति भावः । यद्वा । अयमिन्दुः कुमुदबंधुरिति यत् तत्तु आन्तरं अतिसूक्ष्मं अतोदुरूहमिति भावः । यद्वा किं तैः अमृतादिभिः येषां तद्बंधुत्वव्यपदेशोऽपिनास्ति तस्मात् इह चन्द्रबंधुत्वकथने अचिन्त्यं अप्रयोजकं व्यभिचारदर्शनात् । तर्हि इन्दुकैरवयोः बन्धुत्वे कोहेतुः तत्राहतदिति व्याख्यातं ॥ ५९ ॥

वत्सप्रवासेन रामलक्ष्मणविश्लेषेण दुर्मनसं दुःखितां दक्षिणकोसलेश्वरदुहितरं कौसल्यां सान्त्वयामः समाधातुं गच्छामः ।

इति श्रीलक्ष्मणसूरिविरचितायामाकराख्यायामनर्घराघवनाटकव्याख्यायां प्रथमोऽङ्कः ।



२५०४५

# द्वितीयोऽङ्कः.

(ततः प्रविशति कुशानादाय यजमानशिष्यः)

**शिष्यः**—आदिष्टोऽस्मि भगवता कौशिकेन वेलोपलक्षणाय (पुरोऽवलोक्य) अये, प्रभातप्रायैव रजनी । तथाहि ।

तमोभिः पीयन्ते गतवयसि पीयूषवपुषि
ज्वलिष्यन्मार्तण्डोपलपटलधूमैरिव दिशः ।
सरोजानां कर्षन्नलिमयमयस्कान्तमणिव-
त्क्षणादन्तःशल्यं तपति पतिरद्यापि न रुचाम् ॥ १ ॥

---

विरजीकृतर्षिदारः कौमाराधूतताटकाप्राणः ।
रामः सलक्ष्मणोऽव्यात्कौशिकमखरक्षणोद्युक्तः ॥

इदानीं द्वितीयमङ्कमारभमाणः सूच्यार्थसूचनायादौ विष्कंभमारचयति **ततः प्रविशतीत्यादिना**। विष्कंभलक्षणंतु "वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः। संक्षेपार्थस्तु विष्कंभो मध्यपात्रप्रयोजितः। एकानेककृतः शुद्धः संकीर्णो नीचमध्यमैः" इति । अतीतानां भाविनां च कथावयवानां ज्ञापको विष्कंभः । मध्यमेन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितश्चेच्छुद्धः अन्यथा संकीर्णइति भेदः। अत्र रामलक्ष्मणाभ्यांसह-विश्वामित्रस्य सिद्धाश्रमागमनं रामेण अहल्याशापमोचनंचातीतकथा । ताटकावधा-दिविश्वामित्रयागान्ता भाविकथा च सूच्यते । प्रसंगात् पंचमांकभाविवालिसुग्रीवा-दिकथा च किंचित् । ततः रंगप्रसाधनानन्तरं । कुशान् दर्भान् आदाय आहृत्य। यजमानस्य यागार्थंदीक्षितस्यविश्वामित्रस्य। यजधातोः 'पूङ्यजोःशानन्' इतिशानन् शिष्यःअन्तेवासी शासधातोः "एतिस्तु" इत्यादिना क्यपि इत्वषत्वे । भगवता कौशिकेन वेलोपलक्षणाय प्रभातसमयं ज्ञातुं आदिष्टोऽस्मि आज्ञप्तोऽस्मि । पुरोवलोक्य । पूर्वस्यां दिशि वेलांदृष्ट्वा । प्रभातप्रायैव उषःकालबहुलैव । रजनी रात्रिः तदेव वर्णयति. षड्भिः । तमोभिरिति पीयूषवपुषि चन्द्रे गतवयसि गलितयौवने सति अस्तगिरिं प्राप्तेसतीति यावत् । ज्वलिष्यतां दीपिष्यमाणानां मार्तण्डोपलपटलानां सूर्यकान्तशिलासमूहानां "समूहे पटलं नना" इत्यमरः ।

अपि च ।

जाताः पक्वपलाण्डुपाण्डुमधुरच्छायाकिरस्तारकाः
प्राचमिङ्कुरयन्ति काश्चन रुचो राजीवजीवातवः ।
लूतातन्तुवितानवर्तुलमितो बिम्बं दधच्चन्द्रमाः
प्रातःप्रोषितरोचिरम्बरतलादस्ताचलं चुंबति ॥ २ ॥

---

धूमैरिवास्थितैः तमोभिः अन्धकारैः कर्तृभिः । दिशःककुभः पीयन्ते आव्रियन्ते कर्मणियक् । रुचांपतिः सूर्यः, सरोजानां पद्मानां सरसिजायन्त इति विग्रहे "सप्तम्यां जनेर्डः" इति डः । अलिमयं भ्रमररूपं स्वरूपार्थे मयट् । अन्तःशल्यं अन्तर्वर्तिनमायसं शंकुं "वापुंसि शल्यं शङ्कुर्ना" इत्यमरः । अयस्कान्तमणिवत् अयस्कान्ताख्यमणिना तुल्यं । "तेन तुल्यं" इत्यादिना वतिः । अयस्कान्तेत्यत्र कस्कादित्वाद्विसर्गस्यसः कान्तः "लोहेच्च चन्द्रसूर्यायःपर्यायान्तशिलासुच्च ।" इति मेदिनी क्षणात् कर्षन् बहिरुद्गमयन् सन् । इह लक्षणार्थेशता । अद्यापि न तपति न प्रकाशते । तल्लक्षणस्याल्युद्गमनस्यादर्शनादिति भावः । (वृ) **शिखरिणी** ॥ १ ॥

**जाता इति** तारकाः नक्षत्राणि "तारकाज्योतिषि" इति व्यवस्थितविभाषाश्रयणादित्वन्न । पक्वपलाण्डुवत् पक्वसुकन्दकवत् "पचोव" इति पचेर्निष्ठातोवः "पलाण्डुस्तु सुकन्दकः" इत्यमरः । पाण्डोः शुभ्रायाः मधुरायाश्च छायायाः कान्तेः "छायासूर्यप्रियाकान्तिः" इत्यमरः । किरः विक्षेपिकाः किरतेः क्विप् । जाताः आसन् । राजीवानां पद्मानां जीवातवः जीवनौषधानि "जीवातुर्जीवनौषधम्" इत्यमरः । काश्चनरुचः कतिपयकिरणाः प्राचीं दिशं अङ्कुरयन्ति उद्भेदयन्ति प्रकाशयन्तीति यावत् । इष्ठवद्भावान्मतुपोलुक् । इतः प्रतीच्यां दिशि । चन्द्रमाः चन्द्रः प्रातः उषसि प्रोषितं वियोजितं रोचिः शोभा यस्य तथाभूतस्सन् अप्रकाशइति यावत् । अतएव लूतायाः ऊर्णनाभाख्यक्रिमिविशेषस्य "लूता स्त्री तन्तुवायोर्णनाभमर्कटकाःसमाः" इत्यमरः । तन्तुवितानवत् तन्तुकृतोल्लोचवत् "वितानो यज्ञउल्लोचे विस्तारे पुन्नपुंसकं ।" इति मेदिनी । वर्त्तुलं वृत्तं बिम्बं मण्डलं दधत् धारयमाणस्सन् "नाभ्यस्ताच्छतुः" इति नुंनिषेधः । अंबरतलात् आकाशप्रदेशात् "ध्रुवमपाय" इतिवा अंबरतलंविहायेति ल्यब्लोपे वापञ्चमी अस्ताचलं अस्तगिरिं चुंबति अवतरति (वृ) **शार्दूलविक्रीडितम्** ॥ २ ॥

(सर्वतोऽवलोक्य च ।)

दिङ्मण्डलीमकुटमण्डनपद्मराग-
रत्नाङ्कुरे किरणमालिनि गर्भितेऽपि ।
सौखप्रसुप्तिकमधुव्रतचक्रवाल-
वाचालपङ्कजवनीसरसाः सरस्यः ॥ ३ ॥

अपि च ।

प्राचीविभ्रमकर्णिकाकमालिनीसंवर्तिकाः संप्रति
द्वे तिस्रो रमणीयमम्बरमणेर्द्यामुच्चरन्ते रुचः ।
स्तोकोच्छ्वासमपीदमुत्सुकतया संभूय कोशाद्बहि-
र्निष्कामद्भ्रमरौघसंभ्रमवशादम्भोजमुज्जृम्भते ॥ ४ ॥

---

दिगिति— दिङ्मण्डल्याः दिक्चक्रस्य मकुटमण्डनपद्मरागरत्नाङ्कुरे किरीटालंकारभूतशोणरत्नोद्भेदे (रूपकं) किरणमालिनि सूर्ये मालाशब्दस्य व्रीह्यादित्वादिनिः । गर्भितेऽपि कुक्षिस्थशिशुवदाचरितेसत्यपि "कुक्षिभ्रूणार्भकागर्भाः" इत्यमरः । गर्भशब्दादाचारक्विपिनिष्ठा । नचात्र तारकादित्वादितजितिवाच्यं । तस्याप्राणिविषयत्वात् । एतेनारुणोदयकालः सूचितः । सरस्यः पद्माकराः सौखप्रसुप्तिकानां सुखप्रसुप्तंपृच्छतां सुस्नातादित्वाठक् । मधुव्रतानां भ्रमराणां चक्रवालेन मण्डलेनवाचालया बहुभाषिण्या मुखरयेतियावत् । "आलजाटचौ बहुभाषिणे" इत्यालच् यद्यप्यत्र "कुत्सितग्रहणं कर्तव्यम्" इतिवार्तिकंभवति, तथापि कवयोऽकुत्सनार्थेऽपि बहुलं प्रयुञ्जतएव । पंकजवन्या पद्मसमूहेन सरसाः सशब्दाः सत्यो भान्तीति शेषः "रसशब्दे" इति धातोः "पुंसि संज्ञायां" इति घः (वृ.) वसन्ततिलकम् ॥ ३ ॥

प्राचीति । द्वे तिस्रः द्वित्राः अम्बरमणेः रुचः सूर्यकिरणाः प्राच्याः पूर्वदिग्विलासिन्याः विभ्रमार्थं विलासार्थं "स्त्रीणां विलासबिब्बोकविभ्रमाललितंतथा"इत्यमरः । कर्णिकाकमालिन्याः कर्णभूषणपद्मिन्याः "कर्णललाटात्कनलंकारे" इति कन्, इत्वं च । संवर्तिकाः नवदलभूताः (रूपकम्) "संवर्तिकानवदलम्" इत्यमरः द्यामुच्चरन्ते दिविसंचरन्ति "उदश्चरस्सकर्मकात्" इति तङ् । इदमंभोजं जात्येकवचनं स्तोकोच्छ्वासमपि अत्यल्पविकासमपि "चातकात्यल्पयोः स्तोकम्" इतिध्वनिः । उत्सुकतया इष्टार्थोद्युक्ततय

अपि च ।

एकद्वित्रिचतुःक्रमेण गणनामेषामिवास्तं यतां
कुर्वाणा समकोचयद्दशशतान्यम्भोजसंवर्तिकाः ।
भूयोऽपि क्रमशः प्रसारयति ताः संप्रत्यमूनुद्यतः
संख्यातुं सकुतूहलेव नलिनी भानोः सहस्रं करान् ॥ ५ ॥

अपि च ।

प्रत्यासन्नसुरेन्द्रसिन्धुरशिरः सिन्दूरसान्द्रारुणा
यत्तेजस्त्रसरेणवो वियदितः प्राचीनमातन्वते ।

---

"इष्टार्थोद्युक्तउत्सुकः" इत्यमरः संभूय संहत्य कोशात् कुड्मलात् बहिर्निष्क्रामतः उद्गच्छतः भ्रमरौघस्य षट्पदवृन्दस्य "ओघोवृन्देम्भसांरये" इत्यमरः । संभ्रमवशात्त्वरायत्तत्वात् । उद्जृम्भते अतीव विकसति । (वृ) श्लोकत्रयम् शार्दूलविक्रीडितम् ॥ ४ ॥

एकेति । नलिनी पद्मिनी पुष्करादित्वादिनिः । अस्तं अदर्शनं यताम् गच्छताम् एषां सूर्यकिरणानां गणनां संख्यानं "ण्यासश्रन्थः" इति युच् । अदन्तत्वाट्टाप् एकः द्वौ त्रयः चत्वारः इति क्रमेण पर्यायेण "पर्यायोऽवसरेक्रमे" इत्यमरः । कुर्वाणेव । दशशतानि सहस्रं अम्भोजसंवर्तिकाः पद्मनवदलानि समकोचयत् कुड्मलीकृतवती अतीतानिशादाविति शेषः । संप्रति इदानीं उद्यतः उदयतः भानोः सूर्यस्य सहस्रं करविशेषणमिदं । "विंशत्याद्याः सदैकत्वे सर्वाः संख्येयसंख्ययोः" इत्येकत्वं । संख्यातुं गणयितुं सकुतूहलेव कुतुकिनीव ताः संवर्तिकाः भूयोऽपि क्रमशः क्रमेण प्रसारयति विकासयति । अयं भावः । सूर्यकिरणानां पद्मदलानांच सहस्रत्वसाम्यात् तदुदयास्तमयानुरोधेन दलविकाससंकोचदर्शनाच्च सूर्यस्य पद्मिनीवल्लभत्वप्रसिध्याच पद्मिनी स्वभर्तुस्सूर्यस्यापत्समये तत्स्वभूतान् करान् स्वदलसंकोचव्याजेन संख्याय पुनरभ्युदयकालेविकासनव्याजेन निश्चेतुं गणयतीवेत्युत्प्रेक्षा ॥ ५ ॥

प्रत्यासन्नेति । यत् यस्माद्धेतोः प्रत्यासन्नस्य सन्निहितस्य सुरेन्द्रसिन्धुरस्य ऐरावतस्य शिरःसिन्दूरवत् मस्तकालंकृतरक्तचूर्णवत् "सिन्दूरो रक्तचूर्णे स्यात्सिन्दूरस्तरुभिद्यपि" इति विश्वः । सान्द्रः निरन्तरः "घनं निरन्तरं सान्द्रं" इत्यमरः । अरुणः पाटलिमा येषां तथोक्ताः । तेजसां त्रसरेणवः त्र्यणुकस-

शंके संप्रति यावदभ्युदयते त्वष्टृटङ्कोन्मृजा
रज्यद्बिम्बरजश्छटावलयितो देवस्त्विषामीश्वरः ॥ ६ ॥

(पुरोऽवलोक्य) कथमिदमुदयाचलमौलिमाणिक्यमर्कमण्डलमद्यापि न विहायस्थलमलंकरोति । तदस्मद्गुरोर्वितायमानयज्ञस्य कुलपतेः कौशिकस्यादेशात्समिदाहरणाय प्रस्थितोऽस्मि । तत्त्वरितं गच्छामि । (इति परिक्रामति)

(प्रविश्य संभ्रान्तो वटुः)

**वटुः**—अज्ज सुणस्सेह, किं वि अच्चरिअं भीसणं च वट्टइ ।
"आर्य शुनश्शेप, किमप्याश्चर्यं भीषणं च वर्तते"

---

मूहाः इतः अत्र । सार्वविभक्तिकस्तसिः । प्राचीनमिति प्राच्यां दिशीत्यर्थे प्रपूर्वादञ्चतेः "दिक्छब्देभ्य" इत्यादिना सप्तम्यर्थेऽस्तातिः । "अञ्चतेर्लुक्" इत्यस्तातेर्लुक् । "लुक्तद्धितलुकि" इति ङीपो लुक् । "तद्धितश्चासर्वविभक्तिः" इत्यव्ययत्वम् । ततः "विभाषाञ्चेरदिक्स्त्रियाम्" इतिस्वार्थिकः खः ततश्च शब्दान्तरत्वान्नपुंसकत्वम् तत इदं रूपं प्राचीनमिति एवं च प्राच्यां दिशीत्यर्थः । वियत् आकाशं आतन्वते प्रकाशयन्ति । तत् तस्माद्धेतोः, शंके एवंतर्कयामि त्विषामीश्वरोदेवः सूर्यः त्वष्टुः विश्वकर्मणः टङ्कस्य उन्मृजया तक्षणेन मृजेर्भिदादित्वादङ् । रज्यतः रागं प्राप्नुवतः "कुषिरजोः" इत्यादिना कर्मकर्तर्यर्थे श्यन्परस्मैपदे बिंबस्य मण्डलस्य रजश्छटया धूलिसमूहेन वलयितः वेष्टितः सन् "वेष्टितं स्याद्वलयितम्" इत्यमरः । यावत् अभ्युदयते । उदेष्यति ध्रुवम् । "यावत्पुरानिपातयोर्लट्" इति भविष्यति लट् । यावच्छब्दोनिश्चयार्थे "यावत्कात्स्न्र्येऽवधारणे । प्रशंसायां परिच्छेदे मानाधीकार-सम्भ्रमे" इति मेदिनी परिच्छेदो निश्चयः । पुराकिल, त्वष्टुः पुत्रीच्छाया स्वभर्तुः सूर्यस्य अत्युष्णमसहमाना पित्रेन्यवेदयत्, ततश्च त्वष्टा मेरुशिखरे सूर्यबिंबं तक्षणेन सुभगीकृतवानिति पुराणकथाऽनुसंधेया ॥ ६ ॥

उदयाचलमौलिमाणिक्यं उदयगिरीकिरीटरत्नं अर्कमण्डलं सूर्यबिंबं अद्यापि विहायस्थलं आकाशप्रदेशं नालंकरोति नोदेतीत्यर्थः । वितायमानयज्ञस्य विस्तार्यमाणयागस्य "तनोतेर्यकि" इत्यात्वम् । कुलपतेः गुरोः । समिदाहरणाय समिधमाहर्तुम् । तुमर्थाच्चेति चतुर्थी । परिक्रामति गच्छति सम्भ्रान्तो वटुरिति । यत्र भयादिनाऽतिसम्भ्रमः तत्र सूचनां विनाऽपि प्रवेश

**शुनःशेपः**— (सचमत्कारं परिवृत्य।) सखे पशुमेढ्र, किमाश्चर्यं भीषणं च ।

**पशुमेढ्रः**—अज्ज रामोत्ति को वि खत्तिअकुमारो आअदोत्ति सुणिअ, कोदूहलेण तं पेक्खिदुं धावन्तस्स तवोवणपेरन्तपडिट्ठिदा पत्थरपुत्तलिआ सच्चमेव्व माणुसीभविअ मम संमुहं परावडिआ । तं पेक्खिअ उत्तरासङ्गवक्कलं वि उज्झिअ पलायिदो म्हि । "**अद्य राम इति कोऽपि क्षत्रियकुमार आगत इति श्रुत्वा, कुतूहलेन तं प्रेक्षितुं धावतस्तपोवनपर्यन्तप्रतिष्ठिता प्रस्तर-पुत्रिका सत्यमेव मानुषीभूय मम संमुखं परापतिता । तां प्रेक्ष्य उत्तरास-ङ्गवल्कलमप्युज्झित्वापलायितोऽस्मि ।**"

**शुनःशेपः**—(विहस्य।) सखे, साधु कृतम् । दिष्ट्या हि जीवतः पुनरावृत्तिः ।

**पशुमेढ्रः**—ता रक्खदु मं अज्जो इमाए दुट्ठरक्खसीए मुहादो । (इति वेपमानः पादयोः पतति ।) "**तद्रक्षतु मामार्य एतस्या दुष्टराक्षस्या मुखात्**" ।

**शुनःशेपः**—(सस्मितमुत्थाप्यालिङ्ग्य च ।) वयस्य, शृणोषि भगवतो गौतमस्य महर्षेरहल्यां नाम धर्मदारान् ।

**पशुमेढ्रः**—जा जणअवंसपुरोहिदस्स तत्थभवदो सदाणन्दस्स जणणी । तदो तदो । "**या जनकवंशपुरोहितस्य तत्रभवतः शतानन्दस्य जननीततस्ततः**" ।

इति बोध्यम् । शुनःशेप इति विश्वामित्रशिष्यनाम । "शेपपुच्छलांगूलेषु शुनः" इत्यलुक् । सचमत्कारं चाटुकारेणसह । पशुमेढ्र इति वटोर्नाम । धावतः वेगेन गच्छतः । सम्मुखं अभिमुखं समीपार्थेऽव्ययीभावः । तपोवनस्य पर्यन्ते परिसरे प्रतिष्ठिता स्थिता प्रस्तरमयी (शिलारूपा) पुत्रिका (पाञ्चालिका) प्रस्तरपुत्रिका । "पाञ्चालिकापुत्रिकास्याद्वस्त्रदन्तादिभिः कृता" इत्यमरः । पुत्रशब्दात "इवेप्रतिकृतौ" इति कन्, पुत्रस्य प्रतिकृतिः पुत्रिका । मानुषीभूयमानुषत्वं संपद्य परापतिता आगता । उत्तरासंगवल्कलमपि उत्तरीय-चीरमपि । उज्झित्वा त्यक्त्वा । पलायितोऽस्मि विद्रुतोऽस्मि "उपसर्गस्या-यतेः" इति परेत्यत्ररस्यलः । गत्यर्थत्वात् कर्तरिनिष्ठा । सखइत्यादि परि-हासवचनम् । दिष्ट्या दैवात् (अव्ययम्) वेपमानः भयचकितस्सन् । वयसा-तुल्यः वयस्यः । "नौवयोधर्म" इत्यादिना यत् । धर्मदारान् धर्मपत्नीं "दारा-

**शुनःशेपः**—सेयं पुरा पुरुहूतखण्डितचरित्रा तस्य दीर्घतपसो मुनेर्मन्युना निजमेव तदिन्द्रियदौर्बल्यमेवं विवर्तमानमनुभवन्ती संप्रत्यस्य रघुराजपुत्रस्य तेजसा तस्मादन्धकारान्निरमुच्यत । तदलमावेगेन ।

**पशुमेढ्रः**— (उन्मील्य चक्षुषी सर्वतोऽवलोक्य ।) अहो अच्चरिअं । अज्जस्स पसादेण पुणोवि जीअलोए पडिट्ठाविदोम्हि । तहवि सङ्कज्जरो अज्ज वि णमं-परिच्चेदि । ताअज्ज सुणस्सेह, मुहुत्तअं विस्सम्मदु । "आर्यस्य प्रसादेन पुनरपि जीवलोके प्रतिष्ठापितोऽस्मि । तथापि शङ्काज्वरोऽद्यापि न मां परित्यजति । तदार्य शुनःशेप, मुहूर्तं विश्रम्यताम्" ।

**शुनःशेपः**—सखे, भयमिति किमेतद्ब्राह्मणस्य । तत्पर्यवस्थापयात्मानम्
(इत्युपविशतः ।)

**पशुमेढ्रः**— (चिरं विमृश्य निःश्वस्य च सविस्मयम् ।) कहं विसयमिअदिण्हाझ-लंझलीए भअवदा हरिणा वि हरिणदा विडंबिअदि । "कथं विषयमृगतृष्णाझलं-झल्यां भगवता हरिणापि हरिणता विडम्ब्यते" ।

---

क्षतलाजानां बहुत्वं च" इति दारशब्दस्य नित्यं बहुत्वपुंस्त्वे । पुरोधीयत इति पुरोहितः "पुरोधास्तु पुरोहितः" इत्यमरः । सेयं अहल्या, पुरुहूतेन इन्द्रेण खण्डितचरित्रा नाशितपातिव्रत्या सती । दीर्घतपसः अपरिच्छिन्नतपसः गौतमस्य मन्युना कोपेन इन्द्रियदौर्बल्यं इन्द्रियाणां क्रियास्वपाटवं एवं शिलात्वप्राप्तिरूपेण विवर्तमानं परिणममानं । अस्य रघुराजपुत्रस्य रामस्य तेजसा प्रभावेण "तेज-स्त्विड्भेतसोर्बले । नवनीते प्रभावेऽग्नौ" इति हैमः । तस्मादन्धकारात् अन्ध-कारतुल्याच्छापात् निरमुच्यत निर्मोचनम्प्राप्ता । कर्मकर्तरिलङ् । आवेगेनालं माभैषीः । जीवलोके प्रतिष्ठापितोऽस्मि स्थिरीकृतोऽस्मि तिष्ठतेर्णिचि "अर्त्तिह्री" इत्यादिना पुक् । शंकाज्वरः आतंकपीडा । मुहूर्तं क्षणं । विश्रम्यतां श्रमपरि-हारं कुर्वः । ब्राह्मणस्य ज्ञाततत्वस्य । तस्यैवहिनिर्भयत्वं । स्मरणात् "यस्मान्नो-द्विजते लोको लोकान्नोद्विजते चयः" इत्यादि । पर्यवस्थापय स्थिरीकुरु । भगवता आप्तकामेन सर्वज्ञेनवा हरिणाऽपि इन्द्रेणापि विषया इन्द्रियार्था एव मृगतृष्णा मरीचिका "मृगतृष्णामरीचिका" इत्यमरः । तस्या झलंझल्यां प्रवा-हध्वनिविशेषे हारिणता कुरंगत्वं कथं विडम्ब्यते अनुक्रियते । यथा मृगः ग्रीष्म मध्याह्ने आतपे जलबुध्या भ्राम्येत् एवं कथं सर्वज्ञस्यापीन्द्रस्य पारदारिकत्वमिति भावः । अयंलोकः जीवसमुदायः अल्पीयान् अल्पतरः विवेकशून्यइत्यर्थः । तदेव

**शुनःशेपः**— (विहस्य।) सखे साधुब्रवीति भवान् । अल्पीयान्खल्वयं लोकः । कथमैहिकसुखास्वादलुब्धैर्भूयस्योरात्रयः पराहण्यन्ते । किन्तुमनोहारिभिराहार्यैरा-ह्रियमाणस्यलोचनद्वितयस्यापि जनोनविवेकमंकुशयितुमीष्टे । किं पुनस्सहस्रनयन-स्य तादृशि विभवे मरुतां पत्युः । चक्षुःप्रीतिमुद्भवन्तीमनूद्भवन्ति चापराणि कुसु-मचापचापलानि

**पशुमेढ्रः**— (विहस्य।) मण्णे एदाए एव्व मुनिघरणीए पुण्णपरिणामो एत्थ रामभद्दस्स पवासे कारणम् । **"मन्ये एतस्याएव मुनिगृहिण्याः पुण्यपरिणा-मोऽत्र रामभद्रस्य प्रवासे कारणम्"** ।

**शुनःशेपः**— इदं तावत्प्रथमम् ।

**पशुमेढ्रः**— (साभ्यर्थनम्।) अज्ज, दुदीअं वि सुणिदुं इमिणा दे वअणेण पज्जुसूओ ह्मि जइ कहणिज्जम् । **"आर्य, द्वितीयमपि श्रोतुमनेन तववचने-न पर्युत्सुकोऽस्मि यदि कथनीयम्"** ।

---

विशदयति **कथमित्यादिना** अन्यथेत्यध्याहर्तव्यं ऐहिकसुखस्य इहलोकभववि-षयसुखस्य अध्यात्मादेराकृतिगणत्वाट्ठञ् । आस्वादे अनुभवे लुब्धैः आसक्तैः जनैरिति शेषः । भूयस्यो बहुतराः "बहोर्लोप" इत्यादिनाईयसुनि बहोः भ्वादेशः ग्राम्यसुखासक्तत्वेनतुच्छत्वज्ञापनाय रात्रिग्रहणम् । कथं पराहण्यन्ते अपार्थीक्रि-यन्ते "हन्तेरत्पूर्वस्य" इति णत्वम् । यदि विवेकःस्यात कथमीदृशी विषयतृष्णा जीवानामिति भावः । तेष्वपि नयनस्य प्राधान्यात् तन्मूलकोविवेकभ्रंशइत्यर्थे कैमुतिकन्यायेनाह **किन्त्विति** । जनः मनोहारिभिः चित्ताकर्षणशीलैः आहार्यैः कृत्रिमवेषसंपाद्यैः रूपैरिति यावत् आह्रियमाणस्य आकृष्यमाणस्य लोचनद्वितयस्य नेत्रयुगलस्य द्वौ अवयवौ अस्येति विग्रहे "संख्याया अवयव" इति तयप् । विवेकं गुणदोषयोः पार्थक्येन ज्ञानं अंकुशायितुं अंकुशांकर्तुं नेष्टे नशक्नोति लोचनद्वयमपि विषयेभ्यो न नियच्छतीतिभावः । प्रतिबन्धाधिक्यद्योतनाय सहस्रनयनस्येत्याद्युक्तिः । उद्भवन्तीं चक्षुःप्रीतिमनु उद्भवन्त्याचक्षुः प्रीत्यासह "तृतीयार्थे" इति कर्मप्रवचनीयसंज्ञा । अपराणि मनःसंगादीनि कुसुमचापचापलानि मन्मथलौल्यानि चपलशब्दस्य युवादित्वाद्भावेऽण् । मुनिगृहि-ण्याः अहल्यायाः । प्रवासः अयोध्याया आनयनं । इदं तावत् अहल्या-सुकृतं तु । प्रथमं रामभद्रागमने आद्यं कारणं । साभ्यर्थनं सप्रार्थनं । पर्युत्सु-

**शुनःशेपः**— सखे, त्वयि किमकथनीयं नाम । अस्ति किष्किन्धायां पुरन्दरस्य नन्दनो वालि नाम प्लवंगराजः । तं चरजनीचरचक्रवर्तिना दशकंधरेण सह प्रवृद्धमैत्रीकमवलोक्य वानराच्छभल्लगोलांगूलप्रभृतीनामाचार्यः सर्वामात्यानुमतो जाम्बवानवादीत्.

**पशुमेढ्रः**— (सकौतुकम्।) तदो तदो । ततस्ततः

**शुनःशेपः**— ततश्च राजन्मायाविनी खल्वियं राक्षसजातिः । विशेषेण महेन्द्रावस्कन्दकन्दलितविक्रमः पितृवैरी तवायं रावणः । अपि च त्वदीयदोर्मूलसंपीडनगलितपौरुषो न विश्वविजयीति स्वयमाशङ्कनीयः । नापि सामन्तान्तरजिगीषायामन्तरालवर्तिनि समुद्रैलघुसमुत्थः । तदनेन सुरासुरविजयिनापि विरुद्धमण्डलेन राक्षसराजेन मैत्रीह्यनर्थानुबंधिनी । किंच । सर्वथेयमनुपकारिणी पौलस्त्येषु प्रीतिरिति भगवानिहोदाहरणं हरिणांकशेखरः । तथाहि ।

---

कोऽस्मि उत्काण्ठितोऽस्मि । यदि कथनीयं वक्तुं योग्यंचेत् "अर्हे कृत्यतृचश्च" इत्यनीयर् । नाम प्राकाश्ये । उद्भेदनामकमङ्गसन्ध्यंगं वक्तुमाह अस्तीत्यादिना । तल्लक्षणंतु "उद्भेदो गूढभेदनं" इति । गूढभेदनं गूढार्थप्रकाशनं । इह प्रत्याहरणरूपबीजोपयोगित्वेन गूढार्थस्य प्रकाशनात् । किष्किन्धायां तदाख्यगुहायां वानरराजधान्यामिति यावत् । किमपिधत्त इति वा किं किं दधातीति वा किष्कन्धाशब्दव्युत्पत्तिः पारस्करादित्वात्साधुः । पुरंदारयतीति पुरन्दरः इन्द्रः तस्य "पूःसर्वयो" रित्यादिना खचिमुं । प्लवंगानां वानराणां राजा प्लवंगराजः "राजाहस्सखिस्यः" इति समासान्तष्टच् । चक्रं राष्ट्रं वर्तयतीति चक्रवर्तीसार्वभौमः तेन प्रवृद्धा अधिका मैत्री स्नेहः यस्य तं प्रवृद्धमैत्रीकं "नद्यृतश्च" इति कप् । मित्रशब्दाद्गुणवचनेत्यादिना ष्यञि षित्वान्ङीष् । अच्छभल्लः ऋक्षः "ऋक्षाच्छभल्लभालुका" इत्यमरः । दीर्घपुच्छाः कृष्णमुखाः वानराः गोलांगूलाः । आचार्यः हितोपदेशकृत् । अमात्यैः मन्त्रिभिः अनुमतः अंगीकृतः । कर्मणिक्तः न तु कर्तरि मतिबुद्धीत्यादिना विहितस्य तस्य "क्तेनच पूजायां" इति समासनिषेधात् । अत एव चात्र षष्ठीसमासोऽपिन । अवादीत् "वदव्रजे" त्यादिना वृद्धिः । मायाविनी "अस्माये" त्यादिनाविनिः । तस्माद्रावणसंधानं न युक्तमिति भावः । अननुसंधेयत्वेहेत्वन्तरमाह । विशेषेणेति महेन्द्रावस्कन्देन, इन्द्रकर्मकपराभवेण कन्दलितः सञ्जातकन्दलः तारकादित्वादि तच् । वर्धमान इति यावत् विक्रमः पराक्रमः यस्य सः । अत एवायं रावणः

उक्षा रथो भूषणमस्थिमाला भस्माङ्गरागो गजचर्म वासः ।
एकालयस्थेऽपि धनाधिनाथे सख्यौ दशेयं त्रिपुरान्तकस्य ॥ ७ ॥

**पशुमेढ्रः**—(सहासम् ।) अहो ठेरभल्लूअस्स मन्तोवण्णासो परिहासकुसलदा अ । तदो तदो । "अहो स्थविरभल्लूकस्य मन्त्रोपन्यासः परिहासकुशलता च । ततस्ततः"

विश्रवसः अपत्यमित्यर्थे शिवाद्यणि प्रकृतेः रवणादेशः कुबेरे वाच्ये तु प्रकृतेः विश्रवणादेश इति ज्ञेयम् । त्वत्पितृविरोधिकथमनुसन्धेय इति भावः । न चाऽयं त्वत्तोबलीयान् । येन विरोधिनापि सन्धीयेतेत्याह अपिचेति । त्वदीयदोर्मूलस्य त्वत्कक्षस्य संपीडनेन पीडया गलितं भ्रंशितं पौरुषं बलं यस्य सः अतो हेतोः स्वयं विश्वविजयीति सम्यक् विश्वमभिभवतीति नाशंकनीयः । ननु दुर्बलोऽपि सामन्तान्तरनिग्रहे उपकरिष्यतीति मैत्रीकरणमिति चेत् तदपि नेत्याह नापीति । सामन्तान्तरस्य सन्निहितराजान्तरस्य जिघृक्षायां विषये ग्रहीतुमिच्छायां तवसत्या-मित्यर्थः । ग्रहेः सनि रुदविदेत्यादिना कित्वात् संप्रसारणम् । सनि-ग्रहगहोश्चेति इण्निषेधः । समुद्रे अन्तरालवर्तिनिसति । लघुः (अपेक्षितावसरे सुकरः) उत्थः (उत्थानं आगमनं) लघूत्थः तिष्ठतेर्भाविकः । स्पष्टमेतत् "सुपि-स्थ" इति सूत्रभाष्ये । तत्, सुरासुरविजयिनापि देवासुराणां जेत्रापि विरु-द्धमण्डलेन दुर्गमभूमिभागवर्तिना "मण्डलं भूमिभागश्च मण्डलं सरमासुतः - मण्डलं वर्त्तुलं प्रोक्तं संघातो मण्डलं मतम् ॥" इत्यनेकार्थध्वनिः । अनेन राक्षसेन सह मैत्री अनर्थानुबन्धिनी अनर्थमूलं न केवलं परिणामेऽनर्थरूपा-अपि तु वर्तमानेप्युपकारशून्येत्याह किंचेति । पौलस्त्येषु पुलस्त्यवंश्येषु प्रीतिः अनुपकारिणी उपकाररहिता । इह अस्मिन् विषये हरिणांकशेखरः चन्द्रशेखरः उदाहरणं । तदेवसोपहासमुपपादयति उक्षेति । त्रिपुरान्तकस्येत्युभयान्वयि । त्रयाणां पुराणां समाहारः त्रिपुरम्. पात्रादित्वान्नङीप् । तस्य । अन्तकस्य मृत्योः शिवस्य । रथः स्यन्दनः उक्षा बलीवर्दः अस्थिमाला भूषणं अलंकारः । अंगरागः विलेपनं भस्म क्षारः । वासः वस्त्रं गजचर्मकृत्तिः । सख्यौ मित्रे धनाधिनाथे कुबेरे एकालयस्थेऽपि एकगृहास्थितेसत्यपि, त्रिपुरान्तकस्य इयं एतादृशी अवस्था तस्मात्तद्वंश्यानामनुपकारित्वं सिद्धमिति भावः ( वृ ) इन्द्रवज्रा ॥ ७ ॥

स्थविरभल्लूकस्य वृद्धऋक्षस्य जांबवतः "प्रवयाः स्थविरो वृद्धः" इत्यमरः ।

**शुनःशेपः**—ततश्च तद्वचनं जराप्रलपितमित्युपहसति हरीश्वरे, उपांशु तदनुमत्या महामात्यस्यकेसरिणः पुत्रो हनुमान्कुमारं सुग्रीवमादाय ऋश्यमूकं नाम पर्वतदुर्गमनुप्रविष्टः ।

**पशुमेढ्रः**—(साकूतम् ।) अज्ज, सोमारुई णाम तेल्लोक्केकमल्लोत्ति सुणिअदि "आर्य समारुतिर्नाम त्रैलोक्यैकमल्ल इति श्रूयते"

**शुनःशेपः**—अथ किम् ।

**पशुमेढ्रः**—(सविचिकित्सम् ।) अज्ज, जहतहवा होदु, सामी सामी एव्व तं परिच्चीय्य ण सरिसो तारिसस्स महाभाअस्स पडिऊलप्पडिग्गहो । आर्य, यथा तथा वा भवतु, स्वामी स्वाम्येव तं परित्यज्य, "न सदृशस्तादृशस्य महाभागस्य प्रतिकूलप्रतिग्रहः"

**शुनःशेपः**—(विहस्य ।) पुरैव किलायमाञ्जनेयो भगवतः सहस्रकिरणाद्व्याकारणविद्यामधीयानस्तदात्मजन्मनो वानरयोनेः सुग्रीवस्य साहायकमभिप्रायज्ञो गुरुदक्षिणीचकार ।

---

मन्त्रस्य गुप्तवादस्य उपन्यासः वाङ्मुखम् । "उच्चारथ" इत्यादि परिहासस्य कुशलतासामर्थ्यंच । अहो आश्चर्यम् । हरीश्वरे वालिनि । तद्वचनं जाम्बवद्वाक्यं । जरया वयोहान्या षित्वादङ् । प्रलपितमिति अर्थविनैव उदीरितमिति "प्रलापोऽनर्थकं वचः" इत्यमरः । महामात्यस्यमुख्यमन्त्रिणः उपांशुरहसि "रहश्चोपांशुचालिंगे" इत्यमरः । तस्य जाम्बवतः अनुमत्या अनुज्ञया कुमारं युवराजं सुग्रीवं आदाय पर्वतस्य दुर्गं दुर्गमप्रदेशं अनुप्रविष्टः गतः साकूतं साभिप्रायम् । समारुतिः हनुमान् । पुरा किल केसरिणः स्त्रियं अञ्जनांनाम वानरीं वायुरुपजगाम ततः तस्यां हनुमानजायतेति रामायणकथा "सत्वं केसरिणः पुत्रःक्षेत्रजो भीमविक्रमः । मारुतस्यौरसः पुत्रस्तेजसा चापि तत्समः" ॥ इति त्रैलोक्यैकमल्लः त्रैलोक्येकबलवान् त्रिलोक्यैवत्रैलोक्यं चतुर्वर्णादित्वात्स्वार्थे ष्यञ् "मल्लः पात्रे कपोलेच मत्स्यभेदे बलीयसि ।" इति मेदिनीविश्वप्रकाशौ । स्वामी राजा यथा तथा वा भवतु साधुकार्यसाधुकारी वा आस्तां । तथापि स स्वाम्येव प्रभुरेव । "स्वादामिन्नैश्वर्ये" इति स्वशब्दान्मत्वर्थीय आमिन् । तं वालिनं परित्यज्य मुक्त्वा प्रतिकूलस्य विरोधिनः सुग्रीवस्य प्रतिस्पर्धिकूलमस्येति समासः । प्रतिग्रहः स्वीकरणं महाभागस्य महानुभावस्य न सदृशः न युक्तः स्वामिद्रोहपातकापत्तेरिति भावः ।

**पशुमेढ्रः**— (सानन्दम्) हुं । ता उचिदं जेव्व गुरुपुत्तो सब्रह्मचारी वा अणुवट्टीदि । तदो तदो । हुं । **तदुचितमेव गुरुपुत्रः सब्रह्मचारी वानुवर्त्यते । ततस्ततः**

**शुनःशेप**ः—ततश्चाहिभयोपजापजर्जरं सुहृद्गृहमुपश्रुत्य राक्षसराजः खरदूषणत्रिशिरोभिर्महामात्यैरधिष्ठितमात्मबलैकदेशं सिन्धोरुदीचि कूलेवालिपरिग्रहाय प्राहिणोत् ।

**पशुमेढ्रः** कधं अपरिहीणमित्तधम्मो वि सो रक्खसो । **कथमपरिहीनमित्रधर्मोऽपि स राक्षसः.**

**शुनःशेपः**ः—**सखे, किमुच्यते । रावणः खल्वसौ ।**

---

अयमाञ्जनेयः हनूमान् अञ्जनाशब्दात् "स्त्रीभ्यो ढक्" । भगवतः सहस्रकिरणात् सूर्यात् व्याकरणविद्यां व्याकरणशास्त्रं आदादिकस्य विदेः "सज्ञायां समज" इत्यादिना क्यप् । विदन्ति अनयेति विद्या । अधीयानः अध्ययनं कुर्वन् तदात्मजन्मनः तत्पुत्रस्य वानरयोनेः वानरजन्मनः सुग्रीवस्य साहायकं सहायकर्म "योपधाद्गुरूपोत्तमात्" इति वुञ् । जानातीति ज्ञः इगुपधज्ञेत्यादिना कः । अभिप्रायस्य ज्ञः अभिप्रायज्ञः गुर्वाशयं विदन्सन्नित्यर्थः । गुरुदक्षिणीचकार गुरुदक्षिणां कृतवान् तस्मान्नायंदोष इत्यर्थः । हुमिति तर्के " हुं वितर्के परिप्रश्ने हुं रुषोक्त्यनुनीतिषु " इति विश्वः । तत् तर्हि उचितमेव योग्यमेव ब्रह्म ( वेदाध्ययनार्थं व्रतं ) चरतीति ब्रह्मचारी समानश्चासौ ब्रह्मचारी च सब्रह्मचारी समानवेदव्रताचरणशीलः " चरणे ब्रह्मचारिणि " इति समानस्य सादेशः । अनुवर्त्यते अनुसरणं क्रियते । ततश्च राक्षसराजः सुहृद्गृहं वालिगृहं अहिभयोपजापेन स्वपक्षप्रभवभयनिमित्तभेदेन " महीभुजामाहिभयं स्वपक्षप्रभवं भयम् " " भेदोपजापौ " इति चामरः । जर्जरं भिन्नं इत्युपश्रुत्य चारद्वाराविदित्वा । खरप्रमुखैः अधिष्ठितं अधिकृतं आत्मबलस्य स्वसैन्यस्य " स्थौल्यसामर्थ्यसैन्येषु बलंनाकाकसीरिणोः " इत्यमरः । एकदेशं कञ्चनभागं सिन्धोः समुद्रस्य " देशे नदविशेषेऽब्धौ सिन्धुर्नासरिति स्त्रियाम् " इत्यमरः । उदीचिकूले उत्तरतीरे । वालिनः परिग्रहाय पृष्ठबलत्वेन प्राहिणोत् प्रेषितवान् " सैन्यपृष्ठे परिग्रहः " इत्यमरः । "हिनुमीना " इति णत्वम् । प्रतिग्रहेति पाठेऽप्ययमेवार्थः । **कथमिति** राक्षसोप्यपरिहीनः अपरित्यक्तः मित्रधर्मः उपकाराचरणं येन स इत्येतदाश्चर्य-

प्रियाकर्तुं कस्मैचनानिजशिरःकर्तनरस-
प्रहृष्यद्रोमाञ्चः स परमिह लङ्कापरिवृढः ।
विलक्षव्यापारं किमपि ददृशुर्यस्य दशमम्
शिरस्ते मूर्धानः क्षणहृतपुनर्जन्मसुभगाः ॥ ८ ॥

**पशुमेढ्रः**— (सकौतुकम् ।) तदो तदो । ततस्ततः.

**शुनश्शेपः**—ततः सुकेतुसुता नागसहस्रबलधारिणी ताटकानाम राक्षसी तस्मादनीकादागत्य मनुष्यमण्डलविहारकौतुकादिमामस्मदीयां भूमिमधिवसति ।

**पशुमेढ्रः**— (सकौतुकम् ।) णाअसहस्सबला इत्थीअत्ति त्ति असुदपुव्वं क्खु एदं । तदो तदो । **नागसहस्रबला स्त्री अस्तीत्यश्रुतपूर्वं खल्वेतत् । ततस्ततः.**

**शुनश्शेपः**— ततश्च श्रौतस्य विधेः प्रत्यूहमस्याः शङ्कमानः कुलपतिरिमौ दाशरथी रामलक्ष्मणावानीतवान् ।

**पशुमेढ्रः**— जाणे रामभद्दो त्ति को वि रक्खसाणं उवरि अवइण्णो क्खु एसो । **जाने रामभद्र इति कोऽपि राक्षसानामुपर्यवतीर्णः खल्वसौ.**

---

मित्यर्थः । **प्रियेति** । यस्य रावणस्य क्षणहृतेन शीघ्रहरणेन भावे निष्ठा । पुनर्जन्मना पुनःप्ररोहेणच सुभगाः श्लाघ्याः ते मूर्धानः नव शिरांसि । विलक्षव्यापारं इतरेषामिव स्वस्य च ईश्वरार्थत्वाभावेन कृतकृत्यत्वाभावात्संजातलज्जातिभारं किमपि अतितुच्छं दशमं पूरणार्थे "नान्तादसंख्यादेः" इति मट् । शिरः ददृशुः सः लंकापरिबृढः लंकाप्रभुः "प्रभौपरिवृढः" इति निपातनात्साधुः । परं अतितरां कस्मैचन अनिर्वाच्यवैभवाय महेश्वरायेति यावत् । रुच्यर्थानामिति चतुर्थी । प्रियाकर्तुं प्रियमुत्पादयितुं "सुखप्रियादानुलोम्ये" इति डाच् । "तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्" इति तुमुन् । निजशिरसां स्वमूर्ध्नां कर्तने च्छेदने रसेन रागेण "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः । प्रहृष्यन् समुद्यन् रोमाञ्चः यस्य तथोक्तः । स रावणः किमुच्यते अतिदृढव्रतत्वादितिभावः । (वृ) शिखरिणी ॥ ८ ॥

तस्मादनीकात् वालिपरिग्रहार्थे रावणप्रहितात्सैन्यात् आगत्य मनुष्यमण्डले मनुष्यराज्ये । विहारकौतुकात् क्रीडितुमिच्छया । इमामस्मदीयां भूमिं अधिवसति अस्मिन् सिद्धाश्रमप्रदेशे वर्तते "उपान्वध्याङ्वसः" इति कर्मत्वं । पूर्वं श्रुतं श्रुतपूर्वं "भूतपूर्वे चरट्" इति निर्देशात्पूर्वशब्दस्य समासे परनिपातः।

**शुनश्शेपः**—सखे, एवमेतत् । रामभद्र इति कोऽप्ययं चतुरक्षरो राक्षसरक्षासिद्धमन्त्रः । विशेषेण पुनरिदानीं भगवता कौशिकेन ब्रह्मज्योतिषस्तादृशं विवर्तमाश्चर्यं दिव्यास्त्रमन्त्रपारायणमध्यापितः ।

**पशुमेढ्रः**— मण्णे मन्तमईहिं अत्थदेवदाहिं समं बलादिबलाओ सत्तीओ वि रामं संकमिस्सन्दि । "**मन्ये मन्त्रमयीभिरस्त्रदेवताभिः समं बलातिबले शक्ती अपि रामे संक्रमिष्यतः**"

**शुनःशेपः**— अथ किं । तदपि वृत्तमेव ।

**पशुमेढ्रः**—अज्ज णं भणामि जइ णिआओ जेव्व सत्तीओ णिआओ जेव्व अत्थविज्जाओ । ता किं त्ति अत्तणो विग्घोवसमे राहवस्स गोरअमुप्पादेइ तत्थभवं कोसिओ । अहवा पाहुणहत्थेण सप्पमारणं क्खु एदम् । **आर्य ननु भणामि 'यदि निजा एव शक्तयो निजा एवास्त्रविद्याः । तत्किमित्यात्मनो विघ्नोपशमे राघवस्य गौरवमुत्पादयति तत्रभवान्कौशिकः । अथवा प्राघुणहस्तेन सर्पमारणं खल्वेतत्.**

**शुनःशेपः**—सखे, अनभिज्ञोऽसि । स्वयं प्रयोगादन्तेवासिभिर्विहितः प्रयोगो महिमानमाचार्याणामुपचिनोति । पश्य ।

---

श्रौतस्य श्रुत्युक्तस्य "तेन प्रोक्तम्" इत्यण् । विधेः कर्मानुष्ठानस्य । तस्या इति ( पञ्चमी ) राक्षसानामुपरि राक्षसान्लक्षीकृत्य । चतुर्भिरक्षरैर्निर्वृत्तश्चतुरक्षरः "द्विगोर्लुगनपत्ये" इति चातुरर्थिकस्य लुक् । कोऽपि अप्रमेयमहिमा राक्षसशिक्षायां तन्निग्रहे सिद्धमन्त्रः ध्यानमात्रेण फलप्रदमन्त्रविशेषः मन्तारंत्रायत इति मन्त्रः । "मन्त्रो देवादिसाधने । वेदांशे गुप्तवादे च ॥" इति हैमः । सिद्धाश्चासौ मन्त्रश्चसिद्धमन्त्रः । तल्लक्षणंतु "मन्त्रः पञ्चविधः सिद्धः सुसिद्धार्यौ च पौरुषः । शाबरश्चेति तत्राद्यो ध्यानमात्रफलप्रदः ॥" इति । इदानीं संस्कारेणाप्यतिदुस्सह इत्याह **विशेषेणेति** इदानीं कौशिकेन भगवता ब्रह्मज्योतिषः वेदाख्यतेजसः "वेदस्तत्वं तपो ब्रह्म" इत्यमरः । विवर्तः परिणामः दिव्यास्त्राणां ये मन्त्राः तत्तद्देवताप्रसादनार्हाः तेषां पारायणं साकल्यं । "साकल्यासंगवचने पारायणतुरायणे" इत्यमरः । अध्यापितः अध्ययनं कारितः रामभद्र इति शेषः । मन्त्रमयीभिः मन्त्ररूपाभिः अस्त्रदेवताभिः समं बलातिबले तदाख्ये शक्ती रामसंक्रमिष्यतः रामं प्राप्स्यत इति मन्ये तर्कयामि । तदपि-

**स्थानेषु शिष्यनिवहैर्विनियुज्यमाना**
**विद्या गुरुं हि गुणवत्तरमातनोति ।**
**आदाय शुक्तिषु बलाहकविप्रकीर्णै**
**रत्नाकरो भवति वारिभिरम्बुराशिः ॥ ९ ॥**

किं च दीक्षिष्यमाणा न क्रुध्यन्तीति रक्षितारं क्षत्रियमुपाददते ।

**पशुमेढ्रः—अज्ज**, सोहणं मन्तेसि । अण्णं वि किं वि पुच्छिदुकामो ह्मि ।
**आर्य, शोभनं मन्त्रयसे अन्यदपि किमपि प्रष्टुकामोऽस्मि ।**

---

वृत्तमेव बलातिबलयोः रामे संक्रमणमपि निर्वृत्तमेव । नन्वित्याक्षेपे "नन्वाक्षेपे परिप्रश्ने प्रत्युक्तावववधारणे । वाक्यारम्भेप्यनुनयामन्त्राणनुज्ञयोरपि " इति हमः भणामि वदामि । सर्वस्य स्वायत्तत्वे सर्वं स्वयमेव कर्तुं शक्तः सन् किमर्थमात्मनो विघ्नोपशमे राघवस्य गौरवं राक्षसनिग्रहेण महत्त्वं उपपादयति गमयति । अथवेति-पक्षान्तरार्थं । एतत् रामेण राक्षसघातनं प्राघुणहस्तेन अभ्यागतपाणिना सर्पस्यमारणं नाशनं "प्राघुणस्त्वतिथिर्द्वयोः" इति त्रिकाण्डशेषे । अतिथ्यभ्या-गतमेदस्तूक्तएवयमेन । "तिथिपर्वोत्सवाः सर्वेत्यक्ता येनमहात्मना । सोऽतिथिः सर्वभूतानां शेषानभ्यागतान् विदुः ॥" इति । यथाऽतिथ्यभ्यागतादिभिःसर्पघातने -कृते तत्सिद्धौ स्वस्यापि स्वास्थ्यमपायेतुनात्मनः । तद्वद्राक्षसघातने रामेण कृते-स्वस्य कृतुसंपत्तिः विपत्तौ तु नात्मनःकापिक्षतिरितिभावः । अनभिज्ञोऽसि अवि-वेकीत्वम् । स्वयंप्रयोगात् प्रयोज्यस्य आत्मनैव करणतः अन्तेवासिभिः प्रयोगः शिष्यैः करणंआचार्याणां महिमानं गौरवं उपचिनोति वर्धयति । उक्तमेवोप-पादयति **स्थानेष्विति** । हि यस्माद्धेतोः विद्या शिष्यनिवहैः अन्तेवासिवर्गैः स्थानेषु प्रयोगार्हसन्दर्भेषु विनियुज्यमाना प्रयुज्यमानासती गुरुं गुणवत्तरं प्रयोग-कालात्प्रागवस्थातः अधिकवैदुष्यगुणसम्पन्नं आतनोति प्रकाशयति अत्रदृष्टान्तमाह अम्बुराशिः समुद्रः आदाय गृहीत्वा स्वजलैकदेशमितिशेषः शुक्तिषु मुक्तास्फोटेषु बलाहकविप्रकीर्णैः मेघविक्षिप्तैः वारिवाहक इति विग्रहे पृषोदरादित्वाद्वारि-शब्दस्य वकारः वाहकेत्यत्र वस्यलश्चभवति । वारिभिर्जलैः रत्नाकरः मणीनां वासभूमिर्भवति न तु तत्प्राक् । तस्माद्यथा शुक्तिषु मेघवृष्टैः स्वजलैःसमुद्रस्य रत्नाकरत्वगुणविशेषः एवं गुरोरपि प्रयोगस्थानेषु शिष्यप्रयुक्तया स्वविद्यया गुणाधिक्यमेव । तस्माद्रामद्वारा राक्षसनिग्रहे विश्वामित्रस्यैव गुणोत्कर्षः । अतः प्राघुणसर्पमारणन्यायशङ्कां माकुर्वित्यर्थः ( वृ ) **वसन्ततिलकम्** ॥ ९ ॥

शोभनं मन्त्रयसे सुष्ठु कथयसि । प्रष्टुकामोऽस्मीत्यत्र "तुंकाममनसो-

**शुनःशेपः**—किं तत् ।

**पशुमेढ्रः**—सव्वधा णिगूढं वि वाणराणं छग्गुणअं कथं अज्जेण पडिवण्णम् । सर्वथा विगूढमपि वानराणां षाड्गुण्यं कथमार्येण प्रतिपन्नम् ।

**शुनःशेपः**—सखे, सर्वमेतदयोध्यायात्रायां समाधिमयेन चक्षुषा साक्षात्कृतत्रिभुवनवृत्तान्तस्य तातविश्वामित्रस्य मुखादश्रौषम् । (सर्वतोऽवलोक्य।) अये, प्राभातिकी भुवनस्य लक्ष्मीः । तथा हि ।

प्रत्यग्रज्वलितैः पतङ्गमणिभिर्नीराजिता भानवः-
सावित्राः कुरुविन्दकन्दलरुचः प्राचीमलंकुर्वते ।
प्रौढध्वान्तकरालितस्य वपुषश्छायाच्छलेन क्षणा-
दप्रक्षालितनिर्मलं जगदहिर्निर्मोकमुन्मुञ्चति ॥ १० ॥

अपि च ।

पीत्वा भृशं कमलकुड्मलशुक्तिकोशा-
दोषातनीं तिमिरवृष्टिमथ स्फुटन्तः ।

---

रपि" इति तुमो मस्यलोपः षड्गुणाएव षाड्गुण्यं चतुर्वर्णादित्वात् स्वार्थे ष्यञ् । सन्ध्यादिमन्त्रः । समाधिमयेन चक्षुषा दिव्यज्ञानचक्षुषा प्रभातेभवा प्राभातिकी "कालाट्ठञ्" प्रत्ययेति । सावित्राः सवितृसम्बन्धिनः तस्येदमित्यण् भानवः किरणाः प्रत्यग्रं अभिनवं तदानीमेव सूर्योदयात् "प्रत्यग्रोऽभिनवोनव्य" इत्यमरः । ज्वलितं ज्वाला येषांतैः भास्वत्कः पतङ्गमणिभिः सूर्यकान्तैः नीराजिताः कृतनीराजनास्सन्तः अतएव कुरुविन्दकन्दलस्य पद्मरागाख्यरत्नस्य "कुरुविन्दं रत्नभेदे मुस्ताकुल्माषयोः पुमान्" इति मेदिनी । "कन्दलंस्यात्पल्लवेच नवांकुरे" इति विश्वः । कुरून्विन्दतीति कुरुविन्दः गवादित्वात् शः । प्राचीदिशं अलङ्कुर्वते भूषयन्ति । जगदेवअहिः सर्पः प्रौढध्वान्तेन निबिडान्धकारेण करालितस्य विकारितस्य "करालं दन्तुरेतुङ्गे विशाले विकृतेपिच" इति विश्वः । वपुषः शरीरस्य अप्रक्षालितमपि शौचकर्मरहितमपि निर्मलं निष्कल्मषं निर्मोकं कञ्चुकं छायाच्छलेन अनातपव्याजेन उन्मुञ्चति त्यजति सूर्योदये सति अतमस्कत्वाज्जगन्निर्मुक्तसर्पवदभासतइत्युत्प्रेक्षा । (वृ) शार्दूलविक्रीडितम् ॥ १० ॥

पीत्वेति । कमलकुड्मलाः पद्ममुकुलाएव शुक्तिकोशाः मुक्तास्फोटमुकुलाः "कोशोऽस्त्री कुड्मले खड्गपिधाने ऽर्थौघदिव्ययोः।" इति वैजयन्ती । दोषातनीं रात्रौभवां भवार्थेऽन्तुट्च । तिमिरवृष्टिं अन्धकारवर्षं भृशं अतितरां पीत्वा ।

**निर्यन्मधुव्रतकदम्बमिषाद्वमन्ति**
**बिभ्रन्ति कारणगुणानिव मौक्तिकानि ॥ ११ ॥**

अपि च।

**विकसितसंकुचितपुनर्विकस्वरेष्वम्बुजेषु दुर्लक्षाः।**
**कलिकाः कथयति नूतनविकासिनीर्मधुलिहामर्घः ॥ १२ ॥**

---

अथ साकल्येन। स्फुटन्तः विशरन्तःसन्तः। निर्यतः निर्गच्छतः मधुव्रतकदम्बस्य भ्रमरसमूहस्य मिषात् व्याजेन कारणस्य (तिमिरवृष्टेः प्रकृतिभूतायाः) गुणान् नैल्यादीन् बिभ्रन्ति दधानानि मौक्तिकानि मुक्ताफलानि वमन्तीव उद्गिरन्तीवेत्युत्प्रेक्षा। वमनस्य गौणत्वान्नग्राम्यता। कारणगुणाहिकार्येसंक्रामन्तीति न्यायेन, तिमिरवृष्टिजन्यभ्रमरात्मकमौक्तिकस्यापि नीलत्वम्। अतएवहिसांख्यतार्किकादयः अचेतनस्य जगतः अचेतनप्रकृतिकत्वं अनुमिमते। नचात्र तमसो द्रव्यत्वाभावेन नीलत्वरूपगुणवत्वाभावात्कथंकारणगुणवत्वंकार्यस्येतिशङ्कनीयम्। वस्तुतोद्रव्यत्वाभावेऽपि नीलं नभः; तमश्चलतीतिवत् प्रातीतिकरूपवत्वेनाप्युत्प्रेक्षायाः संभवात् (वृ) वसन्ततिलकम् ॥ ११ ॥

**विकसितेति**। मधुलिहां भ्रमराणां अर्घः पूजाविधिः मूल्ये पूजाविधावर्घः" इत्यमरः। विकसितानि पूर्वेद्युरुषसि संकुचितानि पुनस्सायाह्नेमुकुलीभूतानि पुनर्विकस्वराणि इदानीं पुनरपि साधुविकसितानि साधुकारिण्यर्थे विपूर्वात्कसेः "स्थेश" इत्यादिना वरच्। तथाभूतेषु अंबुजेषु पद्मेषु "सप्तम्यां जनेर्ड" इति डे बहुलग्रहणादलुक्। निर्धारणे सप्तमी। दुर्लक्षाः दुःखेनापि लक्षयितुमशक्याः। "ईषद्दु"रित्यादिना खल्। नूतनविकासिनीः नूतनो नवः विकासः आसामिति मत्वर्थे इनिः नवशब्दस्य नू आदेशे स्वार्थिकेतनपि नूतनमितिरूपं। कलिकाः कोरकान् "कलिका कोरकः पुमान्" इत्यमरः। कथयति व्यक्तंब्रूत इति भावः। अत्र पूर्वेद्युर्विकसितानां अद्यत्वे विकसितानां च परिच्छेदकधर्माभावात् प्राप्तं संशयं नवविकसितेषु मकरंदाधिक्येन तत्र भ्रमरप्रपत्तिः व्यपोहयतीति तात्पर्यम्। अत्र (उन्मीलितालंकारः) नूतनप्रतनपुष्पयोर्भेदस्फूर्तेर्मकरन्देन। "भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकौ" इति तल्लक्षणात्। यद्वा। अर्घशब्दोमकरन्दवाची "पूजायां मकरन्देऽपि भवेदर्घस्तथाऽऽदरे" इतिविश्वः ॥१२॥

(आदित्यमण्डलं निर्वर्ण्य ।)

कटुभिरपि कठोरचक्रवाकोत्करविरहज्वरशान्तिशीतवीर्यैः ।
तिमिरहतमयं महोभिरञ्जन् जयति जगन्नयनौघमुष्णभानुः ॥ १३ ॥

तदनुजानीहि मां मामिदाहरणाय ।

**पशुमेढ्रः**—अहं वि खत्तिअकुमाराणं दंसणे उक्कण्ठिदोह्मि ता कहेहि कहिं पेक्खामि। अहमपि क्षत्रियकुमारयोर्दर्शन उत्कण्ठितोऽस्मि तत्कथय कुत्र प्रेक्षे

**शुनश्शेषः**—(विहस्य) नन्वेतावेव यज्ञवाटमुत्तरेण विहारभूमिषु क्रीडतः। तदुपेत्यनिःशङ्कमवलोकय । (इति निष्क्रान्तौ ।) **विष्कम्भः**

(ततः प्रविशतो रामलक्ष्मणौ ।)

**रामः**—अहो विचित्रमिदमायतनं सिद्धाश्रमपदं नाम भगवतो गाधिनन्दनस्य ।

तत्तादृक्तृणपूलकोपनयनक्लेशाच्चिरद्वेषिभि-
र्मेध्या वत्सतरी विहस्य वटुभिः सोल्लुण्ठमालभ्यते ।
अप्येष प्रतनूभवत्यतिथिभिः सोच्छ्वासनासापुटै-
रापीतो मधुपर्कपाकसुरभिः प्राग्वंशजन्मानिलः ॥ १४ ॥

---

**कटुभिरिति** । अयं उष्णभानुः सूर्यः कटुभिरपि तीक्ष्णैरपि औषधपक्षे तापकैरपि । कठोरस्य चक्रवाकोत्करविरहज्वरस्य कोकसमूहवियोगसंतापस्य शान्तौविषये शीतवीर्यैः शीततेजोभिः "वीर्यं तेजः प्रभावयोः" इति हैमः । श्यैङः "द्रवमूर्तिस्पर्शयोः श्यः" इति निष्ठायांसंप्रसारणं हल इति दीर्घश्च । अस्पर्श इति निषेधान्नत्वंन । पक्षे शीतवीर्यत्वं प्रसिद्धमेव "चक्षुष्यापिप्पलीशीतवीर्याच।" इति महोभिस्तेजोभिः पक्षे माहात्म्यैः तिमिरेण अन्धकारेण नेत्ररोगविशेषेण च "तिमिरं ध्वान्ते नेत्रामयान्तरे" इति मेदिनी । हतं बाधितं जगदेव नयनौघः नेत्रसमूहः तम् यद्वा । जगतां जङ्गमानां जीवानामिति शाकत्तु । नयनौघं अञ्जन् अक्तंकुर्वन् प्रकाशयन्नित्यर्थः पक्षेत्वञ्जनं स्पष्टमेव । जयति सर्वोत्कर्षेण वर्तते । अत्राञ्जन्निति हेत्वर्थे शता । जगन्नयनाञ्जनहेतुकोऽस्योत्कर्ष इत्यर्थः। (वृ) पुष्पिताग्रा औपच्छन्दसिकंवा ॥ १३ ॥

**तदिति** । तत् सूर्यस्योदितत्वाद्धेतोः । उत्कण्ठितः सञ्जातोत्कण्ठः तारकादित्वादितच्। यज्ञवाटं यज्ञशालायाः उत्तरेणैव उत्तरभागसमीपएव । उत्तरशब्दाददूरार्थे एनप्। "एनपाद्वितीया" इति तद्योगे द्वितीयाच। **तत्तादृगिति** । तत्तादृशामतिस्थूलानां तृणपूलकानां तृणसङ्घातानां उपनयनस्य क्लेशात् भारजनितो-

**लक्ष्मणः**—आर्य, अत्रैव किल

**देवः कौस्तुभकिंजल्कनीलोत्पलमयो हरिः**
**स्वयं किमपि तत्तेपे तपः कपटवामनः ॥ १५ ॥**

**इत्थमेतन्महातीर्थमध्यासीना द्विजातयः ।**
**अकुतोभयसंचाराः षट्कर्माणि प्रयुञ्जते ॥ १६ ॥**

( अन्यतश्च दृष्ट्वा । ) आर्य,

**पश्यैते पशुबन्धवेदिवलयैरौदुम्बरीदन्तुरै-**
**र्नित्यव्यञ्जितगृह्यतन्त्रविधयो रम्यागृहस्थाश्रमाः ।**

---

पतापेन चिरद्वेषिभिः चिरेण स्पर्धावद्भिः "संपृच" इत्यादिना द्विषोघिनुण् । वटुभिः द्विजपुत्रैः मेध्या संगमनीया पवित्रेति यावत् । "पूतं पवित्रं मेध्यञ्च" इत्यमरः । वत्सतरी दम्या "दम्यवत्सतरौ समौ" इत्यमरः । द्विहायना गौः सोल्लुण्ठं अस्मच्छुभफलमिदानीं प्राप्तमिति साभिप्रायंहसित्वा । आलभ्यते विशस्यते " आलंभपिञ्जविसरक्राथोन्माथवधाअपि " इत्यमरः । मधुपर्कस्य पूजार्हद्रव्यविशेषस्य पाकेन सुरभिः परिमलविशिष्टःप्राग्वंशे हविश्शालायाः प्राग्भागे "प्राग्वंशः प्राग्धविर्गेहात्" इत्यमरः जन्मयस्य सः अनिलः वायुः सोच्छ्वासः प्रश्वासाविशिष्टः नासापुटः येषां तैः अतिथिभिः तल्लक्षणमुक्तंव्यासेन । "दूराच्चोपगतं श्रान्तं वैश्वदेव उपस्थितं । अतिथिं तं विजानीयात् इति" । आपीत आघ्रातस्सन् प्रतनूभवति अल्पतां याति । (वृ) शार्दूलविक्रीडितम् ॥ १४ ॥

देव इति । कौस्तुभ एव किञ्जल्कः केसरो यस्य तस्य नीलोत्पलस्य इन्दीवरस्य स्वरूपमिव स्वरूपं यस्य सः स्वरूपार्थे मयट् । देवो हरिः विष्णुः । कपटवामनः मायया वामनरूपस्सन् अत्रैव किल किमपि स्वप्रयोजनाभावादनिर्वाच्यं स्वयंतपस्तेपे तप्तवान् ॥ १५ ॥

इत्थमिति । द्विजातयः ब्राह्मणाः इत्थं अनेनप्रकारेण महातीर्थं वामनतपःस्थानभूतत्वात्पुण्यक्षेत्रं "यदध्यासितमर्हद्भिः तद्धितीर्थं प्रचक्षते" इति स्मृतेः । एतत् स्थानं अध्यासिनाः अधितिष्ठन्तस्सन्तः । अत एव । अकुतोभयः ( नास्तिकुतोऽपि भयं यस्येति मयूरव्यंसकादित्वात्समासः ) सञ्चारो येषान्तथाभूतास्सन्तः षट्कर्माणि दानादीनि " दानमध्ययनं पितृतर्पणातिथिपूजनम् । होमो बलिश्च विप्राणां षट्कर्माणि प्रचक्षते ॥" इति स्मृत्युक्तानि । प्रयुञ्जते अनुतिष्ठन्ति ॥ १६ ॥

पश्येति । एते पुरोवर्त्तिनः गृहैः स्त्रीभिस्सहतिष्ठन्तीति गृहस्थाःगृहमेधिनः

यत्रामी गृहमेधिनः प्रचलितस्वाराज्यसिंहासना
वैतानेषु कृपीटयोनिषु पुरोडाशं वषट्कुर्वते ॥ १७ ॥

रामः— (सहर्षस्मितम् ।) वत्स, इतोऽपि तावत्कृतार्थयाविश्चक्षुषी । प्रसन्नपावनोऽयमृषीणां समवायः । इदममीषाम्

पूरयित्वेव सर्वाङ्गमतिरिक्ताः सिराततीः ।
जटारूपेण बिभ्राणैः शिरोभिर्गहनं सदः ॥ १८ ॥

किं च ।

तपःकृशतरैरङ्गैः स्रुक्स्रुवाकारितैरिव ।
सायं प्रातरमी पुण्यमग्निहोत्रमुपासते ॥ १९ ॥

---

तेषां आश्रमाः आयतनानि " मठादौ ब्रह्मचर्यादिचतुष्के चाश्रमोऽस्त्रियाम् " इति त्रिकाण्डशेषः । औदुम्बरीभिः उदुम्बराख्यवृक्षशाखाभिः यूपाद्यर्थमाहृताभिः उदुम्बरशब्दादवयवार्थे रजतादित्वादञि ङीप् । दन्तुरैः निम्नोन्नतैः पशुबन्धवेदीनां पशुबन्धार्थं परिष्कृतभूमीनां वलयैः मण्डलैः । पशुबन्धो नाम यज्वभिः प्रतिसंवत्सरं कर्तव्यो द्व्यहीनः क्रतुविशेषः । नित्यं व्यञ्जितः प्रकाशितः गृह्यतन्त्रविधिः धर्मशास्त्रोक्तविधानं येषु तथोक्ताः । अत एव रम्या भान्तीतिशेषः । तस्मादेतान् पश्य । यत्र आश्रमे । अमी गृहमेधिनः गृहस्थाः गृहैः स्त्रीभिः सह मेधः संगमोऽस्त्येषामिति विग्रहः । प्रचलितं प्रकंपितं (" कम्पने चलिः " इति मित्त्वाद्ध्रस्वः) स्वाराज्यसिंहासनं इन्द्रस्थानं यैस्ते । इन्द्रादयोहि धार्मिकेभ्यो मनुष्येभ्योऽपि स्वस्थानभ्रंशभयाद्बिभ्यतीतीतिहासेषु प्रसिद्धम् । वैतानेषु यज्ञसंबन्धिषु कृपीटयोनिषु अग्निषु गार्हपत्याद्यपेक्षया बहुत्वं पुरोडाशं अश्वशफाकारं चरुविशेषं " अश्वशफाकारः पुरोडाशः " इति श्रुतिः । " पुरोडाशो हविर्भेदे-चमस्यां पिष्टकस्य च । रसे सोमलतायाश्च हुतशेषे च कीर्तितः ॥ " इति विश्वः वषट्कुर्वते जुह्वति कर्मभिप्रायेण तङ् । " कुत्रचित्पदमध्येऽपि यतिमिच्छन्ति सूरयः " इति वचनाद्यतिभङ्गदोषो न (वृ) शार्दूलविक्रीडितम् ॥ १७ ॥

समवायः समाजः पूरयित्वेति इदममीषां सदः समाजः सर्वांगं पूरयित्वा पूर्णं कृत्वा अतिरिक्ताः आधिक्यं प्राप्ताः सिराततीः नाडीवृन्दानि जटारूपेण संश्लिष्टकेशात्मना " मूले लग्नकचे जटा " इत्यमरः । बिभ्राणैरिव दधानैरिव-स्थितैः शिरोभिः गहनं दुष्प्रवेशम् ॥ १८ ॥

तप इति । तपसा अनशनादिना कृशतरैः अतीवतनूतांगतैः अत एव

(इति परिक्रामतः ।)

**लक्ष्मणः**— (सहासम् ।) आर्य, रमणीयमितो वर्तते ।

**बालेयतण्डुलविलोपकदर्थिताभि-**
**रेताभिरग्निशरणेषु सधर्मिणीभिः ।**
**उत्त्रासहेतुमपि दण्डमुदस्यमान-**
**माघ्रातुमिच्छति मृगे मुनयो हसन्ति ॥ २० ॥**

**रामः**— (परिक्रामन् । सकौतुकानुरागम् ।) वत्स, इतस्तावत् ।

**आर्द्रप्रसूतिरियमङ्कणयज्ञवेदि-**
**नेदिष्ठमेव हरिणी तृणुते तृणं च ।**
**वत्सीयतापसकुमारकरोपनीत-**
**नीवारनिर्वृतमपत्यमवेक्षते च ॥ २१ ॥**

---

लष्टुं सर्जनाय आकारितैरिव कृताकारमात्रसंस्थानैरिवस्थितैः अंगैः उपलक्षिताः इत्थंभावे तृतीया । अमी मुनयः सायंप्रातः सन्ध्ययोः "सायं प्रातरग्निहोत्रं जुहुयात्" इति श्रुतेः । पुण्यं अग्निहोत्रं उपासते अनुतिष्ठन्ति । यथाहि लोके घटादि निर्मित्सुः प्रथममाकारमात्रं कृत्वाऽनन्तरमवयवविशेषान्निर्मिमीते । एवं तपआधिक्येन त्वगस्थिमात्रविशिष्टशरीरवत्वान्मुनीनान्तथोत्प्रेक्षा ॥ १९ ॥

बालेयेति । अग्निशरणेषु अग्निहोत्रगृहेषु बालेयानां बल्यर्थानां "छदिरुपधिबलेर्ढञ्" तण्डुलानां विलोपेन भक्षणेन कदर्थिताभिः क्रुद्धाभिः कुत्सितमर्थिताइतिविग्रहे-"कोःकत्तत्पुरुषेऽचि" इति कदादेशः एताभिः सधर्मिणीभिः स्त्रीभिः उदस्यमानं तद्वारणायोत्क्षिप्यमाणं उत्त्रासहेतुमपि अतीवभयकारणमपि दण्डं लकुडं मृगे हरिणे आघ्रातुमिच्छति भक्ष्यबुद्ध्यागन्धंजिघृक्षतिसति मुनयः हसन्ति तेषां प्रत्ययेनेति भावः । (वृ) श्लोकत्रयं वसन्ततिलकम् ॥ २० ॥

आर्द्रेति । आर्द्रप्रसूतिः नूतनप्रसवा इयं हरिणी मृगवधूः "पुंयोगादाख्यायां" इति ङीष् । अङ्कणे चत्वरे यज्ञवेद्याः यागधिष्ण्यस्य नेदिष्ठं अन्तिकतमं अन्तिकशब्दस्य इष्ठनि "अन्तिकबाढयोः" इति नेदादेशः । तृणं घासं तृणुते भक्षयति "तृणु अदने" इति तानादिकधातोरपित्वेनङित्वाद्गुणोन । चशब्दस्समुच्चयार्थः । वत्सेभ्यो हितेन वत्सीयेन "तस्मैहितम्" इति छः । तापसकुमारैः तपस्विपुत्रैः "तपःसहस्राभ्यामणच" इत्यण् । उपनीतेन आहृतेन नीवारेण तृणधान्येन "तृणधान्यानि नीवाराः" इत्यमरः । "नौवृधान्ये" इति नेर्दीर्घः ।

अपि च।

विष्वक्तपोधनकुमारसमर्प्यमाण-
श्यामाकतण्डुलभृतां च पिपीलिकानाम्।
श्रेणीभिराश्रमपथाः प्रथमानचित्र-
पत्रावलीवलयिनो मुदमुद्वहन्ति ॥ २२ ॥

**लक्ष्मणः**—अहो पशूनामप्यपत्यवात्सल्यम्, शिशूनामपि सत्कर्मताच्छील्यम्।

**रामः**—(अन्यतोऽवलोक्य।)

मुनिविनियोगविलूनप्ररूढमृदुशाद्वलानि बर्हींषि।
गोकर्णतर्णकोऽयं तर्णोत्युपकण्ठकच्छेषु ॥ २३ ॥

(इति परिक्रामतः।)

**लक्ष्मणः**—आर्य इयमेभिरालवालैः पदे पदे ग्रन्थिलासुकुल्यासु।
तीव्ररया जलवेणिः प्रवहति विश्रम्य विश्रम्य २४

निर्वृतं तृप्तं अपत्यं वत्स अवेक्षते च। पुनः पुनः पश्यति च ॥ २१ ॥

**विष्वगिति**। आश्रमपथाः तपोधनकुमारैः समर्प्यमाणानां दीयमानानां श्यामाकतण्डुलानां धान्यविशेषाणां भृतां हारिणीनां "अन्येभ्योऽपिदृश्यते" इति भृञः क्विपितुक्। पिपीलिकानां कीटविशेषाणां श्रेणीभिः पङ्क्तिभिः। विष्वक् समन्ततः प्रथमानानां विस्तारभृतां चित्राणां नानावर्णानां पत्रावलीनां पत्ररेखाणां वलयिनोमण्डलवन्तः सन्तः मुदं प्रीतिं उद्वहन्ति जनयन्ति श्यामाक-पिपीलिकावर्णवैचित्र्येणाऽऽश्रमप्रदेशश्चित्राकारो भातीति भावः ॥ २२ ॥

तदेवशीलं (स्वभावः) येषां ते तच्छीलाः तेषां भावः ताच्छील्यम्। **मुनीति**। अयं गोकर्णस्य सारङ्गाख्यमृगस्य तर्णकः वत्सः "गोकर्णोऽश्वतरे सर्पे सारङ्गे च" इतिमेदिनी। "सद्योजातस्तुतर्णकः" इत्यमरः। मुनिभिः विनियोगार्थं क्रियानुष्ठानार्थं विलूनानि छिन्नानि प्ररूढानि पुनरङ्कुरितानिच अतएव मृदूनि शाद्वलानि शादहरितानि च। शादशब्दाच्चातुरर्थिकोड्वलच्। बर्हींषि कुशान् "बर्हिर्ना कुशशुष्मणोः" इति त्रिकाण्डशेषः उपकण्ठे आश्रमसमीपे कच्छेषु जलप्रायप्रदेशेषु "जलप्रायमनूपंस्यात्पुंसिकच्छस्तथाविधः" इत्यमरः तर्णोति भक्षयति (तृ) **आर्या** ॥ २३ ॥

**इयमिति**। इयं जलवेणी जलप्रवाहः "वेणीकेशस्यबंधने। नद्यादेर-न्तरे" इति मेदिनी। एभिः आलवालैः आवालैः "स्यादालवालमावालं" इत्य-

**रामः**—वत्स, साधु दृष्टम् ।

**आलवालवलयेषु भूरुहां मांसलस्तिमितमन्तरान्तरा ।**
**केरलीचिकुरभङ्गिभङ्गुरं सारणीषु पुनरम्बु दृश्यते ॥ २५ ॥**

तदेहि भगवतीं कौशिकीमालोकयन्तौ मुहूर्तमात्रमात्मानं पुनीवहे । (परिक्रम्यावलोक्यच) क्वचित्सांक्रामिकोऽपि विशेषो नैसर्गिकमतिशेते । तथा हि ।

**जडस्वच्छस्वादुप्रकृति रुपहूतेन्द्रियगणो**
**गुणो यद्यप्यासामयमयुतसिद्धो विजयते ।**
**तथाप्युत्कर्षाय स्फुरति सरितामाश्रमसदा-**
**मिदानीं वानीरद्रुमकुसुमजन्मा परिमलः ॥ २६ ॥**

---

मरः । पदे पदे प्रतिवृक्षमूलं वीप्सायां द्विरुक्तिः ग्रन्थिलासु पर्ववतीषु सिध्मादित्वाल्लच् । कुल्यासु जलप्रणालिकासु । "कुल्यावारिप्रणालिका" इति धरणिः । विश्रम्य विश्रम्य प्रत्यालवालं च मन्दीभूय तीव्ररया आवालबन्धेभ्यः कुल्यासु पुनरतिजवासती प्रवहति निस्सरति "प्राद्वाहः" इति परस्मैपदम् ॥२४॥

**आलवालेति** । अम्बु जलं भूरुहां वृक्षाणां आलवालवलयेषु आवालमण्डलेषु मांसलं पुष्कलंस्तिमितं निश्चलंच । अन्तरान्तरा मध्येमध्ये "अथान्तरेन्तरा । अन्तरेणचमध्येस्युः ।" इत्यमरः । स्वरादित्वादव्ययत्वम् । सारणीषु पुनः । पुनश्शब्दः भेदार्थः । अल्पनदीषु आलवालप्रणालिकास्विति यावत् । "रुग्भेदेनाप्रसारण्यां स्वल्पनद्यांच सारणी" इति मेदिनी । केरलीनां तद्देशस्त्रीणां चिकुरभाङ्गिवत् कुन्तलरचनावत् "कुन्तलामूर्धजास्त्वस्त्राश्चिकुराश्चिकुराःकचाः" इति दुर्गः । भङ्गुरं भञ्जनशीलं कुटिलमिति यावत् भञ्जभासेत्यादिनाघुरच् । दृश्यते । केरलीनां कचाः अराला इति प्रसिद्धिः । तद्वज्जलमालवालग्रन्थितः कुटिलाकारं गच्छति । पश्येति भावः । (वृ) रथोद्धता तल्लक्षणन्तु "रान्नराविह रथोद्धता लगौ" इति ॥ २५ ॥

कौशिकीतिनदीनाम । पुनीवहे पवित्रीकुर्वः । प्वादीनामिति ह्रस्वः । अन्यत्र अन्यधर्मसङ्क्रमणं सङ्क्रामः तत्रभवः साङ्क्रामिकः आगन्तुक इति यावत् विशेषः गुणः । निसर्गः स्वभावः तत्र भवः नैसर्गिकः औत्पत्तिक इति यावत् । अध्यात्मादित्वाठ्ठञ् । अतिशेते अतिरिच्यते । तदेवसमर्थयति जडेति । जडा शीतला "सुषिमोजडः । तुषारश्शीतलश्शीतः" इत्यमरः । स्वच्छा निर्मला स्वादुः मधुराच प्रकृतिः स्वभावः यस्य सः "प्रकृतिर्गुणसाम्येस्यादमात्यादिस्वभा-

**लक्ष्मणः**—आर्य, पुरस्तादनुकौशिकीतीरमालोक्य ।

**तैर्मेधाजननव्रतप्रणयिभिर्व्यूहैर्वटूनामियं**
**सिक्ता नित्यवसन्तविभ्रमवती रम्या पलाशावली ।**
**एतस्यां हरिणारिपाणिजसृणिश्रेणिश्रियः कोरका**
**गोपायन्ति तपोवनं वनकरिक्रीडाकराकर्षणात् ॥ २७ ॥**

(नेपथ्ये ।) रामभद्र, कियच्चिरमवलोकनेन कृतार्थीक्रियन्ते तपोवनविहारभूमयः । संप्रतीहि ।

**परिणमयति ज्योतिर्वृत्त्या यजूंषि रुचां पतिः**
**किमपि यमिनः सावित्राख्यं रहस्यमुपासते ।**

---

वयोः'' इति मेदिनी । अतएव उपहूतः तर्पितः इन्द्रियगणः इन्द्रियवर्गः (यथासंख्यं त्वङ्नेत्ररसनाः) येन सः । अयुतसिद्धः नैसर्गिकः आसांनदीनां अयं गुणः जाड्यादिः यद्यपि विजयते सर्वोत्कर्षेण वर्त्ततएव ''विपराभ्यां जेः'' इति तङ् । तथापि, आश्रमसदां आश्रमसमीपे प्रवहन्तीनां ''सत्सू'' इत्यादिनासदेः क्विप् । सरितांनदीनां वानीरद्रुमाणां तत्सम्बन्धिवेतसवृक्षाणां कुसुमजन्मा पुष्पसंसर्गजः परिमलः गन्धः इदानीमुत्कर्षाय स्फुरति उत्कर्षस्फोरको भवति (काव्यलिङ्गमलङ्कारः) सांक्रामिकगुणोत्कर्षस्य समर्थनात् (वृ) शिखरिणी ॥ २६ ॥

अनुकौशिकीतीरं कौशिकीतीरस्य समीपं ''अनुर्यत्समया'' इत्यव्ययीभावः । तैरिति । इयं पुरोदृश्यमाना पलाशावलिः पलाशवृक्षश्रेणी मेधाजननव्रते प्रणयिभिः प्रवणैः मेधाजननंनाम उपनयनदिनादारभ्य चतुर्थदिनपर्यन्तं पलाशवृक्षसेचनं ब्रह्मचारिव्रतम् । यद्वा । तन्नामकं छन्दोगब्रह्मचारिव्रतम् । वटूनां ब्रह्मचारिणां व्यूहैः समूहैः ''व्यूहः स्याद्बलविन्यासे निर्माणे बृन्दतर्कयोः'' इति मेदिनी । सिक्ताजलैः आर्द्रीकृतासती । अत एव नित्यं सर्वर्तुष्वपि वसन्तविभ्रमवती वसन्तकालविलासयुक्ता रम्या च ''पोरदुपधात्'' इति रमेर्यत् । पलाशानां वसन्तकालएव नूतनपत्रकुसुमोत्पत्तिसंभवात् । एतेन ब्रह्मचारिणां व्रतद्राघिमा सूचितः । भातीति शेषः । एतस्यां पलाशावल्यां हरिणारेः सिंहस्य पाणिजसृणिश्रेणीनां नखाङ्कुशपङ्क्तीनां श्रीरिवश्रीः येषां ते कोरकाः कलिकाः तपोवनं कर्म वनकरिणां वन्यगजानां क्रीडया कराकर्षणात् शुण्डादण्डकृतहठाद्धरणात् गोपायन्ति रक्षन्ति भीत्रेत्यादिना अपादानत्वं । गुपूधूपेत्यादिना आयः । सनाद्यन्ता इति धातुत्वात्तिबादयः (अतिशयोक्तिरलंकारः ।) ॥ २७ ॥

प्रत्युक्तिप्रदानार्थं नेपथ्यग्रहणं उक्तं च ''प्रश्नोल्लेखश्च दूतश्च नेपथ्यो-

गुरुरयमनुष्ठास्यन्माध्यंदिनीं सवनाक्रिया-
मिह मखविधौ नेदीयांसं भवन्तमपेक्षते ॥ २८ ॥

**रामः**—(अश्रुतिमभिनीय सानुरागम्)

वारांस्त्रीनभिषुण्वते विदधते वन्यैः शरीरस्थिती-
रैणेय्यां त्वचि संविशन्ति वसते चापि त्वचं तारवीं ।
तत्पश्यन्ति च धाम नाभिपततो यच्चार्मणे चक्षुषी
धन्या वीतरजस्तमा भगवती चर्येयमाह्लादते ॥ २९ ॥

---

क्तिस्तथैव च । आकाशोक्तिश्च पञ्चैते प्रत्युक्त्यवसरप्रदाः ॥" इति इयं चूलिका उक्तं च "अन्तर्यवनिकासंस्थैश्चूलिकार्थस्य सूचना" इति । एवमुत्त-रत्राप्यूह्यं । **परिणमयतीति** । रुचां पतिः सूर्यः ज्योतिषः वृत्त्या व्यापारेण यजूंषि यजुर्वेदान् परिणमयति परिणतान्करोति यजुर्मयोभवतीत्यर्थः । अनेन माध्याह्निकसमयः सूचितः । यथाक्रमं प्रातरादित्रिसन्धिष्वप्पृगाद्यात्मकत्वश्रवणा-त्तस्य । तथाहि "ऋग्भिः पूर्वाह्णे दिविदेवईयते । यजुर्वेदेतिष्ठति मध्ये अह्नः । साम-वेदेनास्तमये महीयते । वेदैरशून्यस्त्रिभिरेति सूर्यः ।" इति श्रुतेः । यमिनः तापसाः सावित्राख्यं सावित्रसंज्ञया यजुर्वेदे प्रसिद्धं सवितैववा सावित्रं स्वार्थि-कोऽण् सवितृदेवताकत्वेन प्रसिद्धं वा सावित्र्या इदं वा सावित्रं सावित्र्येव वा सावित्रं किमपि अपरिच्छेद्यविभवं रहस्यं गोपनीयं रहःशब्दस्य दिगादित्वाद्यत् वस्त्विति शेषः । उपासते ध्यायन्ति । अयं गुरुः विश्वामित्रः माध्यंदिनीं मध्य-न्दिने भवां उत्सादित्वादञ् । सवनक्रियां त्रैष्टुभाख्यं द्वितीयसवनकर्म अनुष्ठास्यन् करिष्यमाणस्सन् मखविधौ यागकर्मणि भवन्तं नेदीयांसं अन्तिकतरं सन्निहितमिति यावत् । अपेक्षते तत्रैवप्रायेणविघ्नसंभवात्तत्परिजिहीर्षयात्वांप्रतिपालयतीत्यर्थः २८

अश्रुतिमभिनीय नेपथ्योक्तवाक्याश्रवणं नाटयित्वा । **वारानिति** । इदानीं वनस्थधर्मंतुष्टूषगणः तस्य बहिरङ्गसाधनमाह । पादत्रयेप्यतेमुनयइत्य-ध्याहार्यम् त्रीन्वारान् त्रिषवणमपि अत्यन्तसंयोगे द्वितीया । अभिषुण्वते स्नान्ति। वन्यैः वने साधुभिः ( फलमूलादिभिः ) शरीरस्थितीः देहयात्राः विदधते कुर्वन्ति । ऐणेय्यां एण्याः ( कृष्णसारमृग्याः ) विकारभूतायां " एण्याः ढञ् " त्वचि चर्मणि संविशन्ति आसते स्वपन्ति वा " कृष्णाजिने ज्ञानसिद्धिः " । इति वचनात्तद्ग्रहणम् । तरोर्विकारस्तारवी " ओरञ् " " ओर्गुणः " ताम् । त्वचं वल्कलं वसते परिदधते । अन्तरङ्गसाधनमाह । चर्मणोविकारश्चार्मणम् ।

(नेपथ्ये पुनस्तदेव पठ्यते ।)

**रामः**—(श्रुत्वा ससंभ्रममूर्ध्वमवलोक्य च) कथं गगनमध्यमध्यारूढो निदाघदीधितिः । वत्स तदेहि । यज्ञवाटमधिष्ठाय क्रमेण कृताह्निकस्य भगवतः कौशिकस्य प्रत्यनन्तरीभवावः । इति परिक्रामतः ।)

**लक्ष्मणः**—(सर्वतो दृष्ट्वा ।) आर्य,

**उद्दामद्युमणिद्युतिव्यतिकरप्रक्रीडदर्कोपल-**
**ज्वालाजालजटालजाङ्गलतटीनिष्कूजकोयष्टयः ।**
**भौमोष्णप्लवमानसूर्यकिरणक्रूरप्रकारा दृशो-**
**रायुष्कर्म समापयन्ति धिगमूर्मध्याह्नशून्या दिशः ॥ ३० ॥**

---

अण् । "अन्" इति टिलोपो न । ते । मांसमये इत्यर्थः । चक्षुषी । यत् नाभिपततः न विषयीकुरुतः । "नसन्दृशेतिष्ठति रूपमस्य" इत्यादिश्रुतेः । तद्धाम स्वयंज्योतिर्वस्तु । पश्यन्ति ध्यानेन साक्षात्कुर्वन्ति "तेध्यानयोगानुगता अपश्यन्" इति श्रुतेः । यत एवं तस्मात्ते मुनयः धन्याःकृतकृत्याः "धनगणं लब्धा" इति धनशब्दाद्यत् । अत एव वीतरजस्तमाः कामक्रोधाभावात् । ततश्च भगवती माहात्म्यसंपन्ना इयं चर्या ध्यानादियोगमार्गेवर्त्तनं "चर्यात्वीर्यापथस्थितिः" इत्यमरः । आह्लादते सुखयति ॥ ॥ २९ ॥

ऊर्ध्वमवलोक्येति मध्यंदिनत्वनिर्णयायेति भावः । निदाघदीधितिः सूर्यः । अध्यारूढः अधिगतः । कृतं आह्निकं (अह्नानिर्वृत्तं कर्म) येन सः "कालाट्ठञ्" । अल्लोपः अङ्गुष्ठखोरेवेति नियमाट्टिलोपो न । प्रत्यनन्तरीभवावः सन्निहितौ स्वः । उद्दामेति । अत्र धिगमूरिति द्वितीयोऽन्वयः । शेषमेकान्वयं । उद्दामानां अतिप्रौढानां द्युमणिद्युतीनां सूर्यकिरणानां व्यतिकरेण व्यतिषङ्गेण "अथव्यतिकरः पुंसिव्यसनव्यतिषङ्गयोः" इति मेदिनी संपर्केणेति यावत् प्रक्रीडतां दीप्यमानानां "क्रीडविहार" इति विहारस्योपलक्षणार्थत्वादन्यत्रापि वृत्तिः । यद्वा । "उपसर्गेण धात्वर्थो बलादन्यत्रनीयते" इत्युक्तेर्वा । "समोऽकूजने" इति लिङ्गात् । अर्कोपलानां सूर्यकान्तानां ज्वालाजालेन शिखासमूहेन जटालासु निबिडासु जाङ्गलतटीषु वातभूयिष्ठमरुप्रदेशेषु "स्वल्पोदकतृणोयस्तु प्रवातः प्रचुरातपः । सदेशो-जाङ्गलो ज्ञेयः ॥" इत्युक्तेः । तटशब्दाज्जातिलक्षणो ङीष्, निष्कूजाः निःशब्दाः कोयष्टयः टिट्टिभाख्यपक्षिविशेषाः येषु तथोक्ताः । भौमेन भूमीभवेन उष्णेन प्लवमानैः ऊर्ध्वपारिप्लवैः सूर्यकिरणैः क्रूरप्रकाराः तिग्मस्वभावाः । अत एव

अन्तिकतमा चेयं यज्ञभूमिः । तदेतदेव न्यग्रोधच्छायामण्डलमध्यासीना नृत्विजः प्रत्यवेक्षावहे । गलितयौवने पुनरहनि भगवन्तं द्रक्ष्यावः ।

**रामः**—एवमस्तु । (इति परिक्रम्य नाट्येनोपविशतः । )

**लक्ष्मणः**— (पार्श्वतोऽवलोक्य ।) आर्य,

**मध्येव्योम क्रीडयित्वा मयूखान्भानोर्बिम्बे लम्बमाने क्रमेण ।**
**स्वैरंस्वैरं मूलतः पादपानां पश्यच्छायाः कश्चिदाकर्षतीव ॥ ३१ ॥**

**रामः**— (समन्तादवलोक्य ।) वत्स, मध्यंदिनमतिक्रान्तमिति दिनमप्यतिक्रान्तमेव । पश्य ।

**गगनशिखामुदयाद्रेराधिरूढाः कष्टमर्करथहरयः ।**
**अस्तमहीधरमधुना झटिति सुखेनावरोहन्ति ॥ ३२ ॥**

मध्यं अह्नः मध्याह्नः तस्मिन् शून्या रिक्ताः जीवराशिभिः त्यक्तसञ्चारत्वात् "अह्नोऽह्न एतेभ्यः" इत्यह्नादेशः शून्येत्यत्र "शुनःसंप्रसारणं दीर्घश्चवा" इति संप्रसारणदीर्घौ । शुने हितं शून्यं । जनवर्जितत्वे पदार्थहरणाय तस्मै हितं भवतीति व्युत्पन्नंसत् रिक्तत्वसामान्येऽपि प्रयुज्यते । एवंभूतादिशः दृशोः आयुष्कर्म जीवनहेतुभूतंकर्म दर्शनशक्तिमिति यावत् "इसुसोः सामर्थ्ये" इति विसर्गस्य सत्वम्, समापयन्ति पारयन्ति नाशयन्तीत्यर्थः । तस्मादमू दिशोधिक् निन्द्या इत्यर्थः । "धिक्युपर्यादिषु त्रिषु" इति द्वितीया ॥ ३० ॥

न्यक् तिर्यक् रुणद्धि आवृणोतीति न्यग्रोधः वटवृक्षः प्रत्यवेक्षावहे तेषां गमनं प्रतीक्ष्यतिष्ठावः गलितयौवने अपराह्णभूतेसति । मध्येव्योमेति भानोः सूर्यस्य बिम्बे मयूखान् किरणान् मध्येव्योम आकाशमध्ये "पारेमध्येषष्ठ्यावा." इत्यव्ययीभावः । क्रीडयित्वा संचार्य क्रमेण शनैः लम्बमाने अवस्रंसमाने प्रतीचींगतेसतीतियावत् । पादपानां वृक्षाणां छायाःकर्म मूलतः मूलात् । स्वैरंस्वैरं मन्दंमन्दं "मन्दस्वच्छंदयोस्वैरः" इत्यमरः, कश्चिदाकर्षतीव बलादपहरतीव, मध्याह्ने तरुमूलंगतायाश्छायायास्ततः क्रमेणापराह्णे प्राचीदिग्गमनं कर्षणवदुत्प्रेक्ष्यते ॥३१॥

अतीतमेव गतप्रायमेव गगनेति । अर्करथहरयः सूर्यस्य रथाश्वाः उदयाद्रेः उदयपर्वतात् गगनशिखां आकाशाग्रं कष्टं अधिरूढाः सन्तः । अधुना अस्तमहीधरं अस्तगिरिं सुखेन अवरोहन्ति अवतरन्ति आरोहणावरोहणयोः दुष्करत्वसुकरत्वदर्शनात् । (काव्यलिंगमलंकारः) ॥ ३२ ॥

**लक्ष्मणः**— आर्य, नूनमद्य रक्षांसि परापतिष्यन्ति । यदयमध्वरवेदिकासंनिधानं ते शुनःशेपमुखेन भगवानुपाध्यायः प्रशास्ति ।

**रामः**— (सरोषाहंकारम् ।) वत्स, यद्येवं स्यात्

**कल्पान्तकर्कशकृतान्तभयंकरं मे**
**निघ्नतः क्रतुविघातकृताममीषाम् ।**
**नीराक्षसां वसुमतीमपि कर्तुमद्य**
**पुण्याहमङ्गलमिदं धनुरादधातु ॥ ३३ ॥**

**लक्ष्मणः**—(विहस्य ।) रजनीचरचक्रविनाशोत्कण्ठाविसंस्थुलमार्यहृदयमतिदीर्घदर्शिनं भगवन्तं कौशिकमपिनसंभावयति ।

**अविद्याबीजविध्वंसादयमार्षेण चक्षुषा ।**
**कालौ भूतभविष्यन्तौ वर्तमानमवीविशत् ॥ ३४ ॥**

---

परापतिष्यन्ति आगमिष्यन्ति । हुमिति रुषोक्तौ । यद्येवंस्यादिति तर्हीति शेषः । वाक्यं पूरयति कल्पान्तेति । क्रतोः यागस्य विघातकृतां विघ्नकारिणः अमीषां अमून् राक्षसान् "जासिनी" त्यादिना कर्मणिषष्ठी । निघ्नतः निश्चयेनमारयतः मे कल्पान्ते प्रलयकाले कर्कशकृतान्तवत् क्रूरमृत्युवत् भयंकरं "मेघर्तिभयेषुकृञ" इति खचिमुम् । इदंधनुः वसुमतीमपि न केवलं भूमात्रं अपि तु सर्वं च जगत् । अपिशब्दादयमर्थोगम्यते । नीराक्षसां राक्षसरहितां कर्तुं अद्यपुण्यं च तदहश्च पुण्याहं स्वस्तिवाचनाख्यमभ्युदयकालेषु क्रियमाणं कर्म । उत्तमैकाभ्यां चेत्यह्नादेशनिषेधादह्नष्टखोरेवेति टिलोपः । पुण्यसुदिनाभ्यामह्न उपसंख्यानात्क्लीबत्वम् । तद्रूपं मङ्गलं आदधातु अनुतिष्ठतु । यथाऽभ्युदयारंभे पुण्याहमङ्गलं क्रियते एवं सर्वराक्षससंहाररूपाभ्युदयोपक्रमात्तदर्थं पुण्याहस्थानमेतद्राक्षसनिधनंकरोत्विति भावः ॥ ३३ ॥

विहस्येति यद्येवं स्यादिति राक्षसागमनस्य संशयकोटिकत्वेन रामवाक्यमवधार्य कथं कौशिकोक्तेरपि वैकल्पिकत्वमिति विहसनं कृत्वा । रजनीचराणां राक्षसानां विनाशोत्कण्ठया संहारौत्सुक्येन आर्यहृदयं विसंस्थुलं संभ्रान्तं सत् अतिदीर्घदर्शिनं सर्वज्ञमपि । कौशिकं न संभावयति न बहुमन्यते । तस्य दूरदर्शित्वमुपपादयति । अविद्येति । अयमस्मद्गुरुः । आर्षेण चक्षुषा ऋषिर्वेदः तदुक्ततत्त्वमस्यादिवाक्यार्थज्ञानेन, अविद्यैव (अतस्मिंस्तद्बुद्धिरूपाध्यासएव) बीजं सर्वानर्थहेतुः तस्य विध्वंसात् "अहं ब्रह्मास्मि" इत्यपरोक्षज्ञानेन बाधितत्वात्

**रामः**—किमुच्यते तत्रभवान्विश्वामित्रः ।

**प्रज्ञातब्रह्मतत्त्वोऽपि स्वर्गीयैरेष खेलति ।**
**गृहस्थसमयाचारप्रक्रान्तैः सप्ततन्तुभिः ॥ ३९ ॥**

अपि च ।

**आर्द्रीकृतो विनयनम्रमहेन्द्रमौलि-**
**मन्दारदाममकरन्दरसैरिवायम् ।**
**प्रक्रान्तकुण्डलितनूतनभूतसर्ग-**
**स्त्रैशङ्कवं चरितमद्भुतमाततान ॥ ३६ ॥**

---

भूतभविष्यन्तौ कालौ, वर्त्तमानं भवन्तीं । अवीविशत् प्रवेशयामास । ण्यन्तस्य विशेर्लुङ् अविद्याकृतत्वात्कालभेदस्य तदपायेन सवितृप्रकाशवत्सर्वतोऽपि सदाभासमानज्ञान इति भावः । "सकृद्विभातोह्येवैषब्रह्मलोकः" इति श्रुतेः । "ज्ञानेनतु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवद्ज्ञानं प्रकाशयति तत्परम् ॥" इति स्मृतेश्च । अविद्यालक्षणंतु । "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इत्युक्तं पातञ्जले ॥ ३४ ॥

किमुच्यत इति नास्माभिस्तस्य सर्वज्ञत्वमाक्षिप्यतइत्यर्थः । नन्वविद्योपमर्देच कृतकृत्यत्वात्कथं तस्य कर्मणि प्रवृत्तिः "कर्मणा बध्यते जन्तुर्विद्ययाच विमुच्यते । तस्यात्कर्म न कुर्वन्ति यतयस्तत्वदर्शिनः ॥" इति स्मृतेरित्याशंक्य यद्यपि तत्वविदां साहंकारभिसंधिः प्रवृत्तिर्नोपपद्यते, तथापि "लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि" इत्यादिस्मृते र्लोकसंग्रहार्थत्वेन प्रवृत्तौ नक्षापिक्षतिरित्याह । **प्रज्ञातेति** । एषविश्वामित्रः प्रकर्षेण ज्ञातं प्रज्ञातं ( अज्ञानसंशयविपर्ययराहित्येन सम्यग्विनिश्चितमिति भावः ) ब्रह्मणः परमात्मवस्तुनः तत्वं स्वरूपं येन तथाभूतोऽपि । **स्वर्गीयैः** अविवेकिनां स्वर्गायहितैः तस्मै हितमिति छः गृहस्थसमयस्य गार्हस्थ्यावसरस्य आचारार्थं अनुष्ठापनार्थं प्रक्रान्तैः आरब्धैः सप्ततन्तुभिर्मखैः **खेलति** क्रीडति ॥ ३९ ॥

अत एवास्य "यंयंकामं मनसा संविभाति विशुद्धसत्वः कामयतेयांश्च कामान् तं तं लोकं जयते तांश्चकामान्" इति श्रुतेर्यथासंकल्पितसिद्धिप्रदत्वमिति वक्तुमाह । **आर्द्रीकृत इति** । अयं विश्वामित्रः विनयेन नम्रस्य प्रणतस्य महेन्द्रस्य मौलौ किरीटे मन्दारदाम्नः मन्दारमालायाः "पुष्पमूलेषु बहुलं" इति लुप् । मकरन्दरसैः पुष्परसैः आर्द्रीकृतः क्लिन्नइवेत्युत्प्रेक्षा प्रक्रान्त इन्द्रकृतपराभवेणा-

लक्ष्मणः—(पुरोऽवलोक्य । सहर्षम् । )

आभिरध्वरचर्याभिः श्रौतमर्थं कृतार्थयन् ।
अये कुलपतिः सोऽयमित एवाभिवर्तते ॥ ३७ ॥

(ततः प्रविशति दीक्षितवेषो विश्वामित्रः ।

रामः—(निर्वर्ण्य । सबहुमानम् ।) वत्स लक्ष्मण, पश्य ।

कर्मणः श्रूयमाणस्य व्यञ्जनैरधिकोज्ज्वलाम् ।
तपस्तेजोमयीं लक्ष्मीमद्य पुष्णाति मे गुरुः ॥ ३८ ॥

विश्वामित्रः— (परिक्रामन्सहर्षम्) हन्त । कृतकृत्यप्रायमात्मानं पश्यामः । यतः ।

निर्वृत्तो बहु तावदध्वरभुजामातर्पणोऽयं विधि-
दर्यादेन समं सुकेतदुहिता चाद्यैव घानिष्यते ।
पाणौकृत्य पुनर्वृषध्वजधनुर्भङ्गैकशुल्कां वधू -
मैक्ष्वाके सुरकार्यदिक्षु चलति स्वास्थ्यं विधातास्महे ॥ ३९ ॥

---

रब्धः कुण्डलितः पश्चात्तत्प्रार्थनया संकोचितः कुण्डलशब्दात्तत्करीतीति णिचि-निष्ठा नूतनः नवः भूतसर्गः प्राणिसृष्टिः येन तथाभूतस्सन् "युक्तेक्ष्मादावृते भूतं प्राण्यतीते समेत्रिषु" "सर्गः स्वभावनिर्मोकनिश्चयाध्यायसृष्टिषु" इत्युभयत्रामरः त्रैशंकवं त्रिशंकुसंबन्धि अद्भुतं चरितं आततान कृतवान् ॥ ३६ ॥

इदानीं विश्वामित्रप्रवेशं वक्तुं सूचनामाह । आभिरिति । अये आर्य, सोऽयं कुलपतिः विश्वामित्रः आभिः अध्वरचर्याभिः यागानुष्ठानैः श्रौतमर्थं याबज्जीवादिश्रुत्युक्तार्थं कृतार्थयन् अर्थवन्तं कुर्वन् इत एव इहैव अभिवर्तते आगच्छति यदि विद्वांस आप्तकामत्वेन न प्रवर्त्तन्ते तदाऽविद्वांसोऽपि क्लेशादिना निवर्त्तेरन्, ततश्च कर्मविधिश्रुतीनामानर्थक्यंस्यात् । तन्माभूदिति स्वप्रयोजनाभावेऽपि वेदोक्त विधीनामर्थवत्तायै कर्मानुतिष्ठतीति भावः ॥ ३७ ॥

सूचितं प्रवेशमाह तत इत्यादि । कर्मण इति । मे गुरुः श्रूयमाणस्य कर्मणः श्रौतक्रियायाः व्यञ्जनैः दीक्षाप्रवेशादिचिन्हैः अधिकोज्वलां अतीवदीप्यमानां तपस्तेजोमयीं तत्प्रचुरां लक्ष्मीं अद्य पुष्णाति दधाति ॥ ३८ ॥

कृतकृत्यप्रायं बाहुल्येन कृतार्थं । तदेवाह निर्वृत्त इति । अध्वरभुजां देवानां आतर्पणः प्रीतिहेतुः अयं विधिः यज्ञः । बहु प्रायेण । निर्वृत्तस्तावत् निर्वृत्तएव अल्पावशिष्टत्वात्तस्य । सुकेतुदुहिता ताटका च दायादेन पुत्रेण सुबाहु-

( रामलक्ष्मणावुत्थायोपसर्पतः । )

**विश्वामित्रः**— ( राममतिचिरं निर्वर्ण्य सस्नेहकौतुकम् । )

**एषवैहारिकं वेषमादधानो धनुर्धरः ।**
**तत्वमान्तरमस्माकममृतैरिव लिम्पति ॥ ४० ॥**

**उभौ**— ( उपसृत्य । ) **भगवन्, दाशरथी रामलक्ष्मणावभिवादयेते ।**

**विश्वामित्रः**—( आलिङ्ग्य । ) वत्सौ किमन्यदाशास्महे ।

**युवाभ्यामभिनिर्वृत्तयोगक्षेमस्य वज्रिणः ।**
**ऐश्वर्यप्रक्रियामात्रकृतार्थाः सन्तु हेतयः ॥ ४१ ॥**

( उभौ तूष्णीमधोमुखौस्तः । )

**विश्वामित्रः**—( विहस्य । ) वत्सौ, कच्चित्समन्तादुपशीलितोऽयं संनिवेशः कच्चिदस्मदीयास्तपोवनभूमयो रमयन्ति वां उपस्नेहयति वां गार्हस्थ्यमृषीणाम् ।

**उभौ**—( सप्रश्रयम् । ) भगवन्,

---

ना समं । अद्यैव घानिष्यते हनिष्यते । रामेणेतिशेषः । हन्तेः कर्मणि ऌट् "स्य सिच्" इत्यादिनाचिण्वद्भावादिकम् ऐक्ष्वाके पुनः रामेतु । वृषध्वजधनुषः पिनाकस्य ध्वंसः आरोपएव एकः शुल्कः पणः यस्याः तां वधूं सीतां । पाणौकृत्य उदुह्य "नित्यंहस्ते पाणावुपयमने" इति गतिसंज्ञा । सुराणां कार्यं यासु तासु दिक्षुदक्षिणाशां चलति गमिष्यन्तमनु "धातुसंबन्धेप्रत्ययाः" इति भविष्यदर्थे वर्त्तमानार्थकशता । स्वास्थ्यं कर्तव्याभावेन निर्व्यापारत्वं विधातास्महे कर्तास्महे ॥ ३९ ॥

**एष इति** । एषः रघूद्वहः रामः वैहारिकं क्रीडायोग्यं "तदर्हति" इति ठञ् वेषं नेपथ्यं दधानः धारयमाणस्सन् अस्माकं आन्तरं तत्वं मनः अमृतैः पीयूषैः लिंपतीव उपदेग्धीव तथा प्रीणयतीति भावः ॥ ४० ॥

आशास्महे आशिषं कुर्मः **युवाभ्यामिति** । युवाभ्यां अभिनिर्वृत्तौ संपादितौ योगः (अनुपात्तोपार्जनं) क्षेमः (उपात्तरक्षणं) तौ । यस्य तस्य वज्रिणः इन्द्रस्य । अनेन इतः पूर्वमस्य सार्वकालिकः शत्रुबाधः सूचितः हेतयः शस्त्राणि "रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतयः" इत्यमरः ऐश्वर्यस्य विभूतेः प्रक्रियामात्रे अधिकार एव "प्रक्रियात्वधिकारः स्यात्" इत्यमरः । कृतार्थाः प्रयोजनवन्तः सन्तु भूयासुः ॥ ४१ ॥

रम्यमेतदरम्यं वा कः परिच्छेत्तुमर्हति ।
किं तु द्वयातिगं चित्तमद्य नौ पश्यतोरभूत् ॥ ४२ ॥

( इति सर्वे यथोचितमुपविशन्ति । )

**विश्वामित्रः**—( साकूतस्मितम् । ) वत्सौ,

इह वनेषु स कैतववामनो मुनिरतप्त तपांसि पुरातनः ।
तमिव वामवलोक्य तपस्विनो नयनमद्य मनागुदमीमिलन् ॥ ४३ ॥

( उभौ मुहूर्तमुन्मनीभवतः । )

**विश्वामित्रः**—( स्वगतम् । ) अये, किमप्युत्साहवर्धनाय प्राग्भवीयमनुस्मारितमन्तःकरणमनयोः तदेतावदस्तु अन्यतःप्रक्षिपामि ( प्रत्यगवलोक्य प्रकाशं ससंभ्रमम् ) कथमुदयगिरिकाश्मीरकेदारस्य प्रभातसंध्यालतायाः प्रथमस्तबको गभस्तिमाली हस्तानुहस्तिकया कुतूहलिनीभिर्दिगङ्गनाभिर्वारुणीं यावदुपनीतः । ( सनिर्वेदं च सर्वतोऽवलोक्य )

अयमपि खरयोषित्कण्ठकाषायमीष-
च्छिसृमरतिमिरोर्णाजर्जरोपान्तमर्चिः ।
मदकलकलविङ्कीकाकुनान्दीकरेभ्यः
क्षितिरुहशिखरेभ्यो भानुमानुच्चिनोति ॥ ४४ ॥

---

तूष्णीं मौनेन । सन्निवेशः प्रदेशः । कच्चिदुपस्नेहयति प्रीणयति वा । **रम्यमिति** । एतत् युष्यत्तपोवनादि रम्यं उत अरम्यं तद्विपरीतं वा इति परिच्छेत्तुं विवेक्तुं कोऽर्हति न कोपीत्यर्थः तथाप्यस्मदनुभवं ब्रूवः पश्यतोः नौ चित्तं अद्य द्वयातिगं अद्वितीयमभूत् तदेकतानमासीदित्यर्थः ॥ ४२ ॥

साकूतस्मितं साभिप्रायस्मितं इहेति । पुरातनः पुराणः मुनिः कैतववामनः माययावामनरूपो विष्णुः इहवनेषु तपांसि अतप्त, कृतवान् "ह्रस्वादंगात्" इति तप्यतेः सिज्लोपः वां तमिवावलोक्य वामनमिव निश्चित्य तपस्विनः नयनं मनाक् ईषत् उदमीमिलन् उन्मीलितवन्तः विकसितदृशोऽत्र भूवुरित्यर्थः ॥ ४३ ॥

उन्मनीभवतः उत्कौस्तः । उन्मनःशब्दात् "अरुर्मनश्चक्षुरि" त्यादिना च्विःसलोपश्च । किमपि किंचित् । प्राग्भवे ( पूर्वावतारे ) भवं प्राग्भवीयं वृद्धाच्छः । "भवः क्षेमेशसंसारे सत्तायां प्राप्तिजन्मनोः" इति मेदिनी । अन्यतः प्रक्षिपामि प्रस्तावान्तरमानयामि उदयगिरिरेव काश्मीरकेदारः कुंकुमक्षेत्रं "काश्मीरं कुंकुमेऽपिस्यात् टंकपुष्करमूलयोः" इति मेदिनी । "पुन्नपुंसकयोर्वप्रः केदारः क्षेत्रं "

अपि च ।

मन्त्रसंस्कारसंपन्नास्तन्वदौदन्वतीरपः ।
एतत्त्रयीमयं ज्योतिरादित्याख्यं निमज्जति ॥ ४५ ॥

**रामः**—(सर्वतो निरूप्य ।) वत्स लक्ष्मण,

तापनैरिव तेजोभिः प्लुष्टनिर्वाणमेचकाः ।
दिशो जाताः प्रतीची तु समुदाचरति क्रमात् ॥ ४६ ॥

---

इत्यमरः तस्य प्रभातसंध्यैव लता ज्योतिष्मत्याख्यावल्ली "पारावताङ्घ्रिःकटभी पण्या ज्योतिष्मतीलता" इत्यमरः साहिरक्तवर्णाभवतीति प्रसिद्धिः तस्याः प्रथमस्तबकः आद्यगुच्छः अतीवरक्तवर्णत्वादुदयकाले तस्य, गभस्तिमाली सूर्यः । हस्तमनु हस्तः यस्यां क्रियायां सा हस्तानुहस्तिका तया कुतूहलिनीभिः कौतुकवतीभिः दिशएव अङ्गनाः स्त्रियः ताभिः वारुणीं प्रतीचीं दिशं "सुराप्रत्यक्चवारुणी" इत्यमरः यावत्संभ्रमेण उपनीतः समीपं प्रापितः । अयमिति । अयं भानुमानपि सूर्योऽपि खरयोषित्कण्ठवत् गर्दभीगलवत् काषायं रक्तं ईषत् विसृमरया प्रसर्पन्त्या तिमिरोर्णया तमोरूपमेषादिलोम्ना जर्जरं जीर्णं उपान्तं समीपं यस्य तत् । अर्चिः ज्योतिः कर्म । मदेन हर्षेण कला अव्यक्तमधुरा कलविङ्क्याः चटकायाः काकुः स्वरविशेषः सैवनान्दी तां कुर्वन्तीति तत्कराः तेभ्यः "दिवाविभा" इत्यादिना कृप्रत्ययः क्षितिरुहशिखरेभ्यः वृक्षाग्रेभ्यः उच्चिनोति संगृह्णाति ॥ ४४ ॥

मन्त्रेति । त्रयीमयं ऋगादिवेदत्रयरूपं "एषो एव त्रयी विद्या" इति श्रुतेः आदित्याख्यं एतत् अस्तंयत् ज्योतिः कर्तृ उदन्वतः (समुद्रस्य) इमाः औदन्वतीः, "उदन्वानुदधौच" इति निपातनादुदकशब्दस्योदन्नादेशः अपः मन्त्रसंस्कारसंपन्नाः वेदकृतशुद्धिमतीः तन्वत् कुर्वत्सत् । आदित्यस्य त्रयीमयत्वात्तत्संसर्गेणापामपि तत्संस्कृतत्वं । निमज्जति लीयते । यथाहि लोके काश्चिदघमर्षणादिमन्त्रैर्जलं संस्कृत्य पश्चात्तत्र स्नात्येवमिदमपीति भावः ॥ ४५ ॥

तापनैरिति । दिशः प्रतीचीवर्जं सर्वादिशः तापनैः सूर्यसंबन्धिभिः तेजोभिः प्लुष्टाः पूर्वंदग्धाः "प्रुष्टप्लुष्टोषितादग्धे" इत्यमरः निर्वाणाः पश्चादुपशान्तवन्तः "निर्वाणोऽवात" इति निपातनात्साधु । अत एव मेचकाइव नीलवर्णाइव जाताः प्रदोषे प्रतीचीतरदिशां तमोव्याप्तत्वम् यथाऽग्निदग्धंदावादितदुपशमेनैल्यं भजति तद्वत्प्रतीत्यर्थः । प्रतीचीतु क्रमात् शनैः शनैः समुदाचरातितद्भूपंभजति । यद्वा । क्रमात् अयेण समुदाचरति विरुध्यते संध्यारागवत्त्वेन इतरवैलक्षण्यात् ॥४६॥

किं च ।

काश्चिद्बिभ्रति भूतिमाश्रमभुवो वैतानवैश्वानर-
ज्वालोपप्लवमानधूमवलभीविभ्रान्तदिग्भित्तयः ।
श्रूयन्ते वटवस्तृतीयसवनस्वाध्यायदीर्घानपि
स्पर्धाबन्धमनोहरं प्रतिमुहुः स्वान्द्राघयन्तः स्वरान् ॥ ४७ ॥

**विश्वामित्रः**—वत्स राघव,

उन्मुक्ताभिर्दिवसमधुना सर्वतस्ताभिरेव
स्वच्छायाभिर्निचुलितमिव प्रेक्ष्यते विश्वमेतत् ।
पर्यन्तेषु ज्वलति जलधौ रत्नसानौ च मध्ये
चित्राङ्गीयं रमयति तमःस्तोमनीला धरित्री ॥ ४८ ॥

---

काश्चिदिति । आश्रमभुवः वैतानवैश्वानरस्य यज्ञसंबन्धिवह्नेः, ज्वालायाः उपप्लवमानः उद्गच्छन् धूमएव वलभीव वलभी आच्छादकत्वात्; तया विभ्रान्ताः व्याप्ताः, दिग्भित्तयः दिक्प्रदेशाः, यासु तथाभूताः सत्यः कांचित् लोकोत्तमां भूतिं श्रियं, बिभ्रति दधति; तृतीयसवनस्य जागताख्यस्य सायाह्नेकर्तव्यसवनस्य स्वाध्याये दीर्घानपि आयतानपि तस्य दीर्घताविधेः; स्पर्धाबन्धेन परजिगीषाऽऽग्रहेण, मनोहरं यथा तथा, स्वान् स्वरान् ध्वनीन्, "स्वरोनासासमीरणे । उदात्तादावकारादौ षड्जादौच ध्वनौ पुमान् ॥" इति मेदिनी द्राघयन्तः दीर्घतरान् कुर्वन्तः, "प्रियस्थिर" इत्यादिना ईयसुनि दीर्घशब्दस्य द्राघादेशे ततः तत्करोतीति णिचि टिलोपः वटवः श्रूयन्ते अस्माभिरितिशेषः; अत्र वटुश्रवणस्य तद्ध्वनौ लक्षणा मंचाः क्रोशन्तीतिवत् ॥ ४७ ॥

उन्मुक्ताभिरिति । एतद्विश्वं चराचरात्मकं सर्वं, अधुना सायंकाले दिवसमुन्मुक्ताभिः दिनसंबन्धं त्यक्तवतीभिः अत्यन्तसंयोगे द्वितीया; ताभिरेव स्वच्छायाभिः अद्रिनिलीनाभिरेव स्वकीयानातपैः निचुलितमिव कंचुकितमिव प्रेक्ष्यते व्याप्तमिति भावः । तमस्तोमेन गाढान्धकारेण, नीलाऽसितवर्णा; यद्वा, तमस्तोमनीला; सूर्यकृतप्रकाशाभावेन स्वरूपापन्ना पृथिव्याः कृष्णवर्णत्वं श्रुतिप्रसिद्धमेव "यत्कृष्णं तदन्नस्य" इति एवंभूता धरित्री भूः पर्यन्तेषु परिसरेषु, जलधौ समुद्रे च; ज्वलति और्वाग्निना लवणेक्ष्वादिभेदेनवादीप्यमाने सति मध्ये भूमध्यभागे रत्नसानौ मेरौ ज्वलतिचसति । अतएव चित्रांगी नानावर्णासती रमयति क्रीडयतिआह्लादयतीत्यर्थः भूमध्यवर्तनंच मेरोः पुराणप्रसिद्धमेव ॥ ४८ ॥

**लक्ष्मणः**—(सनिर्वेदम् ।)

तेजोमयं तमोमयमन्यतरस्यां तदेव दिक्चक्रम् ।
किमपि विचित्रा धातुः सृष्टिरियं भुवनकोशस्य ॥ ४९ ॥

(सर्वतोऽवलोक्य ।)

चूडारत्नैः स्फुरद्भिर्विषधरविवराण्युज्ज्वलान्युज्ज्वलानि
प्रेक्ष्यन्ते चक्रवाकीमनसि निविशते सूर्यकान्तात्कृशानुः ।
किं चामी शल्कयन्तस्तिमिरमुभयतो निर्भराहस्तमिस्रा-
संघट्टोत्पिष्टसंध्यानलकणनिकरस्पर्धिनो भान्ति दीपाः ॥ ५० ॥

**रामः**—(विलोक्य)

विश्वं चाक्षुषमस्तमस्ति हि तमःकैवल्यमौपाधिक-
प्राच्यादिव्यवहारबीजविरहाद्दिङ्मात्रमेव स्थितम् ।

---

तेज इति । यत्, दिशां चक्रं, समूहः तेजोमयं प्रचुरतेजस्कं "तत्प्रकृतवचने मयट्" तदेव दिक्चक्रं अन्यतरस्यां वेलायामिति शेषः कालान्तरे, तमोमयं प्रचुरतमस्कं यद्वा अन्यतरस्यां विकल्पेन "विभाषान्यतरस्यां वा विकल्पार्थाः प्रकीर्तिताः" इति त्रिकाण्डशेषः । तेजोमयमेव तमोमयं भातीत्यर्थः । भुवनकोशस्य ब्रह्माण्डस्य, कर्मणि षष्ठी धातुः उभयप्राप्तौ कर्मणीत्यस्य शेषे विभाषेति प्रतिप्रसवेन कर्तरि षष्ठी । उक्तं च, "कर्तुर्विभाषया केचित्कर्मणोऽपि तथेष्यते" इति । सृष्टिः किमपि विचित्रा अतीवाश्चर्यरूपा ॥ ४९ ॥

चूडेति । विषधरविवराणि सर्पाधिष्ठितवल्मीकरन्ध्राणि, स्फुरद्भिः तेजोऽन्तराभिभावकस्य सूर्यस्यास्तमितत्वात्प्रकाशमानैः, चूडारत्नैः फणामणिभिः हेतौ तृतीया । उज्ज्वलान्युज्ज्वलानि अतीव भासमानानि आभीक्ष्ण्ये द्विरुक्तिः प्रेक्ष्यन्ते अस्माभिरिति शेषः । कृशानुः अग्निः सूर्यकान्तात् तन्नामकशिलांपरित्यज्य ल्यब्लोपे पंचमी । चक्रवाकीमनसि कोकीहृदये निविशते "नेर्विशः" इति तङ् भर्तृवियोगेन तासां रात्रौ संतापोदयादिति भावः । विशेषान्तरमाह किंचेति । अमी दीपाः उभयतः पक्षद्वयेऽपि तिमिरं अंधकारं शल्कयन्तः शकलीकुर्वन्तः सन्तः नाशयन्त इत्यर्थः "शल्के शकलवल्कले" इत्यमरः निर्भरेण निबिडेन अहस्तमिस्रयोः अहोरात्रस्य "तमिस्रातामसीरात्रिः" इत्यमरः "ज्योत्स्नातमिस्रा" इत्यादिना निपातनात्साधुः । संघट्टेन संघर्षेण उत्पिष्टस्य चूर्णीकृतस्य संध्यानलस्य संध्यारूपाग्नेः कणनिकरस्पर्धिनः स्फुलिङ्गसदृशाः भान्ति ॥ ५० ॥

विश्वमिति—चाक्षुषं चक्षुर्ग्राह्यं शैषिकोऽण् विश्वं अस्तं अदर्शनंगतं

गृह्यन्ते भयहेतवः पटुभिरप्यक्षान्तरैर्भान्ति च
ध्वान्ते नापघनेन वस्तु वचसा ज्ञातस्वरेणामुकः ॥ ५१ ॥

लक्ष्मणः— जातोयदेष चरमाचलचूडचुम्बी
पङ्केरुहप्रकरजागरणप्रदीपः ।
आः सर्वतः स्फुरतु कैरवमाः पिबन्तु
ज्योत्स्नाकरम्भमुदरंभरयश्चकोराः ॥ ५२ ॥

रामः—घनतरतिमिरघुणोत्करजग्धानामिव पतन्ति काष्ठानाम् ।
छिद्रैरमीभिरुडुभिः किरणव्याजेन चूर्णानि ॥ ५३ ॥

---

यस्य यद्विषयंगतं तंप्रतितस्यास्तत्वव्यवहारः प्रसिद्धएव । "दर्शनादर्शने भानोरुदयास्तमयौ स्मृतौ" इति स्मृतेः। तत्र हेतुमाह हियस्मात् तमःकैव त्यं अन्धकारमात्रं अस्ति प्रत्यक्षेणानुभूयते। ततः किमित्यतआह औपाधिकस्य नैमित्तिकस्य प्राच्यादिव्यवहारस्य प्राचीप्रतीचीत्यादिसंकेतस्य बीजेन कारणेन आदित्येनेतियावत् तेनाहिदिग्व्यवहारः प्रसिध्यति रहितं वाजतसत्, दिङ्मात्रमेव स्थितं आसीत पटुभिः समर्थैः अन्धकारेण श्रवणादिशक्त्यनिरोधात् अक्षान्तरैरपि अन्यैः श्रोत्रादीन्द्रियैरपि, "अक्षमिन्द्रिये" इत्यमरः भयहेतवः गृह्यन्ते पदार्था इति शेषः ; चक्षुःपूर्वकत्वादितरेन्द्रियाध्यवसायस्य तच्छक्तिवैकल्येन रज्ज्वादिस्पर्शेऽपि सर्पेवभ्रान्त्याविर्भावसंभवादितिभावः किंच ध्वान्ते अन्धकारे वस्तु पदार्थः, अपघनेन अङ्गेन "अपघनोऽङ्गम्" इतिनिपातनात्साधुः । नभाति चक्षुर्ग्राह्यं न भवतीत्यर्थः तर्हि कथं व्यवहार इत्यतआह ज्ञातस्वरेण पूर्वमनुभूतशब्देन वार्तया अमुकः अयं देवदत्त इत्यादिः भाति "वाचैवायंज्योतिषाऽऽस्ते" इति श्रुतेः अमुकइत्यकारान्तशब्दान्तर[illegible]तिकम् ॥ ५१ ॥

[illegible] सूर्यास्तमयजनितवैराग्येणसह । जातइतियत् पङ्केरुहाणां पद्मानां प्रकरस्य समूहस्य, जागरणेविषये, प्रदीपः एषसूर्यः, चरमाचलचूडस्य अस्तगिरिशिखरस्य, चुम्बी चुम्बनशीलः, जातः संवृत्तः, तत् कैरवं कुमुदं सर्वतः स्फुरतु प्रकाशतां; आः [illegible] पीडायां, चकोराः जीवञ्जीवः, ज्योत्स्नाकरंभं चन्द्रिकारूपकरम्भम्, उदरंभरयः उदरंपूरयन्तः सन्तः, "[illegible]" इति [illegible] पिबन्तु पानं कुर्वन्तु ॥ ५२ ॥

घनेति । घनतरतिमिरेण निबिडान्धकारेणेव, घुणोत्करेण काष्ठकीटविशेषेण, "घुणः स्यात्काष्ठभेदकः" इति [illegible] जग्धानामिव भक्षितानामिवेत्यु-

( नेपथ्ये कलकलः । ) ( सर्वे ससंभ्रममाकर्णयन्ति । ( पुनस्तत्रैव । )

निर्मज्जच्चक्षुरन्तर्भ्रमदतिकपिशक्रूरतारा नरास्थि-
ग्रन्थिं दन्तान्तरालग्रथितमविरतं जिह्वया घट्टयन्ती ।
ध्वान्तेऽपि व्यात्तवक्त्रज्वलदनलशिखाजर्जरे व्यक्तकर्मा
निर्मान्ती गृध्ररौद्रीं दिवमुपरि परिक्रीडते ताटकेयम् ॥ ५४ ॥

अपि च ।

त्रेताग्निकुण्डपूरं च वर्षन्तो रुधिरच्छटाः ।
हिंस्राः सुबाहुमारीचमुख्या नः परिवृण्वते ॥ ५५ ॥

---

त्प्रेक्षा "अदो जग्धिर्ल्यप्ति किति" इत्यदोजग्ध्यादेशः काष्ठानां दिशां दारूणां च अमीभिः उडुभिः नक्षत्रैः तारकाप्युडुवास्त्रियां इत्यमरः । छिद्रैः रन्ध्रैः, व्यस्तरूपकमिदम् किरणव्याजेन चूर्णानि पटवासादीनि "चूर्णानि वासयोगाः स्युः" इत्यमरः पतन्ति अन्धकारावृते दिग्भागे नक्षत्रदीप्तिः घुणभक्षितकाष्ठरन्ध्रगलच्चूर्णवद्भातीति भावः ॥ ५३ ॥

कलकलः कोलाहलः ताटकाऽऽगमनमाह द्वाभ्यां निर्मज्जदिति निर्मज्जतोः निमज्जनं गच्छतोः कुहरवत्स्थितयोरिति यावत् चक्षुषोः अक्ष्णोः अन्तर्मध्ये भ्रमन्त्यौ कलयाव अतिकपिशे अत्यन्तकपिले क्रूरेच तारेकनीनिके यस्याः तथाविधा । दन्तान्तराले दशनमध्ये ग्रथितं प्रोतं नरास्थ्नः मनुष्यकंकालस्य ग्रन्थिं अविरतं, शश्वत् जिह्वया रसनया घट्टयन्ती आलोडयन्ती सती कुतएतद्दृश्यते तत्राह व्यात्ते विवृत्ते वक्त्रे मुखे ज्वलन्त्या अनलशिखया, अग्निज्वालया, जर्जरे जीर्णेध्वान्तेऽपि; व्यक्तं प्रकाशं, कर्मचेष्टा यस्याः तथाभूता, दिवं आकाशं गृध्रैः कंकैः रौद्रीं भीषणां निर्मान्ती कुर्वाणा आच्छीनद्योरिति नुम् ताटकागमने मिषिताशया गृध्रा अप्याकाशे वलन्तइति भावः एवंभूता इयं ताटका उपरि ऊर्ध्वं परिक्रीडते समन्ताद्विहरति क्रीडोनुसंपरिभ्यश्चेति तङ् ॥ ५४ ॥

त्रेतेति । हिंस्राः घातुकाः "शरारुर्घातुको हिंस्रः" इत्यमरः । "नमिकंपि" इत्यादिना ताच्छील्ये रः । सुबाहुमारीचौ मुख्यौ प्रधानभूतौ येषां ते शाखादित्वाद्दिवार्थे यः । मुखमिव मुख्यः इत्यर्थः राक्षसा इति शेषः त्रेताग्नेः गार्हपत्याद्यग्नित्रयस्य कुण्डपूरं कुण्डं यथा यावता पूर्यते तावत् । "कर्मण्युपमाने" इति पूरणमुल् । "पिठरः स्थाल्युखा कुण्डम्" इत्यमरः । रुधिरच्छटाः रक्तधाराः वर्षन्तः सन्तः नः परिवृण्वते समन्ताद्वेष्टन्ते ॥ ५५ ॥

**विश्वामित्रः** (साकूतम् ।) कथं ताटका । वत्स रामभद्र,

वितानमानुश्रविकं गृहेषु नः प्रतिष्किरन्ती किमियं प्रतीक्ष्यते ।
सुबाहुमुख्यैः सममाततायिभिर्गृहाणचापं निगृहाण ताटकाम् ॥ ५६ ॥

**रामः**— (सघृणातिरेकम् ।) भगवन्, स्त्रियमिमाम् । (पुनर्नेपथ्ये ।) अब्रह्मण्यमब्रह्मण्यम् । भोस्तात विश्वामित्र, परिभूयामहे । प्रहीयतामाधिज्यधन्वा दाशरथिः

**रामः**— (विहस्य । नेपथ्यालोकितकेन ।) बालर्षेशुनःशेप, मुहूर्तं धीरोभव

अलं क्लिशित्वा गुरुमल्पकोऽयं विधिस्त्वदाज्ञैव गरीयसी नः ।
न कौशिकस्य त्वयि धर्मपुत्रेपुत्रेमधुच्छन्दसि वा विशेषः ॥ ५७ ॥

**विश्वामित्रः**— वत्स, कृतमुत्तरोत्तरेण । नन्वयं नेदीयानाश्रमोपघातः ।

**लक्ष्मणः**— (सव्यथमिव । स्वगतम् ।)

मीमांसते किमार्योऽयं कौशिकेऽप्यनुशासति ।
वाचमेषामृषीणां हि शास्त्रमेवानुवर्तते ॥५८ ॥

---

वितानमिति । नःगृहेषु, आनुश्राविकंवेदोक्तं वितानं यज्ञं, प्रतिष्किरन्ती नाशयन्ती "हिंसायां प्रतेश्च" इति प्रत्युपसृष्टस्य किरतेः सुट् ताटका कथं प्रतीक्ष्यते दाक्षिण्यभाजनं क्रियते; तस्माच्चापं गृहाण सज्जीकुरु आततायिभिः वधोद्यतैः "आततायीवधोद्यतः" इत्यमरः "अग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेतेह्याततायिनः ॥" इत्युक्तलक्षणैर्वा । सुबाहुमुख्यैः सार्कं ताटकां निगृहाण नाशय ॥ ५६ ॥

सघृणातिरेकं मिति दयाधिक्येनसह वीरगर्हितत्वजुगुप्साधिक्येन वा, "जुगुप्साकरुणेघृणे" इत्यमरः स्त्रियमिमामिति कथं निगृह्णीयामितिशेषः; "अब्रह्मण्यमवध्योक्तौ" इत्यमरः परिभूयामहे हिंस्यामहे; अधिज्यं सज्जीकृतं धनुः येन सः अधिज्यधन्वा; "धनुषश्चेत्यनङ् । अलमिति ॥ अलं क्लिशित्वा गुरुं गुरोः क्लेशं माकुर्वित्यर्थः" अलंखल्वोः प्रतिषेधयोः प्राचांक्त्वा" इति क्त्वा "क्लिशः क्त्वानिष्ठयोः" इतीट् । मृडमृदेत्यादिनाकित्वाद्गुणाभावः; अयं ताटकादि संहाररूपः, विधिः आज्ञा अल्पकः अत्यल्पः अतीवसुकरत्वादितिभावः । अल्पार्थे कन् । त्वदाज्ञा नः गरीयस्येव गुरुतरैव गुरुशब्दस्य ईयसुनिगरादेशः तत्र हेतुमाह कौशिकस्य अस्मद्गुरोः धर्मपुत्रे शिष्येत्वयि मधुच्छन्दमितनाम्नि पुत्रे औरसपुत्रे वा विशेषः तारतम्यं नास्ति तस्माद्गुरुपुत्रनिर्विशेषत्वात्त्वदाज्ञा गरीयसीति भावः ॥ ५७ ॥

उत्तरस्य उत्तरं प्रत्युत्तरं तेन उत्तरोत्तरेण यद्वा उत्तरोत्तरेण उपर्युपरि-

**रामः**—( स्वगतम् । )

गुर्वादेशादेव निर्मीयमाणो नाधर्माय स्त्रीवधोऽपि स्थितोऽयम् ।
अग्रस्थित्वा श्वो गमिष्याद्भिरल्पैर्लज्जास्माभिर्मीलितासैर्जितैव ॥ ५९ ॥

किं तु ।

दीर्घं प्रजाभिरतिकौतुकिनीभिराभि-
रस्मिन्नकीर्तिपटहे मम ताड्यमाने ।
ज्योतिर्मयेन वपुषा जगदन्तसाक्षी
लज्जिष्यते कुलगुरुर्भगवान्वासिष्ठः ॥ ६० ॥

---

कथनेनकृतं अलं; आश्रमोपघातः ताटकारूपस्तपोवनविघ्नः नेदीयान् सन्निहित-तरः । मीमांसत इति । कौशिके गुरौ अनुशासति ताटकावधमादिशत्यपि अयमार्यः रामः किं मीमांसते कुतो विचारयति मान्वधेत्यादिसूत्रे मानेर्जिज्ञासाया-मिति सन्नभ्यासदीर्घश्च हि यस्मात् शास्त्रम् "प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृत-केन वा । शब्देन येनादिश्येत तच्छास्त्रमभिधीयते ॥" इत्युक्तलक्षणं श्रुत्यादि । एषामृषीणां मन्त्रद्रष्टृणां वाचमेव वाग्रूपांस्मृतिमेवानुवर्तते अनुरुध्यते एवकारो-भिन्नक्रमः । तपसा साक्षात्कृतवेदानामेषां वाक् शास्त्रविरोधिनी न भवतीति भावः; "युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः । लेभिरेतपसा पूर्वमनुज्ञाताः स्वयं भुवा ॥" इति स्मृतेः विश्वामित्रादीनाम्मन्त्रद्रष्टृत्वं च प्रसिद्धमेवैतरेयब्राह्मणे । तस्मान्नमीमांस्यमिति भावः ॥ ५८ ॥

गुर्विति । स्थितोऽयं उपस्थितस्ताटकावधः स्त्रीवधोऽपि गर्ह्योऽधर्मः स्वभाव-तोऽधर्मभूतोऽपि गुर्वादेशादेव निर्मीयमाणः गुर्वाज्ञयैव क्रियमाणस्सन् अधर्माय न भवति अधर्मो न भवति तादर्थ्ये चतुर्थी । यद्यप्यधर्मोनस्यात्तथापि लोकापवादो दुर्वारइत्यत आह अग्रस्थित्वा श्वोगमिष्यद्भिरिति लोकोक्तिरियं अल्पायुर्भिरित्यर्थः मीलितासैरितीयमपिलोकोक्तिः "सहस्वकतिचिन्मासान्मीलयित्वा विलोचने" इति-वत् । अपवादक्षममाणैरित्यर्थः अस्माभिः लज्जास्त्रीवधनिमित्ता ह्रीः जितैव अभि-भूतैव तस्मान्नलोकापवादविचिकित्सेति भावः ॥ ५९ ॥

तर्हि किं विलंब्यते तत्राह दीर्घमिति । अस्मिन् ताटकावधरूपे अका-कीर्तिपटहे अयशोढक्कायां अतिकौतुकिनीभिः परदोषप्रख्यापनेऽतीवोत्साहवतीभिः आभिः प्रजाभिः जनैः, दीर्घं चिरं, ताड्यमाने उद्घुष्यमाणेसति ज्योतिर्मयेन प्रकाशरूपेण नक्षत्ररूपेणवा वपुषा शरीरेण सह जगदन्तसाक्षी कल्पान्तस्थायी

(नेपथ्ये ।)

अलमिष्ट्वा मखान्मूर्खाः खड्गधारेयमस्ति नः ।
अदवीयानयं पन्थाः स्वर्लोकमुपतिष्ठते ॥ ६१ ॥

**रामः**— (श्रुत्वा सरोषं ससंभ्रमं चोत्थाय सविनयमञ्जलिं बद्ध्वा ।) भगवन्जगत्त्रय-गुरो गाधिनन्दन,

दशरथगृहे संभूतं मामवाप्य धनुर्धरं
दिनकरकुलास्कन्दी कोऽयं कलङ्कनवाङ्कुरः ।
इति हि वनितामेतां हन्तुं मनो विचिकित्सते
तदधिकरणं धर्मस्थेयं तवैव वचांसि नः ॥ ६२ ॥

---

भगवान् कुलगुरुः अस्मत्कुलाचार्यः अत एव तस्य लज्जाकरत्वमिति साभिप्राय-विशेषणं । अतश्च (परिकरालंकारः) वसिष्ठः लज्जिष्यते लज्जां प्राप्स्यति ६० अलमिति । हे मूर्खाः ! अपाण्डिताः ! अलमिष्ट्वामखान् यागानुष्ठाना-यासोमास्तु पूर्ववत्प्रतिषेधार्थकालंयोगे क्त्वा ; स्वर्गप्राप्तौ ततोऽपि लघूपायाभावाद्ब-हुलायासमपि यागं कुर्म इति चेत्तत्रब्रूमः नः इयं खड्गधाराऽस्ति असिधाराविद्यते । युद्धे हतानां सद्यएव स्वर्गप्राप्तेः । "द्वाविमौ पुरुषौ राजन् सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च युद्धेचाभिमुखोहतः ॥" इति स्मरणात् । इदानीमस्माभिर्हता-नां युष्माकं कुतो यागादिसिद्धिरिति च भावः ; ननूभयोरप्युपायत्वाविशेषेऽपि प्रवृत्तत्वाद्यागएवानुष्ठीयतां तत्राह अयं पन्थाः असिधारामार्गः अदवीयान् दूरतरो न भवति स्थूलदूरेत्यादिना दूरशब्दस्य यणादिलोपः पूर्वस्य गुणश्च । हतमात्रेण प्राप्तुं सुशकत्वात् । अनेनोपायान्तरस्य न तथात्वं सूचितं । प्रारब्धक्षयानन्तर-भाविस्वात्ययणे च प्रबलेन संचितकर्मान्तरेण कदाचिदनभिव्यक्तिप्रसंगाच्च । न केवलं क्षिप्रफलत्वमेवापितु फलोत्कर्षोऽप्यस्तीत्याह ; स्वर्लोकमादित्यलोकं "सु-वरित्यादित्यः" इति श्रुतेः स्वःशब्दोऽत्रादित्यवाची । सूर्यमण्डलभेदिनाविति स्मरणात् उपतिष्ठते संगच्छति संगतिकरणे उपोपसृष्टस्य तिष्ठतेस्तङ् । न तथान्य-स्येति भावः तस्य धूमद्वाराचन्द्रमण्डलमात्रप्रापकत्वात् "एकनिरोधः" इति श्रुत्याऽऽदित्यलोकप्राप्तिनिषेधाच्चेति भावः ॥ ६१ ॥

दशरथेति । दशरथगृहे संभूतं धनुर्धरं धनुर्विद्याकुशलं च मां अवाप्य आश्रित्य दिनकरकुलस्य सूर्यवंशस्य आस्कन्दीदूषकः कोऽयंकलंकनवाङ्कुरः स्त्री-वधरूपापवादस्य नूतनोत्पत्तिः इति हि इत्येव, एनां वनितां ताटकां हन्तुं मनः

( प्रणिपत्य नेपथ्याभिमुखम् । ) भोस्तपोधनाः, माभैष्ट ।

रजनिचरचमूरमूरपास्यन्नयमहमागत एव रामभद्रः ।

कुशिकसुतकुशाग्रतोयबिन्दोरिदमनुकल्पमवेत कार्मुकं मे ॥ ६३ ॥

(इति धनुरारोपयन्निष्क्रान्तः ।)

**लक्ष्मणः**—( साशङ्कमात्मगतम् । ) दिष्ट्या क्षात्रेण धर्मेण कौमारमप्यशून्यमार्यस्यासीत् । (नेपथ्याभिमुखमवलोक्य हर्षं नाटयन् । प्रकाशम् । ) भगवन्कौशिक, पश्य पुरस्तादार्येण धनुषि धृते

वायव्यास्त्रव्यतिकरनिरालम्बनस्ताटकेयः
प्राप्तो जीवन्मरणमसुभिर्विप्रयुक्तः सुबाहुः ।
कृत्तोन्मुक्ता भुवि च करुणाश्चर्यबीभत्सहास-
त्रासक्रोधोत्तरलमृषिभिर्दृश्यते ताटकेयम् ॥ ६४ ॥

---

मच्चित्तं विचिकित्सते संशेते कितेःस्वार्थिकःसन्यद्यस्माद्धेतोः तवैववचांसि "निगृहाणताटकाम्" इत्यादीनि नः धर्मस्य अनुष्ठेयस्य स्थेयं निश्चायकं बाहुलकात्कर्त्तरिकृत्यः अधिक्रियते सिद्धान्तोऽस्मिन्निति अधिकरणं सिद्धान्तसारः "विषयोविशयश्चैव पूर्वपक्षस्तथोत्तरं । प्रयोजनं च पञ्चैते प्राञ्चोऽधिकरणं विदुः ॥" इत्युक्तलक्षणं । तस्मान्निगृह्णामीति भावः ॥ ६२ ॥

**रजनीति** । हे तपोधनाः । अयमहं रामभद्रः समर्थत्वद्योतनार्थं स्वनामकीर्तनं अमूः युष्मदुपद्रवकारिणीः रजनिचरचमूः राक्षससैन्यानि अपास्यन् निराकरिष्यन् सामीप्याद्वर्त्तमानप्रयोगः आगतएव इतः परं विलंबोनास्तीति भावः इदं मे कर्मणे प्रभवति कार्मुकं धनुः "कर्मणउकञ्" कुशिकसुतस्य गुरोः कुशाग्रतोयबिन्दोः मन्त्रोक्षितदर्भाग्रजलकणस्य अनुकल्पं किञ्चिन्न्यूनं तस्याप्रतिबन्धेन सृष्ट्यादिसामर्थ्यदर्शनात्ततोऽस्य न्यूनत्वं "मुख्यः स्यात्प्रथमः कल्पोऽनुकल्पस्तुततोऽधमः" इत्यमरः अवेत जानत यद्वा अनुसृत्य कल्पत इति अनुकल्पं; गुरुकृपावशादेवास्य सामर्थ्यमतो मय्यसंभावना नकर्त्तव्या तस्मान्माभैष्टेति भावः ६३

क्षात्रेण क्षत्रियजातेरसाधारणेन धर्मेण युद्धेन, प्रकृत्यादित्वात्तृतीया अशून्यं साकल्येन सत्कृतं वायव्येति ताटकेयः ताटकापुत्रो मारीचः "स्त्रीभ्यो ढक्" । वायव्यास्त्रस्य वायुदेवताकास्त्रस्य "वाय्वृतुपित्रुषसोयत्"; व्यतिकरेण संपर्केण निरालंबनः निराश्रयस्सन् जीवन्मरणं जीवच्छवतां प्राप्तः पलायनादिति भावः सुबाहुः असुभिः प्राणैः "पुंसिभूम्न्यसवःप्राणाः" इत्यमरः विप्र-

**विश्वामित्रः—** (विलोक्य ।) वत्सलक्ष्मण, विस्मयेन प्रमोदेन च परवन्तो वयं न वाचामधीश्महे । वक्तव्यमेव वा किमस्ति । न खल्वियमद्यतनी वः प्रतिष्ठा ।

**दिक्कूलंकषकीर्तिधौतवियतो निर्व्याजधीरोद्धता-**
**स्ते यूयं रघवः प्रसिद्धमहसो यैः सोऽपिदेवाधिपः ।**
**बिभ्राणैरसुराधिराजविजयक्रीडानिदानं धनुः**
**पौलोमीकुचपत्रभङ्गरचनाचातुर्यमध्यापितः ॥ ६५ ॥**

---

युक्तःमुक्तः मृतइत्यर्थः । इयं ताटका भुविकृत्तोन्मुक्ता पूर्वं कृत्ताछिन्ना पश्चात् उन्मुक्ता पतिता च सती "पूर्वकाल॰" इत्यादिना समासः करुणया स्त्रीहतेति दयया आश्चर्येण कथमतिबालेनैकेनैवबाणेन राक्षसीहतेत्यद्भुतेन । बीभत्सेन भुविपतितस्य तत्कलेबरस्य दर्शनोत्थेनवैकृतेन मारणार्थमागता स्वयमेव मरणं गतेति हासेन, त्रासेन किं पुनरपिराक्षसाआयास्यन्तीति भयेन क्रोधेन पूर्वं तत्कृतापकारस्मरणजेन कोपेन च एवं रसषट्केन उत्तरलं निबिडं यथा तथा । ऋषिभिः दृश्यते । "दूराध्वानं वधं युद्धं राज्यदेशादिविप्लवम् । संरोधं भोजनं स्नानं सुरतं चानुलेपनं । अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेत् ॥" इति नाटके युद्धादेः प्रत्यक्षानिर्देश्यत्वाभावाल्लक्ष्मणमुखेन ताटकादिवधकथनं । एवमुत्तरत्राप्यूह्यम् ॥६४

विस्मयेन एकेन बहवो हता इत्याश्चर्येण प्रमोदेन यज्ञविघ्नोपशान्तिजनितहर्षेणच परवन्तः परवशाः वाचामधीश्महे तद्गुणान्वक्तुं न शक्ताःस्मः अधिगर्थेत्यादिना वाचामिति कर्मणिषष्ठी ॥ इयं प्रतिष्ठा एतादृशी कीर्त्तिः **दिगिति** । दिक्कूलंकषया दिग्व्यापिन्या कूलशब्दात् "सर्वकूलाभ्रकरीषेषु कषः" इति खच् कीर्त्या धौतं धवलितं वियत् आकाशं यैः तैः, निर्व्याजं निष्कपटं धीराश्च उद्धताश्च शत्रुभिरधर्षिताः यद्वा धीरोद्धताख्यनायकविशेषाः एतेन तेषां देवांशत्वं सूचितं "देवाधीरोद्धताज्ञेयाः" इति भरतवचनात् ते तथाविधाः यूयं रघवः रघ्वपत्यानि प्रसिद्धमहसः विख्यातमहिमानः असुराधिराजविजयक्रीडायां दैत्यकर्मकपरिभवलीलायां निदानं आदिकारणं । धनुः बिभ्राणैः यैः युष्माभिः सः अतिप्रसिद्धः देवाधिपोऽपि इन्द्रोऽपि पौलोम्याः शच्याः कुचयोः स्तनयोः पत्रभंगरचनायाः मकरादिरेखाविशेषनिर्माणस्य चातुर्यं सामर्थ्यं अध्यापितः शिक्षितः । शत्रुविजयादिकार्यस्यान्यथासिद्धत्वाल्लीलयैवेन्द्रः कालं यापयतीति भावः । एवं त्रैलोक्याधिपतेरिन्द्रस्यापि शरण्यत्वं युष्माकं स्वधर्म इत्यत इदानीं स्तोतव्यत्वं

**लक्ष्मणः**—भगवन् पश्य ।

अद्य नैशाचरीं सेनामेनामुल्लोलयन्नयं ।
आधानं वीरधर्मस्य निर्माय त्वामुपस्थितः ॥ ६६ ॥

(प्रविश्य ।)

**रामः**—(सवैलक्ष्यम् ।)

पूषा वसिष्ठः कुशिकात्मजोऽयं त्रयस्त एते गुरवो रघूणाम् ।
महामुनेरस्य गिरा कृतोऽपिस्त्रैणो वधोऽयं न सुखाकरोति ॥ ६७ ॥

(आश्रममवलोक्य ।)

प्रत्यासन्नतुषारदीधितिकराक्लिश्यत्तमोवल्लरी-
बल्याभिर्मखधूमवल्लिभिरमी संमीलितव्यञ्जनाः।
श्वः संचीवरयिष्यमाणवटुकव्याधूतशुष्यत्वचो
निद्राणातिथयस्तपोधनगृहाः कुर्वन्ति नः कौतुकम् ॥ ६८ ॥

---

नास्तीति भावः । अत्रराक्षसनिग्रहरूपाश्चर्यनिवेदनेन परिभावनानामसंध्यंगमुक्तं भवति "परिभावोऽद्भुतावेशः" इति तल्लक्षणोक्तेः ॥ ६५ ॥

अद्येति । अयं रामः नैशाचरीं राक्षससंबन्धिनीं एनां सेनां अद्य उल्लोलयन् नाशयन्सन् वीरधर्मस्य युद्धेशत्रुसंहाररूपस्य धर्मस्य आधानं उपक्रमं यथाऽग्निष्टोमादिसप्तसोमसंस्थां चिकीर्षुः प्रथमं तन्मुखमाधानं कुरुते-तद्वद्भाविनां राक्षसवधानामुपक्रमभूतं ताटकादिवधं निर्माय अनुष्ठाय त्वामुपस्थितः त्वत्समीपं गत इत्यर्थः अनेन पुनारामप्रवेशः सूचितः ॥ ६६ ॥

पूषेति । पूषा सूर्यः कूटस्थत्वात्परंपरया ज्ञानदत्वाच्च तथा च भगवान् "इमं विवस्वते योगं प्रोक्तवानहमव्ययम् । विवस्वान्मनवेप्राहमनुरिक्ष्वाकवेऽब्रवीत् एवं परंपराप्राप्तमिमं राजर्षयो विदुः ॥" इति, वसिष्ठः सर्वेषामाचार्यत्वात्; कुशिकात्मजः अस्मद्गुरुः, एवं त एते त्रयः रघूणां गुरवः ततः किमित्यत आह अयं इदानीं वृत्तः स्त्रैणः स्त्रीसंबन्धी; "स्त्रीपुंसाभ्यां नञ् स्नञौ भवनात्" इति स्त्रीशब्दादिदमर्थे नञ् वधः अस्य महामुनेः विश्वामित्रस्य गिरा वार्तया कृतोऽपि अनुष्ठितोऽपि नसुखाकरोति नसुखयति मामिति शेषः; "सुखप्रियादानुलोम्ये" इति सुखशब्दाड्डाच् अनेन गुरुवाक्यानुष्ठानजन्यसुखस्य स्त्रीवधनिमित्तदुःखस्य च वर्णनात् विधाननाम मुखसंध्यंगमुक्तं भवति "विधानं सुखदुःखकृत्" इति तल्लक्षणात् ॥ ६७ ॥

चन्द्रोदयंवर्णयति पञ्चदशभिः । प्रत्यासन्नेति । प्रत्यासन्नेन सन्निहितेन

( पुरोऽवलोक्य । )

स्फुरति पुरतो माद्यन्माद्यच्चकोरविलोचन
प्रकराकिरणश्रेणीदत्तस्वहस्तघनं महः ।
हृदयलघिमामाभूत् प्रेयोदृशांप्रतिभूरयं
कुवलयदृशामिन्दुर्नेत्रे सुधाभिरनक्ति नः ॥ १९ ॥

अपि च ।

उन्मीलन्ति मृणालकोमलरुचो राजीवसंवर्त्तिका-
संवर्तव्रतवृत्तयः कतिपये पीयूषभानोःकराः ।

---

तुषारदीधितिकरेण चन्द्रकिरणेन क्लिश्यन्त्याः ध्वंसं व्रजन्त्याः तमोवल्लर्याः अंध-कारलतायाः बल्याभिः बले साधुभूताभिः वर्धयन्तीभिरित्यर्थः धूमस्य अन्धकार-सहायत्वदर्शनात् अनुदात्तेत्वनिमित्तात्मनेपदत्वस्यानित्यत्वज्ञापनात् क्लिश्यदिति परस्मैपदप्रयोगः एताभिः मखधूमवल्लिभिः लतावत् प्रसर्पद्भिर्यज्ञधूमैः सम्मीलितं तिरोहितं व्यञ्जनं व्यक्तिः येषां तथोक्ताः सम्मीलितं व्यञ्जनं पदार्थः एष्विति वा। श्वः आगामिदिनेसंचीवरयिष्यमाणाः परिधास्यमानाः "पुच्छभाण्डचीवराण्णिङ्" इति संपूर्वाच्चीवरशब्दात् णिङ् । "चीवरादर्जने परिधाने च" इति परिधानेवृत्तिः ङित्वादात्मनेपदं वटुकैः ब्रह्मचारिभिः व्याधूताः क्षालिताः शुष्यन्त्यः अनार्द्रीभव-न्त्यः त्वचः कृष्णाजिनवल्कलादीनि येषु तथा भूताः निद्राणाः सुप्ताः, "संयोगादे-रातोधातोर्यण्वतः" इति निपूर्वाद्द्रातेर्निष्ठातोनः । अतिथयः आगन्तवः येषु ते दूरागतत्वाच्छ्रान्तत्वाच्च तेषां निद्राणत्वं; एव भूताः तपोधनगृहाः आश्रमाः नः कौतुकं कुर्वन्ति ॥ १८ ॥

स्फुरतीति । महः चन्द्रिका माद्यतां अतीवहृष्यतां आभीक्ष्ण्येद्विरुक्तिः चकोराणां लोचनप्रकरस्य नेत्रसमूहस्य किरणश्रेण्या कान्तिपरंपरया दत्तस्वहस्तं कृतहस्तावलंबंसत् अत एव घनं सान्द्रं सत् स्फुरति प्रकाशते । प्रीत्या चन्द्रिकां पश्यतां चकोराणां नयनधवलिम्ना तस्याः शोभाधिक्यमिति भावः । प्रेयसः विरहिणः भर्तॄन्पश्यन्ति प्रतीक्षन्त इति प्रेयोदृशः तासां विरहिणीनामिति यावत् हृदयलघिमा विरहेण मनोदौर्बल्यं माभूत् इतः परं न भवेत् । कुतस्तत्राह अयं चन्द्रः कुवलयदृशां स्त्रीणां प्रतिभूः भर्तृसंघटने लग्नकः तादृशः नः मे "अस्मदो-द्वयोश्च" इति बहुत्वं अत एव नेत्रे इति द्वित्वं; मेत्रे सुधाभिरमृतकिरणैः अनक्तिलिम्पति ॥ १९ ॥

उन्मीलन्तीति । मृणालवत् बिसवत् कोमलारुक् कान्तिः येषां तथोक्ताः

अप्यग्रेधवलीभवत्सुगिरिषु क्षुब्धोऽयमुन्मज्जता
विश्वेनेव तमोमयो निधिरपामह्नायफेनायते ॥ ७० ॥

( सनिर्वेदम् । )

इन्दुर्यद्युदयाद्रिमूर्ध्नि न विभात्यद्यापि तन्मा स्म भू-
न्नासीरेऽपि तमःसमुच्चयममूरुन्मूलयन्ति त्विषः ।
अप्यक्ष्णोर्मुदमुद्गिरन्ति कुमुदैरामोदयन्ते दिशः
संप्रत्यूर्ध्वमसौ तु लाञ्छनमभिव्यक्तुं प्रकाशिष्यते ॥ ७१ ॥

---

राजीवसंवर्तिकानां पद्मनवदलानां संवर्त्तव्रतं प्रलयः ( नियमेन संकोचनमिति यावत् । ) वृत्तिः व्यापारः येषांतथोक्ताः । कतिपये कतिचनस्वल्याइत्यर्थः "प्रथमचरम"इत्यादिना कातिपयशब्दस्य सर्वनामतापीयूषभानोः चन्द्रस्य कराः किरणाः उन्मीलन्ति उद्यन्ति गिरिषु पर्वतेषु अग्रे शिखरे धवलीभवत्सुचन्द्रकिरणैः श्वेतत्वं संपद्यमानेषु सत्सु अयं तमोमयोऽपांनिधिः अंधकारविकारभूतः समुद्रः उन्मज्जता उद्गच्छता विश्वेन जगता "विश्वात्वतिविषायां स्त्रीजगतिस्यान्नपुंसकम्" इति मेदिनी क्षुब्धः मथितःसन् अह्नाय सपदि फेनायत इव फेनमुद्वमतीव । "फेनाच्च" इत्युद्वमनार्थेक्यङ् अपिःशंकार्थउत्प्रेक्षाद्योतकः यथा हि लोके कूपादौनिमग्नस्य घटादेरुन्मज्जनकाले फेनोद्गमनं स्यादेवं तमसा व्याप्तं जगत् मध्येमध्ये चन्द्रिकाधवलितपर्वताग्रंसत्तथाभातीति भावः ॥ ७० ॥

इन्दुरिति । अद्यापि इयताकालेनापि इन्दुश्चन्द्रः, उदयाद्रिमूर्ध्नि उदयपर्वतशिखरे न विभाति यदि न भासते चेत् । तर्त्हि मास्मभूत् नोदेतु "स्मोत्तरे लङ् च" इति लोडर्थे लुङ् "नमाङ्योगे" इत्यडभावः कथं तर्हि तमोनाशादिकार्यमित्याशङ्क्यतस्यान्यथासिद्धिमाह अमूः उदिताः तत्त्विषोऽपि चन्द्रकिरणा अपि अपिरत्रभिन्नक्रमः नासीरे पुरतः तमःसमुच्चयं अन्धकारसमूहं उन्मूलयन्ति उद्धतमूलं कुर्वन्ति नाशयन्तीत्यर्थः । अपिः समुच्चयार्थः अक्ष्णोः दृशोः मुदं प्रीतिं उद्गिरन्ति कुर्वन्ति दिशः कर्म कुमुदैः आमोदयन्ते सुरभीकुर्वन्ति, "मुदहर्षे" इति भौवादिकस्याकर्मकत्वात् "गतिबुद्धि" इत्यादिना दिशांकर्मत्वम् । "आमोदो गन्धहर्षयोः" इति मेदिनी । एवं तर्हि किमर्थ चन्द्रानुदयेन निर्विद्यते तत्फलसिद्धेरित्याशंक्य तथापि तद्बिम्बदर्शनरूपाह्लादस्यानन्यसाध्यत्वान्निर्वेदः सच दर्शनेन शीघ्रमेव व्यपनेष्यतीत्याह असौ चन्द्रः संप्रति लांछनं अंकं अभिव्यक्तुं प्रकाशयितुं ऊर्ध्वं आकाशे प्रकाशिष्यते प्रकाशो भविष्यति ॥ ७१ ॥

( सहर्षम् । )

काश्मीरेण दिहानमम्बरतलं वामभ्रुवामानन-
द्वैराज्यं विदधानमिन्दुदृषदां भिन्दानमम्भःसिराः ।
प्रत्युद्यत्पुरुहूतपत्तनवधूदत्तार्घ्यदूर्वाङ्कुर-
ग्रासक्षीबकुरङ्गमैन्दवमिदं विम्बंसमुज्जृम्भते ॥ ७२ ॥

एताश्च ।

पौलोमीकुचकुम्भकुङ्कुमरजःस्वाजन्यजन्मोद्धताः
शीतांशोर्द्युतयः पुरंदरपुरीसीम्नामुपस्कुर्वते ।
एताभिर्लिहतीभिरन्धतमसान्युद्गृध्नतीभिर्दिशः
क्षोणीमास्तृणतीभिरन्तरतमं व्योमेदमोजायते ॥ ७३ ॥

**काश्मीरेणेति** । इदं ऐन्दवं बिम्बं चन्द्रमण्डलं कर्तृ अम्बरतलं व्योमप्रदेशं काश्मीरेण कुंकुमेन दिहानं लिंपत् उदयकाले तथावर्णत्वात्तस्य । अत्र (रूपकातिशयोक्तिः) काश्मीरशब्देन कान्त्यानिगरणात् । इवशब्दाध्याहारेण व्याख्यातृणां मते (उत्प्रेक्षा) साध्यत्वाध्यवसायात् । वामभ्रुवां स्त्रीणां आननद्वैराज्यं मुखसादृश्यं द्वितीयोराजा द्विराजः त्रिदिवमितिवत् तस्य भावः द्वैराज्यं विदधानं कुर्वाणं (प्रतीपालंकारः) उपमेयोपमानयोः व्यत्ययेनकल्पनात् । इन्दुदृषदां चन्द्रकान्तानां अम्भःसिराः जलाधारनाडीः भिन्दानं उद्बोधयत् प्रत्युद्यन्तीभिः प्रत्युत्थानं कुर्वतीभिः पुरुहूतपत्तनवधूभिः इन्द्रपुरस्त्रीभिः दत्ते अर्घ्ये पूजार्थजले, योदूर्वाङ्कुरग्रासः शतपत्रिकाख्यतृणाग्रकवलः "ग्रासस्तु कबलार्थकः" इत्यमरः तेन क्षीबः मत्तः कुरङ्गः शशः यस्मिन् तत् "अनुपसर्गात्फुल्लक्षीबे" इत्यादिना निपातनात् "क्षीबृ मदे" इत्यस्य निष्ठान्तं रूपं क्षीबेति "मत्तशौण्डोत्कटक्षीबाः" इत्यमरः (संबन्धातिशयोक्तिः) कुरङ्गस्याप्सरोऽर्घ्यदूर्वामत्तत्वासंबन्धेऽपि तत्संबन्धवर्णनात् समुज्जृम्भते सम्यगुदयते ॥ ७२ ॥

**पौलोमीति** । पौलोम्याःशच्याः कुचकुम्भयोः स्तनकलशयोः कुङ्कुमरजसा काश्मीरपरागेण सह स्वाजन्यं सबन्धुत्वं यस्य तेन जन्मना उद्धताः गर्विताः । (संबन्धातिशयोक्तिः) तादृशजन्मौद्धत्याद्यसंबन्धेऽपि संबन्धवर्णनात् पौलोमीकुचग्रहणं तदुत्कर्षार्थं तथाविधाः एताः शीतांशोः रुचयः किरणाः, पुरन्दरपुर्याः अमरावत्याः सीम्नां सीम्नः "कृञः प्रतियत्ने" इति कर्मणिषष्ठी उपस्कुर्वते आहितगुणान्तराःकुर्वन्ति "गन्धनावक्षेपण" इत्यादिना तङ् । "उपात्प्रतियत्न"

अपि च ।

नैवायं भगवानुदञ्चति शशी गव्यूतिमात्रीमपि
द्यामद्यापि तमांसि कैरवकुलश्रीचाटुकाराः कराः ।
मथ्नन्ति स्थलसीम्नि शैलगहनोत्सङ्गेषु संरुन्धते
जीवग्राहमिव क्वचित्क्वचिदपिच्छायासु गृह्णन्तिच ॥ ७४ ॥

(ज्योत्स्नातिशयं निरूप्य ।)

किं नु ध्वान्तपयोधिरेप कतकक्षोदैरिवेन्दोः करै-
रत्यच्छोऽयमधश्च पङ्किलइवच्छायापदेशादभूत् ।
किं वा तत्करकर्तरीभिरभितो निस्तक्षणादुज्ज्वलं
व्योमैवेदमितस्ततश्च पतिताश्छायाछलेन त्वचः ॥ ७५ ॥

---

इत्यादिना मुट् इदं व्योम आकाश अन्धतमसानि गाढान्धकारान् अन्धं तमः इति समासे "अवसमन्धेभ्यस्तमसः" इति समासान्तोऽच् लिहतीभिः भक्षयन्तीभिः दिशः उद्गृथ्नतीभिः प्रकाशयन्तीभिः क्षोणीं पृथिवीं आस्तृणतीभिः आच्छादयन्तीभिः एताभिः चन्द्रकान्तिभिः करणभूताभिः अन्तरतमं अत्यन्तमवकाशविशिष्टं सत् पूर्वं अन्धकारावृतत्वेन निरवकाशमिवास्थितं प्रकाशे सत्यतीवावकाशवदिवभातीत्यर्थः ओजायते ओजस्विवदाचरति, "कर्तुः क्यङ् सलोपश्च" ओजःशब्दो वृत्तिविषये तद्वति भवति ॥ ७३ ॥

नेति । भगवान् श्रीमान् अयं शशी चन्द्रः अद्यापि इयता कालेनापि गव्यूतिमात्रीमपि क्रोशद्वयपरिमाणामपि गव्यूतिशब्दात् "प्रमाणेद्वयसच्" इत्यादिनामात्रच् "प्रमाणेलः" इति तस्य लुक् । तस्य संशयार्थे प्रतिप्रसवः "टिड्ढाण्" इत्यादिनाङीप् । "गव्यूतिः स्त्रीक्रोशयुगं" इत्यमरः द्यां आकाशं नोदञ्चत्येव नोद्गच्छत्येव । कैरववनश्रियः कुमुदवनशोभायाः चाटुकाराः उल्लासकराः कराः किरणाः तमांसि स्थलसीम्नि अनावृतप्रदेशे मथ्नन्ति विलोडयन्ति नाशयन्तीतियावत् । शैलानां पर्वतानां गहनोत्संगेषु गुहाप्रदेशेषु संरुन्धते सम्यगावृण्वते तत्रैव निश्चलयन्तीतिभावः क्वचित्क्वचित् अल्पावरणप्रदेशेषु छायासु जीवग्राहं गृह्णन्तीव जीवन्त्येव जीवेनसह वा गृह्णन्तीत्युत्प्रेक्षा । "समूलाकृत" इत्यादिना णमुल् कषादित्वाद्ग्रहेरनुप्रयोगश्च । यथाहिलोके राजनि दिग्विजयार्थं प्रस्थितेभटाः अग्रत एव गत्वा सामन्तानां हननादिहिंसां बहुविधां कुर्युरेवं चन्द्रकिरणास्तमांसि हिंसितवन्त इति भावः ॥७४

किन्विति यतोः हेतोः अयं विभागः कतकक्षोदैरिवकतकचूर्णैरिवस्थितैः

( परिक्रम्य पार्श्वतोऽवलोक्य । )

दलविततिभृतां तले तरूणामिह तिलतण्डुलितं मृगाङ्करोचिः ।
मदचपलचकोरचञ्चुकोटीकबलनतुच्छमिवान्तरान्तराभूत् ॥ ७६ ॥

( विभाव्य । )

त्रिभुवनतमोलुण्टाकीनामहो मिहिरत्विषा-
मभिविधिरसौ कोकश्रेणीमनस्यवशिष्यते ।
क्षुधमपितमः साक्षादन्तः प्रविश्य विनिघ्नतः
शशधरकरानच्छिन्नाग्रांश्चरन्ति चकोरकाः ॥ ७७ ॥

---

इन्दोः करैः चन्द्रकिरणैः अत्यच्छः अतीवनिर्मलः भातीतिशेषः । अधश्च अधोभागे च छायापदेशात् छायाव्याजेन पंकिलइव पंकवानिव पंकशब्दस्य पिच्छादित्वादिलच् अभूत् । तस्मात् एषः ध्वान्तपयोधिः किंनु अंधकारसमुद्रोवा । यथाह्याविलस्य जलस्य कतकसंपर्कात्स्वाच्छ्ये तत्कर्दमोऽधोभागेलीनो भवत्येवं पूर्वमंधकारेण नीलवर्णस्य पश्चाच्चन्द्रिकया धावल्ये अधश्च वृक्षच्छायासुचसतीष्वेवमुत्प्रेक्ष्यते । उत्प्रेक्षान्तरं वक्तुमाह किंवेति तत्करैः चन्द्रकिरणैरेव कर्त्तरीभिः आयुधविशेषैः अभितः उभयतः ऊर्ध्वमधश्चेतियावत् । निस्तक्षणात् निःशेषेण त्वचोग्रहणाद्धेतोः उज्वलं दीप्तं इदं व्योमैवाकिंवा ततश्च त्वचः कृततक्षणस्य व्योम्नोवल्कलानि छायाच्छलेन इतस्ततश्चतत्रतत्रपतिताः किंवा ॥ ७५ ॥

दलेति । इह अस्मिन् प्रदेशे दलविततिभृतां पत्रविस्तारभाजां तरूणां वृक्षाणां तले अधःप्रदेशे मृगांकरोचिः चन्द्रिका तिलतण्डुलितं तिलामिश्रतण्डुलवदाचरितं सत् छायासंसृष्टत्वात् । मदेन चन्द्रदर्शनहर्षेण चपलानां इतश्चेतश्चधावतां चकोराणां चञ्चुकोटीकबलनेन आस्वादनार्थं चंच्वग्रकृतखण्डनेनतुच्छं शून्यं अन्तराऽन्तरा मध्येमध्ये अभूदिवेत्युत्प्रेक्षा ॥ ७६ ॥

त्रिभुवनेति । त्रिभुवनतमसः त्रैलोक्यांधकारस्य लुण्टाकीनां चोरीणां हन्त्रीणामितियावत् "लुटि स्तेये" इति धातोः "जल्पभिक्ष" इत्यादिना ताच्छील्ये षाकन् षित्वान्ङीष् । मिहिरत्विषां सूर्यकिरणानां असौ अभिविधिः व्याप्तिः कोकश्रेण्याः चक्रवाकसमूहस्य मनसि अवशिष्यते अवशिष्टतांयाति कर्मकर्तरिप्रयोगः अहो आश्चर्यं सर्वव्यापिनामपि तेजसां स्वल्पदेशेसंकोचनात् अतिशीतलेऽपिकाले कोकानां संतापइति खेदोवा । चकोरकाः अन्तःप्रविश्य जठरप्रदेशंगत्वा क्षुधं बुभुक्षांतमोऽपि साक्षाद्विनिघ्नतः विशेषणनाशयतः अच्छिन्नाग्रान् अनाहताननितियावत् । शशधरकरान् चन्द्रकिरणान् चरन्ति भक्षयन्ति ॥ ७७ ॥

अपि चेदानीं ।

तथा पौरस्त्यायां दिशि कुमुदकेदारकलिका-
कपाटघ्नीमिन्दुः किरणलहरीमुल्लयति ।
समन्तादुन्मीलद्बहुलजलबिन्दुस्तबकिनो
यथा पुञ्जायन्ते प्रतिगुडकमेणाङ्कमणयः ॥ ७८ ॥

(परिक्रामन्नूर्ध्वमवलोक्य ।)

तरुणतमालकोमलमलीमसमेतदयं
कलयति चन्द्रमाननु कलङ्कइति ब्रुवते ।
तदनृतमेव निर्दयविधुंतुददन्तपद-
व्रणविवरोपदर्शितमिदं हि विभाति नभः ॥ ७९ ॥

**तथेति** । एणांकमणयः चन्द्रकान्ताः समन्तात् सर्वतः उन्मीलद्भिः उद्यद्भिः बहुलैः अधिकैः जलबिन्दुभिः स्तबकिनः गुच्छवन्तःसन्तः चन्द्रिकयाद्रवीभूतत्वात् । प्रतिगुडकं प्रतिगोलं वीप्सायामव्ययीभावः । यथा पुञ्जायन्ते पुञ्जाइवाचरान्ति "कर्तुः क्यङ् सलोपश्च" तथा इन्दुःकुमुदकेदारस्यकैरवक्षेत्रस्य कलिकाकपाटघ्नीं कोरकरूपाररोद्दलनशक्तां "शक्तौ हस्तिकपाटयोः" इति टक् टित्वान्ङीप् । विकासयित्रीमितियावत् किरणलहरीं ज्योत्स्नानिष्यन्द उल्लयति प्रसारयति । चन्द्रकान्तद्रवीकरणयोग्यं प्रकाशतइति भावः ॥ ७८ ॥

**तरुणेति** । अयं चन्द्रमाः तरुणतमालवत् अम्लानतापिञ्छपुष्पवत् कोमलं मञ्जुलं मलीमसं मलिनं च नीलमितियावत् यदेतत् साध्यं, कलयति दधाति । सः ननु कलंकइति अंकएवेति ननुरवधारणे ब्रुवते वदन्ति जनाइति शेषः । कलंकशब्दस्य कर्मत्वेऽपि निपातेनेतिनाऽभिहितत्वात्प्रातिपदिकार्थेप्रथमा।यथाह वामनः "निपातेनाप्यभिहितेकर्मणि न कर्मविभक्तिः परिगणनस्यप्रायिकत्वात्" इति । तदनृतमेव मिथ्यैवनायं कलंकइत्यर्थः । तर्हि किंतत्तत्राह, इदं चन्द्रमध्ये दृश्यमानं नभोहि आकाशएव । नन्वविरलावयवे चन्द्रबिंबे कथमाकाशइत्याशंक्यहेतुगर्भं विशेषणमाह निर्दयेति निर्दयस्य निर्घृणस्य विधुंतुदस्य राहोः "सैंहिकेयोविधुंतुदः" इत्यमरः "विध्वरुषोस्तुदः" इति खश् । दन्तपदव्रणविवरेण दन्तस्थानव्रणाच्छिद्रेण उपदर्शितं प्रकाशितंसत् विभाति चन्द्रांकत्वेन शोभते (अपह्नुत्यलंकारः) अंकापह्नवेनाकाशनैल्यारोपात् ॥ ७९ ॥

किं च ।

रुचिभिरभितष्टङ्कोत्कीर्णैरिव त्रसरेणुभि-
यदुडुभिरपि स्थूलैश्छेदैरिव भ्रियते नभः ।
प्रकृतिमलिनो भास्वद्बिम्बोन्मृजाकृतकर्मण-
स्तदयमपि हि त्वष्टुः कूटे भविष्यति चन्द्रमाः ॥ ८० ॥

**लक्ष्मणः**— ( सर्वतोऽवलोक्य । )

भूयस्तराणि यदुडूनि तमस्विनीषु
ज्यौत्स्नीषु च प्रविरलानि ततः प्रतीमः ।
संध्यानलेन भृशमम्बरमूषिकाया
मावर्त्तितैरुडुभिरेवकृतोऽयमिन्दुः ॥ ८१ ॥

( विहस्य ) यथाधर्ममेवैतत्

यत्पीयूषमयूखमालिनि तमस्तोमावलीढायुषां-
नेत्राणामपमृत्युहारिणि पुनःसूर्योढ एवातिथौ ।
अंभोजानि परांचि, तन्निजमघं दत्वेवतेभ्यस्ततो-
गौरांगीवदनोपमासुकृतमादत्ते पतिर्यज्वनां ॥ ८२ ॥

---

रुचिभिरिति । यत् नभः आकाशः टंकेन पाषाणदारणेन उत्कीर्णैः तक्षणेनोत्क्षिप्तैः त्रसरेणुभिरिव सूक्ष्मक्षोदैरिवास्थिताभिः रुचिभिः कान्तिभिः स्थूलैः छेदैरिव खण्डैरिवास्थितैः उडुभिरपि नक्षत्रैरपि भ्रियते पूर्यते । तत् तस्माद्धेतोः प्रकृत्यास्वभावतः मलिनः कलंकितः अयं चन्द्रमाअपि भास्वद्बिंबस्य सूर्यमण्डलस्य उन्मृजया तक्षणेन मृजेर्भिदादित्वादङ् कृतकर्मणः दृष्टकौशलस्य त्वष्टुः विश्वकर्मणः कूटे तक्षणयन्त्रे भविष्यतिहि ॥ ८० ॥

भूयइति । यत् उडूनि नक्षत्राणि तमस्विनीषु प्रचुरतमस्कासु रात्रिषु भूयस्तराणि अधिकानि भूयइत्यव्ययं अन्यथा पुनस्तरबनुपपत्तेः । ज्यौत्स्नीषु चन्द्रिकान्वितासुचरात्रिषु " ज्यौत्स्नीचन्द्रिकयान्विता " इत्यमरः । प्रविरलानिस्वल्पानिचभान्तीतिशेषः । ततः संध्यानलेन संध्याकालरूपाग्निना कर्त्रालौहित्यसाम्यात्तथारूपणं अंबरमूषिकायां आकाशरूपैतेजसावर्त्तन्यां भृशं नितरां आवर्तितैः द्रवीकृतैः उडुभिरेव नक्षत्रैरेव अयमिन्दुः चन्द्रः कृतइतिप्रतीमःतर्कयामः (उत्प्रेक्षा) ८१

यथाधर्ममेव धर्मशास्त्रमनतिक्रम्यैव यदिति । तमःस्तोमेन गाढांधकारेण अवलीढायुषांपराभूतदर्शनशक्तीनां नेत्राणां अपमृत्युहारिणि अकालमृत्युनाशके

**विश्वामित्रः**—(सर्वतोऽवलोक्य) अहह नामधेयमाधुर्यमात्रादपरमार्थपार दृश्वानो विप्रलभ्यन्ते । तथाहि

**स्मेरादिशः कुमुदमुद्भिदुरं पिबन्ति**
**ज्योत्स्नाकरंभमुदरंभरयश्चकोराः ।**
**आः कीदृगत्रिमुनिलोचनदूषिकायां**
**पीयूषदीधितिरितिप्रथितोऽनुरागः ॥ ८३ ॥**

(रामंचदृष्ट्वा सहर्षस्मितं) कथमयंकौमारांकविजयप्रत्यागतोपि ताटकानिग्रहेण ह्णीयमानः सहसा नोपातिष्ठते वत्सः । (लक्ष्मणप्रति) वत्स सौमित्रे, अस्माकमनेनवृत्तान्तेन प्रदोषलक्ष्मीरियमनूद्यते ।

---

यथा पुंसां शतमायुः पुरुषायुषं तदर्वागायुःक्षयः अकालमृत्युत्वादपमृत्युरुच्यते एवं यावद्देहंदर्शनशक्तिः चक्षुषां पूर्णमायुः तदभावेऽपमृत्युः रात्रौ तच्छक्तेरपह्नियमाणत्वात्तथोपचारः । तथाभूते पीयूषमयूखमालिनि चन्द्रे (परिकरांकुरालंकारः) साभिप्रायविशेष्यकरणात् । सूर्योढएवातिथौ सूर्यास्तमयएवागतेसति ऊढः अनतिक्रान्तः सूर्यः येन सः सूर्योढः आहिताग्न्यादित्वात्समासः । तल्लक्षणंतु "यः स्वयं वैश्वदेवान्ते सायं वा गृहमागतः । देववत्पूजनीयोसौ सूर्योढः सोतिथिः स्मृतः" इति । अंभोजानि पद्मानि यत् येन हेतुना पराञ्चि पराङ्मुखानि मुकुलितत्वादितिभावः । तत् तेन हेतुना यज्वनां पतिः द्विजराजश्चन्द्रः तेभ्यः पद्मेभ्यः (संप्रदानं) निजमघं ह्रासकारणं स्वं पापं दत्वा, ततः तेभ्यः गौरांगीवदनोपमासुकृतं स्त्रीणां मुखसादृश्यरूपं पुण्यं आदत्त इव गृह्णातीव । "अतीथिर्यस्यभग्नाशो गृहात्प्रति निवर्तते । सतस्मै दुष्कृतं दत्वा पुण्यमादाय गच्छति । अतिथौ विमुखे प्रोक्तं गतेयत्पातकं नृणां । तदेवाष्टगुणं प्रोक्तं सूर्योढे विमुखेसति" इति स्मृतेः ॥ ८२

पारंदृष्टवन्तः पारदृश्वानः "दृशेः क्वनिप्" परमार्थस्य वस्तुस्वभावस्य पारदृश्वानो न भवन्तीत्यपरमार्थपारदृश्वानः । विप्रलभ्यन्ते वंच्यन्ते । **स्मेराइति ।** तेषामापातरमणीये प्रीतिमाह पूर्वार्धेन । दिशः स्मेराः प्रसन्नाः कुमुदं उद्भिदुरं अतीव विकस्वरं चकोराः ज्योत्स्नाकरंभं उदरंभरयः सन्तः पिबन्तीति । तद्दूषयत्युत्तरार्धेन । अत्रिमुनेः लोचनदूषिकायां नेत्रमले "दूषिकानेत्रयोर्मलं" इत्यमरः । चन्द्रे, अत्रिनेत्राज्जलं सुस्रावततश्चन्द्रो जात इति पुराणकथानुसंधेया पीयूषदीधितिः अमृतकिरणइति कीदृगनुरागः प्रथितः निरवधिकाप्रीतिः जनानां । आः कष्टं । दिक्कुमुदयोर्जडत्वाच्चकोराणां तिर्यक्त्वाच्च चन्द्रानुवर्त्तनेऽपि चेतनानामपि

पश्य ।

निशाचरणां तमसां निहन्ता पुरोऽयमुद्गच्छति रामचन्द्रः ।
अथोल्लसद्भिर्नयनैर्मुनीनामयंकुमुद्वानजनिप्रदेशः ॥ ८४ ॥

मदयति यदुत्पन्नो दुग्धांबुधेरयमंबुधी-
न्नयति नयनादत्रेर्जातोमुदं नयनानिच ।
तदखिलसुरश्रेणीसाधारणप्रणयः शची-
सहचरचरुस्थाली सोमः समंजसमीहते ॥ ८५ ॥

**रामः**— (सलज्जमुपसृत्य) भगवन् कुशिकनन्दन, अभिवादये ।

**विश्वामित्रः**—(सस्नेहबहुमानमालिंग्य) वत्स रघुनंदन, इत्थमेव ।

प्रकृष्टकर्त्रभिप्रायक्रियाफलवतो विधीन् ।
प्रयुञ्जानास्त्वया वीर परिपाल्यामहे वयम् ॥ ८६ ॥

---

तदनुवर्तनमयुक्तमेवेतिभावः विप्रलब्धत्वसमर्थनात्काव्यलिंगमलंकारः ॥ ८३ ॥

कौमारांकेण बालक्रीडालक्षणेन विजयेन राक्षसनिग्रहेण सहप्रत्यागतः पुनर्निवृत्तः । ह्रणीयमानः लज्जमानः सन् "ह्रणीङ् लज्जायां" कण्ड्वादिरयंधातुः । अनूद्यते पुनरुक्ताक्रियते । **निशाचराणामिति** । तमसां तमोगुणप्रधानानां गुणगुणिनोरभेदात्, निशाचराणां राक्षसानां पक्षे निशाचराणां तमसां अंधकाराणां निहन्ता नाशकः अयं रामचन्द्रः दाशरथिः अभिरामश्चन्द्रश्च पुरः अग्रभागे पूर्वदिग्भागेच उद्गच्छति आगच्छति उदेति च । अथ साकल्येन उल्लसद्भिः उत्फुल्लैः मुनीनां नयनैः अयं प्रदेशः कुमुद्वानिव कुमुदप्राय इव अजनि जातः "कुमुद्वान् कुमुदप्राये" इत्यमरः । "कुमुदनडवेतसेभ्योड्मतुप्" श्लेषोपमालंकारः ८४ ॥

**मदयतीति** । यत् अयं सोमः चन्द्रः दुग्धांबुधेः क्षीरसमुद्रात् उत्पन्नः तत् अंबुधीन् मदयति हर्षयति पितृत्ववात्सल्यात् । यत्तदावुत्तरत्रापिसंबध्येते । तथा यत् अत्रेर्नयनाज्जातः तत् नयनानि "अकथितं च" इति कर्मत्वं मुदं नयति आह्लादयति यत् शचीसहचरस्य इन्द्रस्य चरुस्थाली भोज्यान्नपात्रं तत् अखिलसुरश्रेण्याः साधारणप्रियः समानप्रीतिहेतुः प्रधानप्रीतावितरप्रीतेर्नान्तरीयकत्वात् प्रतिपदादिक्रमेण तदभ्यवहार्यत्वाच्च तस्य । यत एवं तत् समञ्जसमीहते स्वसदृशं चेष्टते । (समालंकारः) ॥ ८५ ॥

अभिवादय इति अभिवादनान्ते स्वनामासंकीर्तनं स्त्रीबभजनिनलज्जयेति

**रामः**— शिरसाप्रतिगृहीतमार्यवचनम् ।

**विश्वामित्रः**— (समरधूलिधूसरितं रामस्य कपोलमुन्मार्जयन्) वत्स, यत्सत्य-मधुना नक्तंचरचक्रव्यतिकरेण प्रियसुहृदा सीरध्वजेन वितन्यमाने वैताने कर्मणि कंपितमिव मे हृदयम् ।

**रामः**— (सगौरवम्) भगवन्, कएष सीरध्वजोनाम । यमद्य ते त्रिभुवनदुर्लभोऽयं प्रियसुहृच्छब्दप्रयोगः कमपि महिमानमारोपयति ।

**विश्वामित्रः**— वत्स, शृणोषि मिथिलांनाम नगरीम् ।

**रामः**— यत्र पवित्रमाश्चर्यद्वयं जनाः कथयन्ति । सकलराजकदुर्धर्षमैन्दुशेखरं धनुः लांगलमुखोल्लिखितविश्वंभराप्रसूतिरगर्भसंभवा च मानुषी । ।

**विश्वामित्रः**— (विहस्य) अथ किम् ।

**रामः**— (सकौतुकम्) ततः किं तस्याम्.

**विश्वामित्रः**—असौ सीरध्वजो राजायोदेवाद्द्युमणेरपि ।
अध्यैष्टयाज्ञवल्क्यस्यमुखेन ब्रह्मसंहिताम् ॥ ८७ ॥

---

भावः । **प्रकृष्टेति** । हे वीर राम, अनेन यज्ञविघ्नध्वंसनरूपोपकारः सूचितः । कर्तारमभिप्रैति गच्छतीति कर्त्रभिप्रायं कर्मण्यण् । प्रकृष्टं च कर्त्रभिप्रायं च तत् क्रियाफलं च तद्वतः विधीन् यज्ञादीन् । यद्वा । प्रकृष्टानि कर्त्ता (यजमानः) अभिप्रायः (उद्देशः) क्रियाफलं च तानि प्रकृष्टकर्त्रभिप्रायक्रियाफलानि तद्वतः "कर्त्रभिप्रायक्रियाफल" इत्युक्त्या स्वार्थपरा वयं न तु प्रत्युपकारपरा इति च सूचितं प्रयुञ्जानाः अनुतिष्ठन्तः विघ्नस्य नाशितत्वात् वयं त्वया कर्त्रा परिपाल्यामहे रक्षणीयाः कर्मण्याशीर्लिङ् इतः परमपीतिशेषः ॥ ८६ ॥

इतः प्रभृति सीताविवाहान्तकथायाः प्रकृतार्थत्वात्करणं नाममुखसंध्यंगमुक्तं भवति । "करणं प्रकृतारंभः" इति तल्लक्षणोक्तेः विदेहेष्विति लुपियुक्तवद्भावेन नित्यं बहुत्वं । राज्ञां समूहो राजकं सामूहिकोवुञ् । **असाविति** । यःदेवात्स्वप्रकाशात्सर्वज्ञानाकराद्वाद्युमणेरपि आदित्यादपि याज्ञवल्क्यस्य मुखेन द्वारा ब्रह्मसंहितां उपनिषदं अध्यैष्ट अधीतवान् असौ सीरध्वजः तस्यां मिथिलायां राजा वर्तत इति शेषः ॥ ८७ ॥

तस्यचन्यस्तशस्त्रस्यपुराणराजर्षेर्जनकवंशजन्मनोदीक्षाविलोपशंकापर्याकुलयति मां तदेनमायुष्मन्तौ, विधिशेषमस्मदीयंसमाप्य, सहसैवमिथिलांप्रतिष्ठामहे ।

**रामः**—(सहर्षं । अपवार्य ।) वत्स लक्ष्मण, ममापि तरुणरोहिणीरमणचूडामणिप्रणयिनि बाणासने कौतुकमस्ति ।

**लक्ष्मणः**—(सपरिहासम् । आर्यायामयोनिजन्मनि कन्यायांच ।

**रामः**—(सरोषस्मितम्) कथमन्यदेव किमपिप्रहसनं सूत्रयति भवान् । (मुनिंप्रति) भगवन्निक्ष्वाकुकुलगुरो, यदभिरुचितं भवते ॥

(इति परिक्रम्य निष्क्रान्ताः सर्वे ।)

इति कौमारविक्रमोनाम द्वितीयोऽङ्कः

---

ब्रह्मवादिनः अध्यात्मविचारशीलस्य न्यस्तशस्त्रस्य त्यक्तयुद्धप्रयोगस्य अतएव राक्षसोपद्रवागमनशंका । समाप्य अवभृथंकृत्वा ।

इति लक्ष्मणसूरिविरचितायामाकराख्यायामनर्घराघवनाटकव्याख्यायां द्वितीयोऽङ्कः समाप्तः ।

॥ श्रीरस्तु ॥

ओं.

# तृतीयोऽङ्कः



( ततः प्रविशति कञ्चुकी )

**कञ्चुकी**— (जरावैक्लव्याविसंस्थुलानि कतिचित्पदानि गत्वा आत्मानं प्रति सखेदोपलम्भम् )

**गात्रैर्गिराच विकलश्चटुमीश्वराणां**
**कुर्वन्नहं प्रहसनस्य नटः कृतोऽस्मि ।**
**तन्मां पुनः पलितवर्णकभाजमेनं**
**नाट्येन केन नटयिष्यति दीर्घमायुः ॥ १ ॥**

---

सीरध्वजेन रक्षितमैश्वरमन्यैर्दुरारोपम् ।
कोदण्डमिक्षुभङ्गं भञ्जन् सीतापतिर्जयति ॥

अथ बिन्दुप्रयत्नानुगतप्रतिमुखसंधिकथनद्वारा कथासंघटनाय तदुचितपात्रप्रवेशपूर्वकं विष्कम्भंवक्तुमुपक्रमते **ततइति** । प्रतिमुखादिलक्षणंतु "लक्ष्यालक्ष्यइवोद्भेदस्तस्य प्रतिमुखं भवेत् । बिन्दुप्रयत्नानुगमादंगान्यस्य त्रयोदश" "अवान्तरार्थविच्छेदे बिन्दुरच्छेदकारणं" प्रयत्नस्तुतदप्राप्तौ व्यापारोऽतित्वरान्वितः" इति । कञ्चुकी "अन्तःपुरचरो वृद्धो विप्रोगुणगणान्वितः । सर्वकार्यार्थकुशलः कञ्चुकीत्यभिधीयते" इत्युक्तलक्षणः ॥ अत्र रामलक्ष्मणाभ्यां सह विश्वामित्रस्य मिथिलागमनान्तातीतकथा । **जरेति** । "जरावैक्लव्ययुक्तेन विशेद्गात्रेण कञ्चुकी" इति भरतोक्तेः । विसंस्थुलानि स्खलितानि । खेदेन अशक्तिजनितदुःखेन उपालंभेन दीर्घायुष्ट्वकृतनिन्दयाच सह । **गात्रैरिति** । अहम् गात्रैः प्रणामादिसाधनभूतैः गिरा स्तुत्यादिसाधनभूतया विकलः शून्यः तदपाटवं गत इत्यर्थः ईश्वराणां राज्ञां चटुंस्तुत्यादि "चटुश्चाटुश्च राजादिस्तुतौ पशुपिचण्डके ।" इति वैजयन्ती । प्रहसनस्य हास्यरसप्रधानरूपकस्य नटः सूत्रधारः कृतोऽस्मि मत्स्तुत्यादिना हसन्तीत्यर्थः । तत्ततः दीर्घमायुः कर्तृ । पलितं जराकृतकेशादिशौक्ल्यमेववर्णकः नटाद्यर्थं विलेपनद्रव्यविशेषः तं भजतीति वर्णकभाक् तं "वर्णकश्चारणेस्मृतः । विलेपनेचन्दने च" इति विश्वः एनं उक्तलक्षणं मां केन नाट्येन प्रहसनव्यतिरिक्तेन बीभत्सादिनापि किं नटयिष्यति इतःपरं

(पुरोऽवलोक्य।) अये सीतापादमूलोपजीविनी कलहंसिका।

(प्रविश्य)

**कलहंसिका**:— अज्ज, पणमामि। **(आर्य, प्रणमामि)**

**कञ्चुकी**— वत्से, कल्याणिनी भूयाः।

**कलहंसिका**— अज्ज, चिरेण कुदोतुह्मे। **(आर्य, चिरेण कुतोयूयं)**

**कञ्चुकी**— (विमृश्य) किंनकथ्यते। वत्से, विदितमेवैतद्भवत्या, तत्तादृगद्भुतं दारकद्वयमादाय भगवान् कौशिको यजमानं महाराजं सीरध्वजमुपस्थितइति।

**कलहंसिका**— अधइं। अज्ज, ताणंपहवं णामहेयं च सुणिदुं अत्थि मे कोदूहलं। **अथकिं। आर्य, तयोः प्रभवं नामधेयंचश्रोतुमस्तिमेकौतूहलम्।**

**कञ्चुकी**— **वत्से, कथयामि।**

**त्रयस्त्रिंशत्कोटित्रिदशमयमूर्त्तेर्भगवतः**
**सहस्रांशोर्वंशे जयति जगतीशो दशरथः।**
**यदस्त्रैरस्निग्धैरसुरयुवतिश्वासपवन-**
**प्रकोपे सिद्धे न स्पृशति शतकोटिं शतमखः॥ २॥**

---

जीवितं तु बीभत्सावहंस्यादित्यर्थः ॥ १ ॥

प्रवेशान्तरं सूचयितुमाह पुर इति। कलहंसिकेति "चेटचेट्योस्तथापुनः। वसन्तादिषु वर्ण्यस्य वस्तुनो नाम यद्भवेत्।" इत्युक्तेरीदृशं नामास्याः कविकृतं प्रभवत्यस्मिन्निति प्रभवः कुलं प्रभवत्यस्मादिति प्रभवः पिताच। अयमेकः प्रश्नः तयोः नामश्रवणं द्वितीयः प्रश्नः। तत्र प्रथमप्रश्नद्वयस्योत्तरमाह **त्रय इति।** त्रयश्च त्रिंशच्च त्रयस्त्रिंशत् त्र्यधिकात्रिंशदितिवा "त्रेस्त्रयः" इति। त्रि शब्दस्य त्रय इत्यादेशः त्रयस्त्रिंशद्गुणिताकोटिः त्रयस्त्रिंशत्कोटिः त्रिदशाः देवाः तन्मयीमूर्तिः यस्य तस्य सर्वदेवमयस्येत्यर्थः अत्र देवानां त्रयस्त्रिंशत्त्वंतु "अष्टौ-वसव एकादशरुद्रा द्वादशादित्याः" इति श्रुत्यूक्तगणदेवाएकत्रिंशत् शेषौ द्वौ अश्विनाविति केचिदिन्द्रप्रजापती इत्यपरे एतेषां त्रयस्त्रिंशतो देवानां विभूति विस्तार एव तद्गुणितकोटिरिति गम्यते। "महिमानएवैषां त्रयस्त्रिंशत्त्वेवदेवाः" इति श्रुतेः। भगवतः सहस्रांशोः सूर्यस्य वंशे दशरथः जगतीशः भूपतिः जयति अस्निग्धैः क्रूरैः यस्य दशरथस्य अस्त्रैः असुरयुवतीनां असुरस्त्रीणां श्वासपवनस्य श्वासवायोः प्रकोपे आधिक्ये सिद्धे निष्पन्नेसति असुरसंहारेण तत्स्त्रीषु दुःखेन

इमौ तस्य विशां पत्युरात्मजौ रामलक्ष्मणौ।
ययोर्भरतशत्रुघ्नावनुजौ द्वन्द्वचारिणौ ॥ ३ ॥

**कलहंसिका**—जह अह्माणं घरेभट्टदारिआ सीआ उम्मिला माण्डवि सुदिकित्तीअ- (**यथा अस्माकंगृहे भर्तृदारिका सीता ऊर्मिलामाण्डवीश्रुतिकीर्तिश्च**) (विचिन्त्य। हर्षनिरूपयन्ती) कहं महाउलप्पसूदा एदेविकुमाला। (**कथं महाकुलप्रसूता एतेऽपिकुमाराः**) (मुहूर्तमिवास्थित्वा। दीर्घमुष्णंचनिश्वस्य) कुदो अह्माणं ईरिसो भाअहेओ। (**कुतोऽस्माकमीदृशं भागधेयम्**)

**कञ्चुकी**— भवति माविषीद। सर्वं भद्रं भविष्यति देवब्राह्मणप्रसादात्।

**कलहंसिका**— तदो तदो। **ततस्ततः**।

**कञ्चुकी**— ततश्चवृद्धान्तःपुराणां अभ्यर्थनया तौ विकर्तनकुलकुमारौ दृष्ट्वा निवर्त्तमानः पुरोधसागौतमेनाहूय राजपुत्रीणां सौभाग्यदेवताराधनाय प्रहितोऽस्मि ॥

---

निश्वासं कुर्वाणासु सतीष्वित्यर्थः शतमखः इन्द्रः शतकोटिं वज्रं नस्पृशति नादत्ते असुरकर्मकविजयस्यान्यथासिद्धत्वादितिभावः य एवंवीर्यस्तादृशो दशरथ इति पूर्वेण संबन्धः। पर्यायोक्तिरलंकारः ॥ २ ॥

द्वितीयप्रश्नोत्तरमाह **इमाविति**। तस्य विशांपत्युः दशरथस्य आत्मजौ पुत्रौ इमौ रामलक्ष्मणौ। ययोः एतयोः द्वन्द्वचारिणोरितिशेषः। **द्वन्द्वचारिणौ** द्वन्द्वं (साहचर्येण) चारिणौ (संचरन्तौ) द्वन्द्वमिति अव्ययं क्लीबंवा द्विशब्दस्यार्थेनिपातः। अनेन रामलक्ष्मणयोर्भरतशत्रुघ्नयोश्च लोकप्रसिद्धमत्यन्तसाहचर्यं सूचितं। "द्वन्द्वंरहस्य" इत्यादिसूत्रभाष्यवार्तिकयोस्तथोक्तत्वात्। अनुजौ यथाक्रमं यवीयांसौ। भरतशत्रुघ्नौ अयोध्यायांस्तइतिशेषः। तयोरप्रस्तुतत्वेपि भाविविवाहसूचनार्थमिहोपादानं ॥ ३ ॥

भर्तृदारिका राजपुत्री "राजाभट्टारकोदेवस्तत्सुताभर्तृदारिका" इत्यमरः। विकर्तनकुलकुमारौ रामलक्ष्मणौ। सौभाग्यदेवता मंगलप्रदा स्वकुलदेवता। अंगिरसो गोत्रापत्यं आंगिरसः शतानन्दः। अगंभीरां अनिश्चितार्थां। शंकरधनुरारोपणव्यवसायिनः सीतादानार्थं पिनाकारोपणमेव पणत्वेन निश्चितवतः। निर्बाहयिष्यति धनुरारोपणेन पारयिष्यति। अयं वितर्कः, कथं रामः पिनाकमारोपयेत्, अथ कथंवा जनको मिथ्याप्रतिज्ञःस्यात्, शतानन्दोक्तिर्वा कथमन्यथास्या-

**कलहंसिका**— (सहर्षं) अज्ज, सव्वजणमणीसिदाणुऊलं विअ तत्तभवदो सदाणन्दस्स वअणम्। **आर्य सर्वजनमनीषितानुकूलमिव तत्रभवतः शतानन्दस्य वचनं।**

**कञ्चुकी**— वत्से एवमेतत् नखल्वगंभीरांगिरमाङ्गिरसो ब्रवीति।

**कलहंसिका**— ता अज्ज, किं मन्देसि संकरसरासणारोवणव्ववसाइणो राएसिणो जणअस्स पडिण्णासाहसं णिव्वाहेस्सदिराहवो। **तस्मादार्यकिं मन्त्रयसे शंकरशरासनारोपणव्यवसायिनोराजर्षेः जनकस्य प्रतिज्ञासाहसं निर्वाहयिष्यातिराघवः।**

**कञ्चुकी**— वत्से, अस्मानप्ययंवितर्कस्तरलीकरोति। तथाहि।

**पूर्णेपि कर्मणिहतेष्वपि राक्षसेषु**
**विज्ञाय मैथिलसुतामपि वीर्यशुल्काम्।**
**बालं पितुः प्रियतमं रघुराजपुत्र-**
**मेतावतीं भुवमृषिः कथमानिनाय, ॥ ४ ॥**

---

दिति विविध ऊहः तरलयति व्याकुलयति। न केवलं शतानन्दवाक्यएवायं वितर्कोऽपितु विश्वामित्रेण रामानयनेऽपीत्याह पूर्णइति। ननु यज्ञस्य द्रव्यसाध्यत्वात्तदपेक्षया विश्वामित्रागमनं कुतो न स्यादित्याशंक्याह कर्मणि यागे पूर्णेऽपि कृतावभृथेऽपि, ननु तथापि स्वोद्दिष्टराक्षससंहारार्थं सेनादिसञ्जिघृक्षया स्यादित्याशंक्याह राक्षसेषुहतेष्वपीति, जनकप्रतिज्ञा न ज्ञातास्यात् ततो रामाय सीतां दापयितुं स्यादित्यत आह मैथिलसुतां सीतां वीर्यं (शिवधनुरारोपणमेव) शुल्कः (कन्याग्रहणपणः) यस्यास्तां विज्ञायापि जानन्नपि, नन्वत्र रामविषयकाशक्तिसंभावना कुतस्तत्राह बालमिति, ननु प्ररूढयौवनः साधयिष्यतीत्याशंक्याह पितुः प्रियतममिति, रामस्य चिरविप्रयोगं दशरथो न सहेतेति भावः। तर्हि सिध्यसिध्योः समत्वबुद्ध्याप्रवर्ततां तत्राह रघुराजपुत्रमिति नहि रघवः संशयिते कर्मणि प्रवर्तन्त इत्यर्थः। मास्तु सीतालिप्सा दिदृक्षामात्रेणागमनं कुतो न स्यादित्याशंक्य नह्ययं नेदीयान् देशो येन सामान्यत आगमनं संभाव्येतेत्याह एतावतीमिति एतत्परिमाणां अतिदूरामित्यर्थः भुवं ऋषिः विश्वामित्रः कथमानिनाय किमर्थमानीतवान्॥ ४॥

**कलहंसिका**—( स्मरणमभिनीय ) अज्ज, पउत्तिविसेसलाहेण दुम्मणायमाणमत्ताणं पञ्चालिआकेलिवावारेण विणोदअंदिं भट्टदारिअं पेक्खिअ उव्विण्णाए कारणं परिवाज्जिदुं आअदाए अज्जस्स दंसणेण मए विसुमरिदं। इमिणा उण रक्खसणामग्गहणेण सुमारिदह्मि।

**आर्य, प्रवृत्तिविशेषलाभेन दुर्मनायमानमात्मानं पाञ्चालिकाकेलिव्यापारेण विनोदयन्तीं भर्तृदारिकां प्रेक्ष्य उद्विग्नया कारणं प्रतिपत्तुमागतया आर्यस्य दर्शनेन मया विस्मृतं। अनेन पुनः राक्षसनामग्रहणेन स्मारिताऽस्मि।**

**कञ्चुकी**—( सविषादम् ) वत्से, कीदृशी सा प्रवृत्तिः, या तवभर्तृदारिकामपि दुर्मनाययाति।

**कलहंसिका**—जह किल सीदादेविं पच्छिदुं दसग्गिवपुरोहिदोआअदोत्ति।
**यथा किल सीतादेवीं प्रष्टुं दशग्रीवपुरोहित आगत इति**

**कञ्चुकी**— (तत्रावज्ञां नाटयन्। सहर्षस्मितम्।) कथमेतावदपि कार्यं वत्सा जानाति। यदनेनोदन्तेन दुर्मनीभूयते। नूनमिदानीमस्याः कृतावतरणमंगलान्यंगानि यौवनस्य पन्थानमीक्षन्ते।

**कलहंसिका**— अज्ज, एव्वं एदं, अज्जो त्ति सिढिलीकिदलज्जा संपदि जेव्व अणुहूदं किं वि णिवेदेमि। **आर्य, एवमेतत्, आर्यइति शिथिलीकृतलज्जा संप्रत्येवानुभूतं किमपि निवेदयामि।**

---

प्रवृत्तिविशेषलाभेन स्वपरिणयार्थं रावणप्रार्थनाश्रवणेन दुर्मनायमानं दुःखितंदुर्मनःशब्दात् "कर्तुःक्यङ् सलोपश्च" इत्याचारार्थेक्यङ् सलोपौ। पाञ्चालिकायाः वस्त्रदन्तादिकृतपुत्रिकायाः केलिव्यापारेण विनोदयन्तीं दुःखपरिहारमाचरन्तीं। प्रतिपत्तुं ज्ञातुं। दुर्मनाययति दुःखिनीं करोतिक्यङन्ताद्दुर्मनःशब्दात्तत्करोतीति णिच् सीतादौर्मनस्येन तस्या यौवनप्राप्तिं शंकते एतावदित्यादिना। दुर्मनीभूयते दुर्मनाः संपद्यमाना क्रियते। कृतं अवतरणमंगलं (यौवनागमनोचितोपचारः) येषु तानि। यौवनस्य पन्थानं प्रतीक्षन्त इति स्तनोद्भेदादि प्रतिपद्यन्त इत्यर्थः। संस्कृतमाश्रित्येति वैदग्ध्यप्रदर्शनार्थं। "वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरा"। इत्युक्तत्वात्। अनाकूतैरिति। इयंकल्याणी सीता शिशुतया (हेतुना) अनाकूतैः अभिप्रेतार्थं विनैव प्रवृत्तैः प्रियसहचरीणां प्रियसखीनां वचोभिः

( संस्कृतमाश्रित्य )

अनाकूतैरेव प्रियसहचरीणां शिशुतया
वचोभिः पाञ्चालीमिथुनमधुना संघटयितुम् ।
उपादत्ते, नोवा, विरमतिनवा, केवलमियं
कपोलौ कल्याणी पुलकमुकुलैर्दन्तुरयति ॥ ५ ॥

**कञ्चुकी**—( सहर्षम् ) दिष्ट्या चिरस्य जीवद्भिरस्माभिर्यौवनवती वैदेही दृष्टा ( सस्मितम् ) ततस्ततः ।

**कलहंसिका**—तदो पुणो पुणो वि ताहिं उज्जुआहिंणिब्बद्धिज्जमाणा लज्जिदुं वि लज्जेदि ।

ततः पुनः पुनरपि ताभिः ऋजुकाभिः निर्बध्यमाना लज्जितुमपि लज्जते ।

**कञ्चुकी**—( विहस्य । सकौतुकम् ) वत्से, संकीर्णे खल्वियं वयसि वर्त्तते । अत्रहि ।

मनो विशंकमानाभिर्बालाभिरुपजीव्यते ।
अषडक्षीणषाड्गुण्यमन्त्री मकरकेतनः ॥ ६ ॥

---

पाञ्चालीमिथुनं वस्त्रदन्तादिकृतं स्त्रीपुंसरूपं पुत्रिकाद्वयं संघटयितुं संगमयितुं उपादत्ते गृह्णाति, नोवेत्येकोऽन्वयः साकूतत्वादात्मनो न संघटयति, नवा विरमति स्वाभिप्रायाविष्करणभिया तत्संघटनव्यापारत्यागमपि न करोति पुलकमुकुलैः पुलकांकुरैः कपोलौ केवलं दन्तुरयति निम्नोन्नतौ करोति । अनेन सात्विकभावः सूचितः ॥ ५ ॥

ऋजुकाभिः अज्ञातपराचित्ताभिः । निर्बध्यमाना पाञ्चालिकासंघटनाय चोद्यमाना । लज्जितुमपि तत्संघटने लज्जामभिनेतुमपि लज्जते अभिप्रायाविष्करण-भयात् । संकीर्णे वयसि बाल्ययौवनयोर्मध्ये । मनइति मनः स्वचित्तमेव विशंक-मानाभिः "दृश्यतेऽन्तर्गतं मनः" इति न्यायेन भावाविष्करणभिया विशेषेण संशयानाभिः बालाभिः मिश्रवयस्काभिः स्त्रीभिः अषडक्षीणे तृतीयाद्यगोचरे द्वाभ्यामेवानुष्ठेयइत्यर्थः अविद्यमानानि षडक्षीणि यस्मिन्नित्यषडक्षं "बहुव्रीहौ सक्थ्यक्ष्णोः" इति षच् । ततः "अषडक्षाशितंगु" इत्यादिना स्वार्थिके खे रू-पमषडक्षीणमिति षाड्गुण्यविशेषणं । "षट्कर्णो भिद्यते मन्त्रः" इति कामन्दक-वचनादक्षिशब्दोऽत्र श्रोत्रपरइत्याहुः । तथाभूते, षड्गुणा एव षाड्गुण्यं तत्र साचिव्ये मन्त्री एकान्तसचिव इत्यर्थः । मकरकेतनः मन्मथः उपजीव्यते सेव्यते६

**कलहंसिका**—अज्ज, सोहणं मंदेसि सव्वस्स वि अणुहवसंवादिणी दे वाआ।

**आर्य, शोभनं मन्त्रयसे, सर्वस्याप्यनुभवसंवादिनी ते वाक् ।**

**कञ्चुकी**—वत्से

**तदात्वप्रोन्मीलन्म्रादिमरमणीयात्काठिनतां**
**विचित्य प्रत्यंगादिव तरुणभावेन घटितौ ।**
**स्तनौ संबिभ्राणाः क्षणविनयवैयात्यमसृण-**
**स्मरोन्मेषाः केषामुपरि न रसानां युवतयः ॥ ७ ॥**

**कलहंसिका**— (विहस्य) होदु ता णाकिंवितुझोहिं सुदं मए वि ण किं वि कहिदं,

**भवतु, तस्मान्न किमपि युष्माभिः श्रुतं मयापिन किमपि कथितम् ।**

**कञ्चुकी**— वत्से, नतावदर्थोऽयमद्यापि राजगोचरीभवति यदि चस्यात् किमेतावता पर्यवस्यति ।

**कलहंसिका**— हदासो रावणो देविं परिणइस्सदि ।

**हताशो रावणो देवीं परिणेष्यति ।**

**कञ्चुकी**—( विहस्य )

---

**तदात्वेति** । तदात्वे तस्मिन्काले मिश्रावस्थायामिति यावत् "तत्कालस्तु तदात्वं स्यात" इत्यमरः । प्रोन्मीलता प्रवर्द्धमानेन म्रदिम्ना आर्द्रवेन पृथ्वादित्वान्मृदुशब्दस्य इमनिचि "अचिर" इति रःटिलोपश्च । रमणीयात् प्रत्यंगात् अंगादंगात् कठिनतां विचित्य आहृत्य तरुणभावेन यौवनेन घटिताविव निर्मिताविव स्थितौ (उत्प्रेक्षा) स्तनौ संबिभ्राणाः भृञोवयोवचने शानश् । क्षणाभ्यां क्षणिकाभ्यां विनयेन बाल्यानुरोधिना वैयात्येन यौवनानुरोधिनाधाष्टर्चेन च ताभ्यां मसृणः स्निग्धः "चिक्कणं मसृणं स्निग्धं" इत्यमरः स्मरोन्मेषः मन्मथ विकासो यासां ताः युवतयः स्त्रियः रस्यन्त इति रसाः भोग्यपदार्थाः केषां रसानामुपरि न, सर्वरसतोऽपिश्लाध्या इत्यर्थः ॥ ७ ॥

पञ्चमश्लोकादारभ्य इयतासन्दर्भेण रत्यनुकूलचेष्टावर्णनाद्विलासोनाम प्रतिमुखसन्ध्यङ्गमुक्तं "रत्यर्थेहाविलासः स्यात्" इत्युक्तेः । अवज्ञासूचितं स्वाशंकापरिहारं स्पष्टयितुमाह भवत्वित्यादि पर्यवस्यति सिध्यति । हताशः दुराशयः । तस्य रावणेन दुःसाधतामाह हस्त इति । जगत्त्रयस्य जित्वरोऽपि जयशीलोऽपि "इण्नशजि" इत्यादिना जेः क्वरप् तुक् च । कः तादृशीं वीर्यशुल्कामित्यर्थः ।

हस्ते करिष्यति जगत्त्रयजित्वरोऽपि ।
कस्तादृशीं दुहितरं जनकेश्वरस्य ।
प्राणातिगं विपुलबाहुभृतामपीदं
त्रैयंबकं किमपि कार्मुकमन्तरायः ॥ ८ ॥

नापि दशकंधरानुरोधेन स्वयं प्रतिज्ञामन्यथाकरिष्यति महाक्षत्रियो विदेहराजः, तन्नकिंचिदेतत् ।

**कलहंसिका**— (निश्वस्य) एव्वं होदु, अज्ज, संपदं कहिं दे रामलक्खणा, एवंभवतु, आर्य, सांप्रतं कुत्र तौ रामलक्ष्मणौ ।

नन्वेतावेव देवतागारवेदिकायाम् ।
मुनीन् कौशिकवैदेहगौतमानाभिराध्यतः ।
ढौकितौ ज्ञानकर्मभ्यां मोक्षस्वर्गाविव स्वयम् ॥ ९ ॥

---

जनकेश्वरस्य दुहितरं सीतां हस्ते करिष्यति रामं विना न कोऽपि सीतापाणिग्रहणार्हइत्यर्थः । तत्र हेतुमाह विपुलबाहुभृतामपि प्रथितभुजबलानामपि प्राणातिगं बलमतीत्यगच्छत् त्रीणि अंबकानि ( नेत्राणि ) अस्येति त्र्यंबकः शिवः तस्येदं त्रैयंबकं "नय्वाभ्यां" इत्यादिना ऐच् । किमपि अतिदुर्धरंइदं कार्मुकं अन्तरायः विघ्नः । सीतापाणिग्रहणार्थं पणीकृतस्य पिनाकारोपस्य दुःसाधत्वान्नोक्तशंकावसरइतिभावः ॥ ८

ननु प्रतिज्ञाया अनिर्वाहेऽपि रावणनिष्ठप्रीत्या कन्यां दास्यतीत्याशंक्य "पुरुषोऽनृतवादी च पिशुनः पुरुषस्तथा । अनिबद्धप्रलापी च मृगपक्षिषु जायते ।" इति स्वगुरुणा याज्ञवल्क्येनैव शिक्षितत्वाज्जनको नवितथप्रतिज्ञःस्यादित्याह नापीत्यादिना एवं सूच्यार्थसूचनानन्तरं प्रकृतप्रवेशसूचनार्थमाह सांप्रतमिति । नन्वित्याद्युत्तरश्लोकेनान्वेति ननुरामन्त्रणे । मुनीनिति । ज्ञानकर्मभ्यां ( हेतौ तृतीया ) मोक्षस्वर्गाविव स्थितौ यथाक्रमं ज्ञानसाध्यो मोक्षः कर्मसाध्यः स्वर्ग इत्यर्थः । यथा च मोक्षस्याभ्यर्हितत्वं स्वर्गस्य ततोऽवरत्वं च, एवं रामलक्ष्मणयोश्चेति बोध्यं एवं भूतौ एतौ रामलक्ष्मणौ एवकारः परसंबन्धी देवतागारवेदिकायामेव अभिराध्यतः मिलितान् कौशिकादीन् त्रीन् मुनीन् स्वयं ढौकितौ प्राप्तौ "ढौकृ गतौ" राधेरकर्मकादेव श्यनो विधानान्मुनीनभिराध्यतइति तिङन्तत्वेन व्याख्यानं न समीचीनं ॥ ९ ॥

तदेहि कियच्चिरमस्माकमागतानां । कन्यान्तःपुरमेव गच्छावः

( इति निष्क्रान्तौ । मिश्रविष्कंभः )

ततः प्रविशति जनको विश्वामित्रशतानन्दौ रामलक्ष्मणौ च ।

जनकः—( सहर्षं )भगवन् विश्वामित्र,

लुंपन्नदृष्टजामातृसंपदां शुचमद्य नः ।
त्वदागमनजन्मायमानन्दः सुदिनायते ॥ १० ॥

अपि च ।

अद्य प्रदक्षिणशिखावलयः कृशानु-
रश्नाति मे जनपदेषु वषट्कृतानि ।
त्वत्तेजसि स्फुरति शान्तिकपौष्टिकेषु
स्वां च स्रुचं शिथिलमांगिरसो बिभर्ति ॥ ११ ॥

विश्वामित्रः—सखे सीरध्वज, चिरस्य शान्तः पुष्टश्च तवायं जनपदः ।

यत्र त्वं ब्रह्ममीमांसातत्वज्ञो दण्डधारकः ।
पुरोधाश्चैव यस्यासावंगिरःप्रपितामहः ॥ १२ ॥

---

सूचितपात्रप्रवेशमाह तत इत्यादि । लुंपन्निति । अयं त्वदागमनजन्मा आनन्दः अदृष्टा अनधिगता जामातृसंपत् अनुरूपवरलाभः यैः तेषां नः शुचं दुःखं लुंपन् नाशयन् सन् अद्य सुदिनायते सुदिनं करोति "सुदिनदुर्दिननीहारेभ्यश्च" इति सुदिनशब्दात्क्यङ् ॥ १० ॥

अद्येति । कृशानुः अग्निः प्रदक्षिणशिखावलयः प्रदक्षिणावृत्तज्वाला-मण्डलः सन् मे जनपदेषु देशेषु वषट्कृतानि हुतद्रव्याणि "हुतं त्रिषु वषट्कृतं" इत्यमरः । अद्य त्वदागमनात् अश्नाति भक्षयति । त्वत्तेजसिस्फुरति मद्गृहे दीप्यमाने सति आंगिरसः शतानन्दः शान्तिकपौष्टिकेषु शान्तिपुष्टिप्रयोजनेषु कर्मसु विषये स्वां स्रुचं होमसाधनीभूतपात्रविशेषं "स्रुवो भेदाः स्रुचः स्त्रियः" इत्यमरः । शिथिलं मन्दोपयोगत्वाददृढं बिभर्ति त्वदागमनेनैवानिष्टनिवृत्तेरिष्ट-प्राप्तेश्च सिद्धत्वात्तदर्थमनुष्ठानायासोपि निवृत्त इति भावः ॥ ११ ॥

अनुरूपवरेप्सा, शान्त्याद्याशंसनं चेति जनकस्य व्यपेक्षाद्वयं श्रुत्वा तत्र द्वितीयस्य प्रागेव सिद्धत्वेन नमया साध्यतेत्याह सखइत्यादि । तत्र हेतुमाह

(स्मितं कृत्वा) जामातुरदर्शनजन्माशोकः पुनरुपशमयितुमवशिष्यते। किं च शोकहर्षौनाम लोकयात्रेयं भवतः। तथाहि

**यजूंषि तैत्तिरीयाणि मूर्त्तानि वमति स्म यः।**
**स योगी याज्ञवल्क्यस्त्वां वेदान्तानध्यजीगपत् ॥ १३ ॥**

---

**यत्रेति**। ब्रह्मणः परमात्मनः मीमांसया पूजितविचारेण श्रद्धाभक्तिपूर्वकं वाक्यार्थश्रवणादिनेति यावत्। तत्वस्य वेद्यवस्तुस्वरूपस्य ज्ञः ज्ञाता "इगुपधज्ञा" इत्यादिना जानातेः कः। ब्रह्मविदिति यावत्। त्वं यत्र देशे दण्डस्य दुष्टानिग्रह शिष्टपरिपालनरूपस्य धारकः धारयिता नियन्तेत्यर्थः। रागद्वेषमूलाज्ञानाभावात्तव नियन्तुस्त्वद्राज्येऽनिष्टादिप्रसंगएव नास्तीतिभावः। ननु मद्दोषमूलकानिष्टाद्यभावेऽपि जीवानां संचितपापवलादनिष्टादि कुतो न स्यादानन्त्याद्वैचित्र्याच्चकर्मणां, तत्परिहारे कोऽभ्युपायस्तत्राह अंगिराःप्रपितामहः यस्य तथोक्तःअसौशतानन्दः यस्य तव पुरोहितः। यथाकथंचित्प्राप्तस्यापि दुरितस्य परिहरणसमर्थ इत्यर्थः। अंगिरःपौत्रस्य दीर्घतमसः पौत्रत्वाच्छतानन्दस्य अंगिरःप्रपितामहइत्यत्र प्रपितामहशब्देन प्रप्रपितामहइत्यर्थोऽवगन्तव्यः। तस्मान्नतत्रास्मदपेक्षेति भावः ॥ १२

एवं द्वितीयव्यपेक्षां व्युदस्य प्रथमव्यपेक्षोत्तरोपन्यासमुखेनाभिमतकार्यघटनाय प्रक्रमते जामातुरित्यादिना। अवशिष्यतइति सत्यमेतत्, तथाऽपि तत्तिष्ठतु, किन्तु यदुक्तं नः शुचंलुंपन्निति तत्र ब्रूम इत्याह किंचेत्यादि। नह्यात्मैकत्वदर्शिनां भवादृशामाप्तकामानां शोकादिः संभवति "तत्र को मोहः कः शोकएकत्वमनुपश्यतः" इति श्रुतेः। तर्हि दृष्टविरोधइत्याशंक्य तस्यान्यार्थत्वान्नोक्तदोष इत्याह लोकयात्रेयमिति। भवतः शोकहर्षाविति यत् इयं लोकयात्रा लोकसंग्रहः ननु पारमार्थिकाविव कुतो न स्यातां तत्राह यजूंषीति। यः यजूंषि स्वगुरोर्वैशंपायनादधीतान् यजुर्वेदमन्त्रभागान् तैत्तिरीयाणि तित्तिरिणाप्रोक्तानि यथाभ्वन्ति तथा मूर्तानि स्थूलाकाराणि वमतिस्म उद्गीर्णवान् सः योगी ब्रह्मध्याननिष्ठः याज्ञवल्क्यः त्वां "गतिबुद्धि" इत्यादिना कर्मत्वं वेदान्तान् उपनिषदर्थान् अध्यजीगपत् अध्यापितवान्। "बुधयुध" इत्यादिना इङोणौपरस्मैपदं। स्पष्टंचेदमुपाख्यानं वाजसनेयोपनिषदि "जनको ह वैदेह आसांचक्रे" इत्यारभ्य आमैत्रेयीब्राह्मणं। पुरा किल देवरातपुत्रो याज्ञवल्क्यो वैशंपायनाद्यजुर्वेदमधीयन्नपटून् सब्रह्मचारिणो न्यक्कृतवान् ब्राह्मणावमानकुपितेन गुरुणाधिक्षिप्तस्सन् ततोऽधीतमुद्गीर्णवान् तदन्ये शिष्यास्तित्तिरिरूपेण भक्षितवन्त इति कथानुसन्धेया ॥ १३

**लक्ष्मणः**—(जनान्तिकम् ।) आर्य, अयं स राजा वैदेहः, पवित्रमपरिमेयमाश्चर्यद्वयं यस्यापदानमुपाध्यायादनुश्रूयते ।

**रामः**—(सप्रेमानुरागम्) वत्स, स एवायं शतपथकथाधिकारी पुरुषः, प्रणाय्यायान्तेवासिने यस्मै वाजसनेयो याज्ञवल्क्यः सूक्तानि यजूंषि प्रोवाच ।

**विश्वामित्रः**—(मुहूर्तं निर्वर्ण्य च)

**निजाय तस्मै गुरवे यतीनां जैत्राय विश्राणितगोसहस्रम् ।**
**तं गोसहस्राधिपतेः प्रशिष्यमुपास्महे मैथिलमातिथेयम् ॥ १४ ॥**

**जनकः**—(सप्रश्रय) भगवन्, यदन्यत्किंचिदभिदधासि तत्र प्रभविष्णुर्भवान् । तत्रभवतः सहस्रमयूखान्तेवासिनो योगीश्वरादध्ययनमिति महती खल्वियमस्माकं यशःपताका ।

**विश्वामित्रः**—(विहस्य) भोमहायोगिन्,

**किं याज्ञवल्क्यो जनकः किमेवं न वः स्वरूपं कवयोऽपि विद्युः ।**
**प्रवाहनित्यानधिकृत्य युष्मान् सहस्रशाखाः श्रुतयः प्रथन्ते ॥ १५ ॥**

---

अपदानं पूर्वमाचरितं शुभंकर्म " अपदानं कर्म वृत्तं " इत्यमरः । शतपथकथाधिकारी बृहदारण्यकोपनिषदि प्रतिपादितः । प्रणाय्याय वैराग्यसंपन्नाय ब्रह्मविद्यायां तस्यैवाधिकारात् । "प्रणाय्याय वा शिष्याय नान्यस्मै कस्मैचन" इति श्रुतेश्च । प्रपूर्वान्नयतेः " प्रणाय्योऽसम्मतौ " इति निपातनाण्ण्यदायादेशौ । वाजिरूपेण सूर्येण सन्यस्तां शाखामधीत इति वाजसनेयः । सूक्तानि यजूंषि सूक्तरूपाः शुक्लयजुःशाखाः प्रोवाच । **निजायेति** यतीनां यतनशीलानां (कुरुपञ्चालदेशीयानां अश्वलादीनां ब्राह्मणानां) जैत्राय (तत्तत्प्रश्नस्य सदुत्तरदानेन) जेत्रे जेतृशब्दात् प्रज्ञाद्याणि जैत्र इति रूपं । तस्मै निजाय गुरवे याज्ञवल्क्याय विश्राणितं दत्तं (ब्रह्मिष्ठत्वजिज्ञासापणत्वेन, कामप्रश्ननिष्क्रयत्वेन वा) गोसहस्रं येन तं, गोसहस्राधिपतेः सूर्यस्य प्रशिष्यं शिष्यस्य (याज्ञवल्क्यस्य) शिष्यं आतिथेयं अतिथिषु साधुं तत्पूजकमिति यावत् । तं मैथिलं जनकं उपास्महे आश्रयामः । " अभयं वै जनक प्राप्तोऽसि " इत्यादिश्रुतिकदंबेनैव तव निवृत्तानर्थत्वस्य घुष्यमाणत्वात्कुतस्तरां तवानर्थोत्प्रेक्षेतिभावः ॥ १४ ॥

प्रभविष्णुः कार्यघटने समर्थः यदन्यदुक्तं याज्ञवल्क्यशिष्यइत्यादि मां प्रति तत्सत्यं तावन्मात्रेणेयं मम प्रशस्तिः नतुमदीयवैदुष्येणेत्याह तत्रभवतइत्यादि ।

**किमिति** । याज्ञवल्क्यः किं किंस्वरूपः जनकः किं किंस्वरूपः, एवं इति वः तस्य च (याज्ञवल्क्यस्य) युष्माकं च युवयोरिति यावत् " त्यदादीनां

**शतानन्दः**— भगवन् कौशिक, एवमीदृशाः खल्वमी त्रिभुवनमहनीयमहिमानो मनीषिणः ।

**जनकः**— (सवैलक्ष्यस्मितम् ।) भगवन्,

**निर्माय कार्मणमृचामघमर्षणीना-**
**मुन्मार्जनीर्जगदघानि तवाद्य वाचः ।**
**श्रोतुं चिरप्रणयिकौतुकमस्ति चेतो**
**दुःखाकरोति-पुनरेष-ममार्थवादः ॥ १६ ॥**

मिथः" इत्यादिना परशेषः । स्वरूपं कवयोऽपि-क्रान्तदर्शिनोब्रह्मादयोऽपि न विद्युः न जानीयुः । तत्र हेतुमाह-सहस्रशाखाः नानाभेदभिन्नाः-श्रुतयः वेदाः प्रवाहेण सन्तत्या नित्यान् अविनाशिनः युष्मान् युवां-पूर्ववत्प्रक्रिया । अधिकृत्य विषयीकृत्य प्रथन्ते प्रख्याता भवन्ति । अयं भावः, "यः कल्पः स कल्पपूर्वः" इति न्यायेन संसारस्य तत्प्रभवहेतुवेदानांचानादित्वात्तत्प्रतिपादितान् वस्वादिशब्दान् स्मृत्वा तत्तद्व्यक्तीः प्रतिकल्पारंभे स्रष्टा सृजति तासां व्यक्तीनामुत्पत्तिमत्वादानित्यत्वेऽप्याकृत्या वस्वादीनां नित्यत्वमेव प्रवाहरूपेण प्रतिकल्पमनुवर्तनात् । तथा जनकयाज्ञवल्क्ययोरपि वेदोदितत्वेन प्रवाहरूपत्वादाकृतिनित्यत्व सिद्धमेवेतिभावः । एवमनादिश्रुतिप्रतिपादितमहिम्नां युष्माकं स्वरूपवर्णनेऽर्वाचां कवीनां कोऽवसरइत्यर्थः ॥ १९ ॥

विश्वामित्रोक्तेरर्थवादत्वशंकां परिहरत्येवमेवेत्यंगीकारेण । **निर्मायेति ।** हे भगवन्, ममेत्युभयान्वयि मम चेतः कर्तृ । अघमर्षणीनां पापहन्त्रीणां बाहुलकात्कर्तरि ल्युट् । ऋचां वेदमन्त्राणां कार्मण मन्त्रतन्त्रादियोजनं निर्माय कृत्वा, यथाविधि कर्मसु विनियोगं प्रदर्श्येत्यर्थः । "कार्मणं मन्त्रतन्त्रादियोजने कर्मठेऽपि च" इति मेदिनी । यद्वा । ऋग्वेदेतृतीयमण्डलदर्शित्वं तस्य श्रूयतेहि ततः तान्मन्त्रान् कर्मोपयोगिनस्तपसा स्वयं साक्षात्कृत्येत्यर्थः । यद्वा । "श्रुत्वा तु वाचिकं कर्म क्रियमाणं तु कार्मणं" इति-वचनात् यथा-गुरुमुखादभ्यासकाले शिक्षितं तथा सम्यगनुष्ठायेत्यर्थः । अत एवातिपवित्रत्वात्-जगदघानि-जीवदुरितानि उन्मार्जनीः नाशयित्रीः तव वाचः अद्य श्रोतुं चिरप्रणयि (दीर्घकालानुबंधि) कौतुकं यस्य तत् अस्ति, पुनः अपि तु एष ममार्थवादः मदनुबंधिनी स्तुतिः दुःखाकरोति पीडयति मामिति शेषः (डाच्) ॥ १६ ॥

तद्विरम, (इति शिरस्यञ्जलिं घटयति)

**विश्वामित्रः**— (सस्मितमञ्जलिमुद्घाटयन्) सखे सीरध्वज संह्रियतामञ्जलिः अमी तूष्णीभूताः स्मः, कात्यायनीकामुककार्मुकारोपणप्रवीणेन दुहितुः पत्या संप्रत्यपर्युषितप्रतिज्ञो भूयाः।

**लक्ष्मणः**— (अपवार्य) आर्य, परस्परेषां पौरुषोत्कर्षप्रशंसारमणीयः पावनोऽयमृषीणां समवायः।

**स्मरन्ति लोकार्थममी किल श्रुतीरिति प्रतिष्ठामधिगन्तुमीश्महे।**
**परं यदेषां पुनरस्ति वैभवं तदेत एव व्यतिविद्रते यदि॥१७**

**जनकः**—(सहर्षम्) परमनुगृहीतोऽस्मि। यतः।

**समस्या वा साम्नां बहिरबहिरंहःपरिमृजा-**
**मृचां वा संवादः किमपि यजुषां वा परिपणः।**
**त्वदाशीर्वादोऽयं बहुविषयसाक्षात्कृतफलो**
**वरं मे वत्सायाः कथयति पुरोवर्त्तिनमिव॥१८॥**

---

विरम मदीयस्तुतिमुपसंहर। उद्घाटयन् विघटयन्। कतस्य गोत्रापत्यं स्त्री कात्यायनी पार्वती, लोहितादित्वात्ष्फः तस्यां कामुकस्य प्रियस्य शिवस्येति यावत् "लषपत" इत्यादिना कमेरुकञ्। कार्मुकारोपणे प्रवीणेन समर्थेन। अपर्युषिता अवितथा प्रतिज्ञा यस्य सोऽपर्युषितप्रतिज्ञः। समवायः समाजः परस्परेषां मिथः पौरुषोत्कर्षस्य महिमातिशयस्य प्रशंसया स्तुत्या रमणीयः अत एव पावनः पवित्रश्च। **स्मरन्तीति**। अमी मुनयः लोकार्थं लोकरक्षणार्थं श्रुतीः वेदार्थान् स्मरन्ति मन्दबुद्ध्यनुग्रहार्थं स्मृतिरूपेण रचयन्ति, इति किल एतावन्मात्रं प्रतिष्ठां माहात्म्यं "प्रतिष्ठा स्यात्तु माहात्म्यं" इति वैजयन्ती। अधिगन्तुं ज्ञातुं ईश्महे समर्थाः स्मः। यत्पुनः एषां परं वैभवं निरतिशयं माहात्म्यं अस्ति, तत् एत एव व्यतिविद्रते यदि अन्योन्यं जानते चेत् तर्हि जानते नेतर इति भावः। व्यतिपूर्वस्यादादिकस्य विदः 'कर्त्तरि कर्मव्यतिहारे' इत्यात्मनेपदं, 'वेत्तेर्विभाषा' इति रुट्॥१७॥

स्वाभिलषितानुकूलाशीर्वादेन तुष्टो जनक आह **समस्येति**। बहिरबहिरंहःपरिमृजां बाह्याभ्यन्तरपापहन्तॄणां इदं विशेषणमुत्तरत्रापि संबध्यते। साम्नां सामवेदानां समस्या वा संग्रहार्थो वा "समस्या तु समासार्थः" इत्यमरः। यद्वा। ऋचां संवादो वा ऋग्वेदसिद्धान्तो वा। यद्वा। यजुषां यजुर्वेदानां किमपि अति-

**विश्वामित्रः**—(साकूतस्मितम्) सखे सीरध्वज, एवमेतत् ।

दवीयस्यो दूरादपथमिह चामुत्र च शुचां
त्रिवेदीवाक्यानामनतिचिरभग्ना इव खिलाः ।
श्रुतिग्राह्यं ज्योतिः किमपि बहिरन्तर्मलमुषो
मृजाया मज्जानः क्व नु विपरियन्ति द्विजगिरः ॥ १९ ॥

**शतानन्दः**— (स्वगतम्) रामभद्रमेव जामातरमभिसंधाय भगवानयं वक्रोक्तिभिः पुनः पुनः सीरध्वजं परिमोहयते । भवतु, अहमस्य प्ररोचनार्थमसंविदान इव पृच्छामि । (प्रकाशं । मुनिं प्रति) भगवन्, कस्येदं शकुन्तराजकेतोरिव कौस्तुभश्रीवत्सौ रत्नद्वयम् ।

**विश्वामित्रः**— (विहस्य । स्वगतम्) साधु वत्स शतानन्द, साधु यदेतत्कृतं तर्थि विवक्षितस्य वस्तुनः सुखावताराय (प्रकाशं) वत्स गौतम ककुत्स्थकुलसंभवौ कुमारावेतौ ।

सूक्ष्मत्वादनिर्धार्यः परिपणो वा मूलधनं वा "नीवी परिपणो मूलधनं" इत्यमरः । सार इत्यर्थः । सक इत्यत आह बहुविषयेषु अनेकसंदर्भेषु साक्षात्कृतफलः दृष्टफलः अयं त्वदाशीर्वादः मे वत्सायाः वरं भर्त्तारं पुरोवर्त्तिनमिव अग्रे तिष्ठन्तमिव कथयति ब्रूते यथा वैदिकफलस्य ध्रौव्यमेवं त्वदाशिषोऽपि दृष्टचरत्वादित्यर्थः १८

स्वाभिप्रायाविष्करणाय तदंगीकरोति । **दवीयस्य इति** । दूराद्दवीयस्यः दुरापत्वेन अतीव दूरवर्त्तिन्य इवस्थिताः इहामुत्रशुचांच ऐहिकामुष्मिकदुःखानां अपथं अविषयाः "अपथं नपुंसकं" इति निपातनात्साधुः सर्वदुःखनाशिन्य इत्यर्थः । त्रयाणां वेदानां समाहारस्त्रिवेदी तस्याः वाक्यानां निर्धारणे षष्ठी अतिचिरं दीर्घकालमनाम्नायः तेनभग्नास्तिरोहिता न भवन्तीत्यनतिचिरभग्नाः खिला इव खिलमन्त्रा इव स्थिताः । यद्वा । त्रिवेदीवाक्यानामितिशेषषष्ठी । तेषां खिलाः अप्रहतभूमय इव अनाविद्धत्वसाम्यादितिभावः । श्रुत्या श्रोत्रेन्द्रियेण ग्राह्यं ग्रहीतुं योग्यं ज्योतिः प्रकाशत्वसाम्याज्ज्योतिष्ट्वंगिरां "वाचैवायं ज्योतिषाऽस्ते" इति श्रुतेः । यद्वा । श्रुतिग्राह्यं वेदप्रतिपाद्यं ज्योतिः आत्मवस्तु "आत्मनैवाऽयं ज्योतिषाऽऽस्ते" इति श्रुतेः इह साध्यसाधनयोरभेदोपचारेण ज्योतिःप्रापकद्विजगिरां ज्योतिष्ट्वं । "वेदे श्रवसि च श्रुतिः" इत्यमरः । बहिरन्तर्मलमुषः बाह्याभ्यन्तरपापनाशिन्यः मृजायाः शुद्धेः मज्जानः सारभूताः "सारोमज्जा" इत्यमरः एवं भूताः द्विजगिरः ब्राह्मणाशिषः क्व नु विपरियन्ति न कुत्रापि व्यर्था भवन्तीति भावः ॥ १९ ॥

**शतानन्दः**— ( सप्रत्यभिज्ञमिव )

**पुत्रार्थे जगदेकजांघिकययूदामभ्रमत्कीर्त्तिना**
**चातुर्होत्रवितीर्णविश्ववसुधाचक्रेण चक्रे मखः ।**
**राज्ञा पङ्क्तिरथेन यत्र सकलस्वर्वासिसर्वातिथौ**
**सस्वेनैव फलप्रदः फलमपि स्वेनैव नारायणः ॥ २० ॥**

तत्किमेतावेव तौ दाशरथी यौ किल रामलक्ष्मणौ ताटकामथनमंगलोद्घात-वितीर्णदिव्यास्त्रमन्त्रपारायणेन भगवतैव विनीतौ वैतानस्य कर्मणश्छिद्रापिधान-दक्षिणया भगवन्तमुपासांबभूवतुः

**विश्वामित्रः**—अथ किं ।

( जनकस्तौ सस्नेहबहुमानं पश्यति. )

**शतानन्दः**— तदनयोः कतरो रामभद्रः, कतरश्च लक्ष्मणः ।

**विश्वामित्रः**—( रामं निर्दिशन् ) वत्स आंगिरस,

अभिसंधाय उद्दिश्य । परिमोहयते इति "न पादम्याङ्" इत्यादिना पर्युपसृष्टस्य ण्यन्तस्य मुहेः परस्मैपदनिषेधात् "णिचश्च" इति तङ् । असं विदान इव अजानन्निव "समोगम्यृच्छिभ्यां" इति सूत्रे विदिपृच्छिस्वरतीना-मुपसंख्यानात्तङादि । शकुन्तराजकेतोः विष्णोः विवक्षितस्य वक्तुमिष्टस्य । तीर्थकृतं उपायः कृतः पुत्रार्थ इति । जगति एकजांघिकेन मुख्यजंघाकरिकेण जवनेनेति यावत् । ययुना अश्वमेधाश्वेन "ययुरश्वोऽश्वमेधीयः" इत्यमरः उद्दामं अधिकं भ्रमन्ती चरन्ती कीर्तिर्यस्य तेन, चत्वारो होतारः ( ब्रह्माध्वर्युहोत्रुद्गात्रा-ख्याः ) एव चातुर्होत्रं प्रज्ञाद्यण् तस्मै वितीर्णं दत्तं विश्ववसुधाचक्रं समस्त-भूमण्डलं येन राज्ञा अनेन विशेषणेन प्रथमपादस्थविशेषणेन च तस्याश्वमेधेऽधिकार उक्तः "राजा सार्वभौमोऽश्वमेधेन यजेत" इति श्रुतेः । पङ्क्तिरथेन पुत्रार्थे पुत्रनिमित्तं मखः चक्रे कृतः कर्मणि लिट् । सकलेषु स्वर्वासिषु देवेषु विषये सर्वातिथौ सर्वसंतर्पके यत्र मखे "ब्राह्मणाद्यास्तु चण्डालपर्यन्ता मानवा भुवि । ते सर्वेऽतिथयो येषां ते सर्वातिथयः स्मृताः" । इत्युक्तत्वात् स्वेनैव स्वयमेव फलप्रदः कर्मफलदाता स नारायणः फलमपि अभूदिति श्रूयत इति शेषः । तादृशो मख इति पूर्वेण संबंधः ॥ २० ॥

ये चत्वारो दिनकरकुलक्षत्रसन्तानवल्ली-
मालाम्लानस्तबकमधुरा जज्ञिरे राजपुत्राः ।
रामस्तेषामचरमभवस्ताटकाकालरात्रि-
प्रत्यूषोऽयं सुचरितकथाकन्दलीमूलकन्दः ॥ २१ ॥

**शतानन्दः**—( लक्ष्मणं निर्दिश्य ) अयंचापरो लक्ष्मणः, दिष्ट्या भगवद्वसिष्ठप्रसूतं क्षत्रमृध्यते ।

**जनकः**—( विहस्य ) साधु भगवन्, अस्मादृशीषु प्रजासु प्रविश्य क्रीडसि,

क्रोधाग्नौ पुरुहूतहुंकृतिपराभूतित्रिशंकुत्रपा-
संपातज्वलिते जगत्त्रयमयीं त्वय्याहुतिं जुह्वति ।
संभ्रान्तोपनतस्य नाटितजरावैक्लव्यशीर्णाक्षराः
प्रत्यूहाय बभूवुरंबुजभुवो देवस्य चाटूक्तयः ॥ २२ ॥

---

उद्घातः आरंभः, पारायणं साकल्यं । "स्यादभ्यादानमुद्घात आरंभः" "साकल्यासंगवचने पारायणतुरायणे" इति चामरः । छिद्रापिधानदक्षिणया विघ्ननिवारणरूपगुरुदक्षिणादानेन । उपासांबभूवतुरित्यत्र "दयायासश्च" इत्याम् । **य इति ।** दिनकरकुलक्षत्राणां सूर्यवंश्यानां राज्ञां सन्तानवल्लीमालाया सन्ततिरूपलतापरंपरायाः अम्लानस्तबकवत् मधुराः मनोज्ञाः ये चत्वारो राजपुत्राः जज्ञिरे जाताः । तेषां निर्धारणे षष्ठी अचरमभवः अग्र्यः अयं रामः ताटकैव-कालरात्रिः मरणरात्रिः यातनाकरत्वसाम्यात्तथारूपणं । प्रत्यूषः प्रातःकालः सुचरितकथायाः पुण्यकथायाएव कन्दल्याः वृक्षविशेषस्य मूलकन्दः मूलांकुरः कारणमिति यावत् ॥ २१ ॥

वसिष्ठप्रसूतं तदनुग्रहेणोत्पादितं । प्रविश्य आत्मानमन्तर्धाय । अस्मादृशीषु प्रजास्वित्यनादरे सप्तमी अस्माननभिज्ञानिव कृत्वेति भावः । **क्रोधाग्नाविति ।** त्वयि पुरुहूतस्य इन्द्रस्य हुंकृत्या हुंकारेण पराभूतस्य अधःपातितस्य त्रिशंकोः त्रपासंपातेन लज्जारूपाज्यधारया ज्वलिते, क्रोधाग्नौ कोपवह्नौ जगत्त्रयमयीं तद्रूपां आहुतिं जुह्वति प्रक्षिपति सति त्रिशंकुपातनकोपेन जगन्नाशनोद्युक्ते सतीत्यर्थः । अत एव संभ्रान्तस्योपनतस्य च देवस्यांबुजभुवः ब्रह्मणः नाटितेन अभिनीतेन ( वस्तुतस्तस्य जराद्यभावात् ) जरावैक्लव्येन शीर्णाक्षराः अस्पष्टवर्णाः चाटूक्तयः प्रियवचनानि प्रत्यूहाय ( तादर्थ्ये चतुर्थी ) आसन्, वृद्धवचनगौरवेण स्वसंकल्पादुपारंसीनत्वशक्त्येति भावः ॥ २२ ॥

तमपि नाम भगवन्तं यजमानमन्ये गोपायितारः ।

**शतानन्दः**— राजर्षे एवमेतत् । किंपुनर्नदीक्षिष्यमाणाः क्रुध्यन्तीति राक्षितारं क्षत्रियमुपाददते

**जनकः**— (सहर्षं रामलक्ष्मणौ निर्वर्ण्य जनान्तिकम्) भगवन् शतानन्द,

**भवति न तथा भानोः शिष्ये गुरौ रमते नच**
**स्वयमपि मुनौ विश्वामित्रे गृहानधितिष्ठति ।**
**दशरथसुतावेतौ दृष्ट्वा यथोच्छ्वसितं मनः**
**शिथिलयति मे प्रत्यग्ज्योतिःप्रबोधसुखासिकीम् ॥ २३ ॥**

**शतानन्दः**— राजर्षे वैदेह, एवमेतत् । ममापि राजपुत्राविमौ साक्षात्कुर्वतो वत्से सीतोर्मिले न हृदयादवरोहतः ।

**जनकः**— (विश्वामित्रं प्रति) भगवन्,

**इदं वयो मूर्त्तिरियं मनोज्ञा वीराद्भुतोऽयं चारितप्ररोहः ।**
**इमौ कुमारौ बतपश्यतोमेकृतार्थमन्तर्नटतीवचेतः । ॥ २४ ॥**

जनान्तिकमिति; तल्लक्षणंतु "त्रिपताकाकरेणान्यानपवार्यान्तराकथां । अन्योन्यामन्त्रणं यत्तु तज्जनान्तिकमुच्यते । " इति । **भवतीति** । हे भगवन् शतानन्द, मे मनः एतौ दशरथसुतौ दृष्ट्वा उच्छ्वसितं अतीव हृष्टं सत् प्रत्यग्ज्योतिषः आत्मन. प्रबोधेन अपरोक्षज्ञानेन या सुखासिका सुखेनावस्थानं तां धात्वर्थनिर्देशे आसेर्ण्वुल् । यथा शिथिलयति अवस्रंसयति तथा भानोः शिष्ये गुरौ याज्ञवल्क्ये न भवति मे मन उच्छ्वसितमित्यनुवर्त्तते स्वयं गृहानधितिष्ठति आगते विश्वामित्रेमुनावपि न तथा रमते ॥ २३ ॥

**हृदयान्नावरोहत इति** तयोरिमावनुरूपौ वराविति चिन्तयामीति भावः । **इदमिति** । हे भगवन्, इदं वयः यौवनं अनेन विवाहोचितकालः सूचितः, यौवनसद्भावेऽप्यंगसौष्ठवस्य दुर्लभत्वमाशंक्याह इयं मूर्त्तिः अवयवविशेषः मनोज्ञा तदुभयसत्वेऽपि पौरुषस्य दुरापत्वमाशंक्याह वीराणां अद्भुतः आश्चर्यकरः यद्वा, वीररसप्रधानोऽद्भुतरसप्रधानश्च वीराद्भुतः अयं चरितप्ररोहः विक्रमांकुरः प्रतिग्रहान्तरत्वशंकां वारयितुमाह एतौ कुमारौ पश्यतो मे चेतः कृतार्थं कृतकृत्यं सत् अन्तर्नटतीव । बत आश्चर्यं ॥ २४ ॥

**विश्वामित्रः**—( सोत्प्रासं ) सखे सीरध्वज, हृदयमेवामन्त्रयस्व, किमर्थं कृतार्थमसीति ।

**जनकः**—( सखेदस्मितम् )

यद्गोत्रस्य प्रथमपुरुषस्तेजसामीश्वरोऽयं
येषां धर्मप्रवचनगुरुर्ब्रह्मवादी वसिष्ठः ।
ये वर्त्तन्ते तवच हृदये सुष्ठु संबंधयोग्या-
स्ते राजानो ममपुनरसौ दारुणः शुल्कसेतुः ॥ २५ ॥

**रामलक्ष्मणौ**—( सविमर्श )कथमस्मदीयाः कथाः प्रस्तूयन्ते ।

**विश्वामित्रः**—( सस्मितं ) यदि शुल्कसंस्थैवकेवलमन्तरायः, तन्नकिंचिदेतत् ।

**जनकः**—( सखेदविमर्श । अपवार्य ) भगवन्नांगिरस,

यद्विदन्नपि विदेहनन्दिनीपाणिपीडनविधेर्महार्घताम् ।
एवमाह मुनिरेष कौशिकस्तेन मुह्यति चिराय मे मनः ॥ २६ ॥

तदेव स्थाणवीयंवा धनुःस्यादिदमीदृशम् ।
एतदारोपणं नाम पणो वा मम जर्जरः ॥ २७ ॥

---

सोत्प्रासंमन्दास्मितेन सह । आमन्त्रयस्व पृच्छ । यदिति । अयं तेजसामीश्वरः सूर्यः यद्गोत्रस्य प्रथमपुरुषः कूटस्थः, एतेन महाकुलीनत्वं दर्शितं, ब्रह्मवादी ब्रह्मवदनशीलः ब्रह्मविदिति यावत् वसिष्ठः येषां धर्मस्य विधिनिषेधरूपस्य प्रवचने व्याख्याने गुरुः, एतेन शिष्टपरिगृहीतत्वं दर्शितं, तव हृदयेच ये वर्तन्ते अनुग्राह्यत्वेनेति शेषः, एतेन कुलस्योत्तरकालवृद्धिर्दर्शिता, ते राजानः सुष्ठु संबंधयोग्याः पुनः अपितु असौ मम शुल्कसेतुः जलप्रतिबंधकः सेतुरिव स्वातन्त्र्यनिरोधकःपणः दारुणः अतिकठिनः ॥ २५ ॥

संस्था प्रतिज्ञा । यदिति । विदेहनन्दिनीपाणिपीडनविधेः सीताविवाहस्य महार्घतां महामूल्यत्वमसुकरत्वामिति यावत्, विदन्नपि जानन्नपि एष कौशिको मुनिः एवमाह "न किंचिदेतत्" इत्युक्तवान् तेनहेतुना मे मनः चिराय मुह्यति अनध्यवसायाद्भ्राम्यति । वृ० रथोद्धता ॥ २६ ॥

तदिति । स्थाणवीयं शैवं "वृद्धाच्छः" तदिदं धनुरेव ईदृशं आरोपितं स्याद्वा; अथवा, एतदारोपणं नाम प्रसिद्धो मम पणो वा जर्जरः धनुष्यनारोपितेऽपि विश्वामित्रः कन्यादानाय निर्भन्त्स्यति वेति मम मोहइति भावः ॥२७॥

**शतानन्दः**— शान्तं पापं शान्तं पापं ।

**दुर्लङ्घ्यमीश्वरशरासनमप्रमोच्य-**
**शुल्कग्रहस्त्वमसि सर्वमिदं तथैव ।**
**किंत्वस्य राघवशिशोः सहजानुभाव-**
**गंभीरभीषणमतिस्फुटमेव वृत्तम् ॥ २८॥**

**जनकः**— (मुनिंप्रति) भगवन् कौशिक, चिरमपि विकल्पयन्न भवद्गिरामभिधेयमद्यापि निश्चिनोमि ।

**विश्वामित्रः**— तदुपदर्शय कार्मुकमैन्दुशेखरं रामभद्र एव व्याकरोतु ।

**रामः**— (सहर्षंस्वगतम् ।) कथमलीकविकल्पैरात्मानं विनोदयामि, नन्वयं ममैव कौतुकं पूरयितुमैश्वरं धनुरभ्यर्थयते भगवान् । (जनकं च दृष्ट्वा सविमर्शम्) अहह,

**बालेन संभाव्यमिदंच कर्म ब्रवीतिच प्रत्ययितो महर्षिः ।**
**इति ध्रुवं मन्त्रयते नृपोऽयं दत्ते किमत्रोत्तरमाकुलोऽस्मि ॥ २९**

**जनकः**— (मुहूर्तमिव स्थित्वा, दीर्घमुष्णंच निश्वस्य) भगवन् क तादृशं भागधेयमस्माकं येनैतस्मै रघुकुलकुमाराय सीतां प्रतिपाद्य चिराय चरितार्था भवामः । (रामोलज्जते)

---

शान्तमित्यव्ययमलमर्थे "अव्ययं वारणे शान्तं" इति मेदिनी । **दुर्लंघ्यमिति** । ईश्वरशरासनं पिनाकः दुर्लंघ्यं दुरारोपमेव, तथा त्वं अप्रमोच्यः अपरित्याज्यः शुल्कग्रहः प्रतिज्ञानिर्वाहः येन तथाविधएवासि इदं सर्वंतथैव यथार्थमेव, किन्तु अस्य राघवशिशोः रामस्य वृत्तं सहजानुभावेन नैसर्गिकमहिम्ना गंभीरं भीषणंच अतश्च अतिस्फुटमेव ताटकादिवधादतिप्रसिद्धमेव तन्माशङ्किष्ठा इति भावः ॥ २८ ॥

अभिधेयं अर्थं । ऐन्दुशेखरं शैवं । व्याकरोतु विवृतार्थंकरोतु । अलीकैः मिथ्याभूतैरप्रियरूपैर्वा विकल्पैः विविधतर्कैः "अलीकंत्वप्रियेऽनृते" इत्यमरः विनोदयामि खेदयामि । **बालेनेति** । इदं कर्म धनुरारोपणं बालेन संभाव्यं कर्त्तव्यत्वेन प्राप्तं, महर्षिः विश्वामित्रश्च प्रत्ययितः संजातप्रत्ययः सन् यद्वा आप्तः सन् "आप्तः प्रत्यायितास्त्रिषु" इत्यमरः, ब्रवीति 'रामभद्र एव व्याकरोतु, इत्याह, इति उक्तप्रकारेण अयं नृपः जनकः मन्त्रयते आलोचयति ध्रुवं अत्र विषये किमुत्तरं दत्ते इति आकुलोऽस्मि चिन्तया व्यथितोऽस्मि ॥ २९ ॥

**जनकः**— भगवन्,

**यत्कोदण्डसमर्पितत्रिभुवनच्छिद्रापिधानव्रतं**
**जातं रोहितमेव केवलमपज्यावंधमैन्द्रं धनुः ।**
**तेऽपिप्रेक्ष्य पुराशरासनमिदं मौर्वीकिणश्यामिका-**
**कस्तूरीसुरभीकृतानबिभरुर्व्यर्थं भुजान् भूभुजः ॥ ३० ॥**

**विश्वामित्रः**—सखेसीरध्वज, कथं पुण्यराशिमात्मानमवमन्यसे ।

**त्वद्भागधेयमपि तादृशमुत्सवाना-**
**मेतादृशां वयमपि प्रसमीक्षितारः ।**
**सन्त्येव विश्वभुवनाभयदानशौण्डाः**
**क्षोणीभुजः परममी न तु रामभद्रः ॥ ३१ ॥**

**लक्ष्मणः**—( स्वगतम् ) कथमुपाध्यायेनैवाभिहितं यदस्मि वक्तुकामः ।

**जनकः**—सत्यमाचिन्त्योहि मणिमन्त्रौषधीनामिव रघुराजडिंभानामनुभावः । परमेतद्ब्रवीमि ।

**गिरीशेनाराद्धं त्रिजगदवजैत्रं दिविषदा-**
**मुपादाय ज्योतिः सरासिरुहजन्मा यदसृजत् ।**

---

पतिपाद्य दत्वा । **यदिति** । ऐन्द्रं धनुः, येषां कोदण्डेसमर्पितं त्रिभुवनस्य छिद्रापिधानव्रतं उपद्रवनिवारणनियमः येन तथाभूतं सत् अत एव अपज्याबन्धं अवरोपितमौर्वीकं अतश्च रोहितमेव केवलं ऋज्वेव "तदेवऋजु रोहितं" इत्यमरः जातं इन्द्रतुल्यपराक्रमा ये राजान इत्यर्थः तेऽपि भूभुजः राजानः इदं शरासनं पुरा प्रेक्ष्य मौर्वीकिणस्य ज्याघातजनितमांसग्रन्थिचिन्हस्य श्यामिकाकस्तूर्या कार्ष्ण्यमृगमदेन सुरभीकृतान् वासितान् भुजान् व्यर्थं चालनाद्यशक्तत्वात् निष्फलं अबिभरुः धृतवन्तः जौहोत्यादिकस्य भृञोलङ् कुतोऽन्य इति भावः ॥ ३० ॥

**त्वदिति** । त्वद्भागधेयं त्वद्भाग्यमपि तादृशं रामादिभिर्जामातृसुखानुभवयोग्यं वयमपि एतादृशामुत्सवानां सीतारामविवाहादिरूपाणां प्रसमीक्षितारः निश्चयेन द्रष्टार एव, विश्वभुवनस्य अभयदाने शौण्डाः विख्याताः "शौण्डोमत्ते च विख्याते" इति विश्वः क्षोणीभुजो राजानः सन्त्येव परम् अपि तु अमी तु उक्ता राजानस्तु न रामभद्रः अयंतुतद्विलक्षणएवेति भावः ॥ ३१ ॥

अनुभावः महिमा, मणिश्च मन्त्रश्च ओषधिश्च तासां यथाऽऽकृत्याऽल्पत्वेऽपि वीर्येणमहत्वं तद्वदचिन्त्योहि अनिश्चेय एव अपरिमेयएववा, परं तथापि, **गिरीशेनेति** । सरासिरुहजन्मा ब्रह्मा दिविषदां देवानां ज्योतिः तेजः उपादाय

हृषीकेशो यस्मिन्निषुरजनि मौर्वी फणिपतिः
पुरस्तिस्रोलक्ष्यं धनुरिति किमप्यद्भुतमिदम् ॥ ३२ ॥

**शतानन्दः**— आः किमनयापिनाकप्रशस्तिप्रपञ्चिकया, तदेतत्कौशिकमेवप्रमाणयन्तोबहुमन्यामहे, अपिच किमशक्यं रामभद्रस्य।

उत्पादयन्किमपि कौणपकोटिहोमं
तेजोहुताशनसमिन्धनसामिधेनीम्।
यस्ताटकामकृत बालसखैः पृषत्कै-
रीषज्जयः स्फुटमनेन दशाननोपि ॥ ३३ ॥

( नेपथ्यार्धप्रविष्टः )

**पुरुषः**— देव, दशाननपुरोहितः शौष्कलोनाम महाराजं दिदृक्षते।

**शतानन्दः**—( सोद्वेगम् ) आः, आगच्छतु। ( पुरुषोनिष्क्रान्तः )

---

स्वीकृत्ययत् अकरोत् निर्मितवान् तदेतद्धनुः गिरीशेन शिवेन आराद्धं धृतं त्रिजगतः अवजैत्रं पराभवसमर्थं किं च यस्मिन् धनुषि हृषीकेशः विष्णुः इषुरजनि- बाणोबभूव फणिपतिः वासुकिः मौर्वी ज्या बभूव तिस्त्रः पुरः लक्ष्यं शरव्यं बभूवुः अतोहेतोः किमपि अचिन्त्यमहिम अत एव अद्भुतं च इदं धनुः इति हेतोः एतद्ब्रवीमि नान्यथेति भावः ॥ ३२ ॥

आः कोपे, पिनाकस्य प्रशस्तिप्रपञ्चिकया स्तुतिविस्तारेण। प्रमाणयन्तः प्रमाणं कुर्वन्तः रामभद्रस्येति "कृत्यानां कर्त्तरिवा" इति षष्ठी। रावणपुरोहितप्रवेशसूचनायाह, उत्पादयन्निति। यः किमपि निर्देष्टुमशक्यं कुणपं भक्षयन्तीति कौणपाः राक्षसाः शैषिकोऽण् तेषां कोट्या होमं उत्पादयन् उत्पादनहेतोः हेतौशता। तेजोहुताशनस्य प्रतापाग्नेः समिन्धनी उद्दीपनकारणिका (करणेल्युट्) यद्वा, समिन्धने (भावेल्युट्) सामिधेनी अग्निसमिन्धनर्क् "प्रवोवाजा अभिद्यवः" इत्याद्या तां समिधः धीयन्तेऽनयाऽग्नाविति सामिधेनी, अकृत कृतवान्। अनेन रामेण दशाननोपि ईषज्जयः अकृच्छ्रेण जेतुंशक्यः जेरकृच्छ्रार्थेखल् ॥ ३३ ॥

नेपथ्यार्धप्रविष्ट इति राजभयादिति भावः उक्तं च "अपवार्यतुनेपथ्ये भयाद्दौवारिकोविशेत्" इति, दिदृक्षते द्रष्टुमिच्छति। आः विवाहप्रस्तावसमये

**रामः**— (सव्यथ जनान्तिकम् ।) वत्स लक्ष्मण, कथमन्तरितोऽयमनेन दुरात्मना राक्षसेन कामारिकार्मुकपरिचर्यामहोत्सवः ।

**लक्ष्मणः**— आर्य नकेवलम् । इत्यर्धोक्ते हसति । रामः (लक्ष्मणयरोषस्मितं) तमपांगेन पश्यति (प्रविश्य)

**शौष्कलः**— (प्रत्येकमवलोक्य । स्वगतम्) कथमत्रैव जनकशतानन्दाभ्यां पुरस्कृतो विश्वेषामस्माकमप्यामित्रो विश्वामित्रः । तिष्ठतु हतकोयं । (हस्तं दक्षिणेन दृष्ट्वा) अये कावेतौ क्षत्रियब्रह्मचारिणौ ।

पुण्यलक्ष्मीकयोः कोऽयमनयोः प्रतिभासते ।
मौञ्ज्यादिव्यञ्जनैः शान्तो वीरोपकरणो रसः ॥ ३४ ॥

निसर्गोदग्रमिदंच दारकद्वयम् ।

पार्श्वे त्रयाणामेतेषामृक्सामयजुषामिव ।
रूपाभ्यां विधिमन्त्राभ्यामथर्वेव प्रदीप्यते ॥ ३५ ॥

(विमृश्य) नूनं लक्ष्मणाद्वितीयो रामहतकः कौशिकमनुप्लवमानो मिथिलामुपस्थितः । (सक्रोधशोकं ।) हावत्से सुकेतुनन्दिनि ताटके, कथमीदृशान्मनुष्याडिं-

---

किमर्थं राक्षसागमनमिति पीडायां. अन्तरितः व्यवहितः न केवलमिति अपि तु सीताविवाहोत्सवोपीत्यर्धोक्त्यर्थः तस्य परिहासवचनत्वेन नर्माख्यं प्रतिमुखसंध्यंगमुक्तं भवति । "परिहासवचोनर्म" इति तल्लक्षणोक्तेः हतकः दुष्टः । हस्तं दक्षिणेन हस्तस्य दक्षिणभागसमीपे दक्षिणशब्दादेनप् । पुण्येति । पुण्यलक्ष्मीकयोः अनयोः मौञ्ज्यादिभिः व्यञ्जनैः ब्रह्मचारिचिह्नैः आदिशब्देन क्षत्रियव्यञ्जनैर्धनुरादिभिश्च इत्थंभावे तृतीया लक्षित इति भावः वीरः वीररसः उपकरणं उपसर्जनं यस्य सः कोऽयं अत्यद्भुतः शान्तोरसः प्रतिभासते रामस्य धीरोदात्तत्वेन शान्तरसप्राधान्यादि ॥ ३४ ॥

निसर्गेत्याद्युत्तरश्लोकेनान्वेति इदं दारकद्वयं पुत्रद्वयं । पार्श्वे इति । ऋक्सामयजुषामिव स्थितानामेतेषां त्रयाणां विश्वामित्रशतानन्दजनकानां पार्श्वे समीपे अथर्वेव तस्य ऋगाद्यानन्तर्योक्तत्वात्पार्श्ववर्तित्वं विधिमन्त्राभ्यामिव स्थिताभ्यां रूपाभ्यां सह प्रदीप्यते प्रवर्तकत्वेन विधेः प्राधान्याद्राममूर्त्योचतदुपकारकत्वेन मन्त्रस्याप्राधान्याल्लक्ष्मणमूर्त्या च यथाक्रममुत्प्रेक्षा । अथर्वणोऽभिचारदाक्ष्यवदनयोरप्याखिलराक्षससंहारसामर्थ्यं नैसर्गिकमिति भावः ॥ ३५ ॥

अनुप्लवमानः अनुसरन् दैवदुर्विपाकः मरणमिति यावत् । अनरण्योनामेक्ष्वाकुवंश्यो राजा रावणेन हत इत्युत्तररामायणकथा । अनात्मवेदिता अविवेकः

भात्तादृशो दैवदुर्विपाकस्ते संवृत्तः । कष्टमनरण्यवंशजन्मनः क्षत्रियवटोरनात्मवेदिता ।

सुन्दासुरेन्द्रसुतशोणितशीधुपाना-
दुन्मत्तमार्गणनिरर्गलवीरगर्वः ।
द्रोहं चकार दशकण्ठकुटुंबकेऽपि
सोऽयं वटुः कुशिकनन्दनयज्ञबंधुः ॥ ३६ ॥

भवतुद्रक्ष्याम्यस्य भुजशौण्डीर्यम् । (उपसृत्य) अपि सुखिनो यूयं जनकमिश्राः ।

**जनकः**— स्वागतं पौलस्त्यपुरोहितस्य । इत आस्यतां । (शौष्कलस्त-थाकरोति). कच्चित् कुशलं ते राज्ञो रावणस्य ।

विपदां प्रतिकर्त्तारो यस्योपायैरथर्वभिः ।
त्वादृशाः सन्ति किं तस्य कल्याणमनुयुज्यते ॥ ३७ ॥

**शौष्कलः**—(विहस्य) श्रोत्रिय सीरध्वज, प्रत्यकरिष्यामैववयं, यदि स्वभुजमण्डलीमत्तवारणवलयितोरःपीठप्रासादसुस्थितचतुर्दशभुवनविजयलक्ष्मीमहा-न्तःपुरे लंकापतौ किमपि प्रतिकार्यमभविष्यत् । पश्य ।

यच्चेष्टाः समनीकसीमनि परित्रस्तः पराञ्चन्नपि
प्रत्यक्षीकुरुते सहस्रनयनः पृष्ठाङ्कवैरक्षिभिः ।
चक्रे वर्त्म च नागलोकजयिनीं यात्रामिव प्रस्तुवन्
यः कैलासमुदस्य कीदृशमपादानंतु तस्यापदाम् ॥ ३८ ॥

---

सुन्देति सुन्दासुरेन्द्रसुतस्य सुबाहुनाम्नो राक्षसस्य शोणितशीधुपानात् रक्त-रूपमद्यपानेन उन्मत्तैः क्षीबैः मार्गणैः बाणैः निरर्गलः अप्रतिबंधप्रसरो वीरगर्वो यस्य सः अत एव कुशिकनन्दनस्य यज्ञबंधुः यज्ञरक्षकः सोऽयंवटुः रामः दशकण्ठकुटुंबकेऽपि रावणबंधुजनेऽपि द्रोहं चकार ॥ ३६ ॥

विपदामिति । यस्य त्वादृशाः अथर्वभिः उपायैः तदुक्तमन्त्रप्रयोगैः विपदां प्रतिकर्त्तारः प्रतिविधानकारिणः सन्ति तस्य कल्याणं किमनुयुज्यते स्वतः सिद्धत्वादिति भावः काक्वानप्रष्टव्यमेव नित्यामंगलत्वात्तस्येति ध्वनिः ।३७

स्वभुजमण्डल्येवमत्तवारणाः गन्धद्विपाः तैर्वलयितं वेष्टितं उरः पीठ-प्रासादो विहारस्थानं तत्र सुस्थितायाः सुप्रतिष्ठितायाः चतुर्दशभुवनस्य पातालादिसत्यान्तभुवनानां विजयलक्ष्म्याः महान्तःपुरे एकान्तविहारस्थाने यद्वा विजयलक्ष्मीमहान्तःपुरमहिषी यस्य तस्मिन् प्रतिकार्यमभाविष्यादिति "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" इति लृङ् । यच्चेष्टा इति । सहस्रनयनः इन्द्रः

**लक्ष्मणः**—( सामर्षम् । जनान्तिकम् । ) आर्य कथं सहस्रभुजार्जुनवालिभ्यामालीढशौर्यसारो दुरात्मा रावणः प्रस्तूयते ।

**रामः**— वत्स, मामैवम् । महान्तोहितादृशाः । किंच ।

स्यातां नाम कपीन्द्रहैहयपती तस्यावगाढान्तर-
स्थामानौ दशकंधरस्य महती स्कंधप्रतिष्ठा पुनः ।
सद्यः पाटितकण्ठकीकसकणाकीर्णां यदंसस्थलीं
स्वेनेभाजिनपल्लवेन मुदितः प्रास्फोटयद्धूर्जटिः ॥ ३९ ॥

अपि च ।

मघोनस्तद्घोरं कुलिशमलसीकृत्य समरे
भुनक्ति स्वाराज्यं त्रिभुवनभटोऽयं दशमुखः ।

---

समनीकसीमनि युद्धप्रदेशे परित्रस्तः भीतस्सन् अत एव पराञ्चन्नपि पलायमानोऽपि पृष्ठोद्भवैरक्षिभिः नेत्रैः यस्य रावणस्य चेष्टाः प्रत्यक्षीकुरुते पश्यति एतेन देवलोकविजयो दर्शितः, यः नागलोकजयिनीं पाताललोकजयशीलां यात्रां प्रस्तुवान्निव प्रक्रममाण इव कैलासं उदस्य उद्धृत्य वर्त्मचक्रेच कैलासस्थानमूलद्वारा पातालगमनमार्गं कृतवान्, एतेन भूलोकपाताललोकजयो दर्शितः तस्य रावणस्य आपदां अपादानं कारणं कीदृशं किंप्रकारकं तस्यापद्धेतुरेवनास्तीति भावः ।३८।

सहस्रभुजार्जुनः कार्तवीर्यः । आलीढः सम्यग्ज्ञातः शौर्यस्य सारः बलं यस्य सः प्रस्तूयते प्रकर्षेण स्तूयते यद्वा प्रस्तावार्हः क्रियते । **स्यातामिति** । कपीन्द्रहैहयपती वालिकार्तवीर्यौ तस्य रावणस्य अवगाढं अवगतं आन्तरस्थाम अन्तर्बलं याभ्यांतौ सापेक्षत्वेऽपि गमकत्वात्समासः स्यातांनाम नामेत्यभ्युपगमे, पुनः तथापि दशकंधरस्य स्कंधप्रतिष्ठा भुजाशिरःप्रदेशमाहात्म्यं महती धूर्जटिः शिवः तत्क्षणे पाटितस्य कृत्तस्य कण्ठस्य कीकसकणैः अस्थिखण्डैः आकीर्णां व्याप्तां यस्य रावणस्य अंसस्थलीं स्वेन इभाजिनपल्लवेन गजचर्माग्रेण पल्लवशब्दोऽत्र लाक्षणिकः, यद्वा पल्लववन्नूतनत्वमापादितेन गजचर्मणा मुदितः हृष्टः सन् प्रास्फोटयत् ममार्ज ॥ ३९ ॥

इतश्चायं स्तुत्य एवेत्याह । **मघोन इति** । त्रिभुवनभटः त्र्यैलोक्यैकवीरः "भटःस्यात्पुंसिवीरेच" इति विश्वः, अयं दशमुखः समरे युद्धे घोरं भयंकरं

श्रियो नानास्थानभ्रमणरमणीयां चपलता-
मवच्छिद्य स्वस्मिन्नपि भुजवने वासयति यः ॥ ४० ॥

**शतानन्दः** (शौष्कलं प्रति ।) ब्रह्मन्, सत्यमयमीदृशो राक्षसराजः ।

**शौष्कलः**— राजर्षे,

संतुष्टे तिसृणां पुरामपि रिपौ कण्डूलदोर्मण्डल-
क्रीडाकृत्तपुनःप्ररूढशिरसो वीरस्य लिप्सोर्वरम् ।
याच्ञादैन्यपराञ्चि यस्य कलहायन्ते मिथस्त्वंवृणु
त्वंवृणिवत्यभितो मुखानि स दशग्रीवः कथं कथ्यते ॥ ४१ ॥

ऽपि

कन्यामयोनिजन्मानं वरीतुं प्राजिघाय माम् ।
पुरोधसा गौतमेन गुप्तस्य भवतो गृहान् ॥ ४२ ॥

---

मघोनः इन्द्रस्य तत् कुलिशं वज्रं अलसीकृत्य निरस्य स्वाराज्यं स्वर्गं भुनक्ति पालयति "अनवने" इति निषेधाद्भुजेर्नात्मनेपदं । यः रावणः नानास्थानभ्रमणेन बहुराजसंक्रमणेन रमणीयां श्रियः चपलतां अवच्छिद्य दूरीकृत्य स्वस्मिन् भुजवनेऽपि स्वभुजसमूहएव वासयति स्थापयति । यथा स्त्रियाः स्वाच्छन्द्यंनिरुध्य स्वस्मिन्नेवास्थिरचित्तां कुर्यात्तद्वत्कृतवानितिभावः तस्माद्रावणः स्तुत्यएवेतिभावः॥

इदानीमागमनकार्यंवक्तुमाह । संतुष्टइति । तिसृणां पुरां रिपौ शिवे संतुष्टेऽपि प्रसन्नेसत्यपि, कण्डूलस्य कण्डूविशिष्टस्य दोर्मण्डलस्य भुजसमूहस्य क्रीडया कृत्तानि छिन्नानि पुनःप्ररूढानि पुनरंकुरितानि च शिरांसि यस्य तस्य वरं लिप्सोः लब्धुकामस्य "अत्र लोपोऽभ्यासस्य" इति सनिलभेरभ्यासलोपः । यस्य वीरस्य मुखानियाच्ञादैन्यात् याचनारूपकार्पण्यात् पराञ्चि पराङ्मुखानि सन्तित्वं वरं वृणु, इत्यभितः साकल्येन "समीपोभयतः शीघ्रसाकल्याभिमुखेऽभितः" इत्यमरः । मिथः कलहायन्ते कलहंकुर्वन्ति "शब्दवैरकलह" इत्यादिना कर्तरि क्यङ् सः तादृशमानसंपन्नः दशग्रीवः कथं कथ्यते वर्णयितुमशक्य इत्यर्थः ॥४१

कन्यामिति । सोऽपि शिवप्रसादेप्यर्थित्वहीणः रावणोऽपि अयोनिजां कन्यां सीतां वरीतुं प्रार्थयितुं "वृतोवा" इति दीर्घः पुरोधसा गौतमेन शतानन्देन गुप्तस्य भवतः गृहान् प्रति मां प्रजिघाय प्रेषितवान् "हिगतौ" इति धातोः लिट् "हेरचङि" इत्यभ्यासात्परस्यकुत्वं ॥ ४२ ॥

**विश्वामित्रः**—सखे सीरध्वज, पश्य पश्य । पिनाकसंदर्शनोल्लासिका विसंस्थुलचित्तवृत्तिरिव वत्सो रामभद्रः ।

**जनकः**— ( विहस्य ) .

किमेतदेव भगवन्नभिधीये पुनस्तराम् ।
इक्ष्वाकवो विदेहाश्च परवन्तस्त्वया वयम् ॥ ४३ ॥

**शौष्कलः**— भोसीरध्वज, किमिदमस्माकमाकाशवचनं उतदुष्परिच्छेद एवायमर्थः यदुत्तरमपि न प्रतिपद्यसे । पश्य ।

दातव्येयमवश्यमेव दुहिता कस्मैचिदेनामसौ
दोर्लीलामसृणीकृतत्रिभुवनो लंकापतिर्याचते ।
तत्किं मूढवदीक्षसे ननुकथागोष्ठीषु नः शासति
त्वद्वृत्तानि परोरजांसि मुनयः प्राच्या मरीच्यादयः ॥४४॥

**शतानन्दः**— ब्रह्मन् चिरायदत्तमेवोत्तरमस्माभिः ।

**शौष्कलः**— हन्त राजपुत्रीसमर्पणादन्यत्कीदृशंतत् ।

---

पिनाकस्य दर्शनोल्लासिकया दर्शनेच्छया विसंस्थुला चित्तवृत्तिः मनोव्यापारो यस्य सः लक्ष्यत इति शेषः किमिति । हे भगवन् विश्वामित्र एतदेव "धनुर्दर्शय" इति वचनमेव पुनस्तरां भूयोभूयः अभिधीये अभिहितो भवामि इक्ष्वाकवः तद्वंश्या राजानः विदेहाः तद्वंश्या उभयत्र तद्राजत्वाद्बहुषु लुक् ते इक्ष्वाकवो वयं च वयं "त्यदादीनि सर्वैर्नित्यं" इत्येकशेषः त्वयापरवन्तः त्वदधीना इत्यर्थः तस्माद्यथेष्टं कुर्विति भावः ॥ ४३ ॥

आकाशवचनं विजने कथितं अरण्यरुदितमितिवत् । दुष्परिच्छेदः निश्चेतुमशक्यः । न प्रतिपद्यसे न ददासि । दातव्येति । इयं दुहिता पुत्री कस्मैचित् यस्मैकस्मैचिद्वराय दातव्यैव । अनुरूपवरालाभान्नदीयतेचेत् तत्राह दोर्लीलया बाहुक्रीडयैव मसृणीकृतं स्ववशीकृतं त्रिभुवनं येन सः असौ लंकाधिपः याचते तत् किं किमर्थं मूढवत् अविवेकिवत् ईक्षसे परिचिन्तयसि मूढएवाहमिति चेत्तत्राह ननुरनुनये प्राच्याः पुरातनाः मरीच्यादयः मुनयः नः कथागोष्ठीषु कथासल्लापेषु "गोष्ठीसमासल्लापयोस्त्रियां" इति मेदिनी । त्वद्वृत्तानि परोरजांसि निर्मलानि शासति कथयन्ति अतो न त्वं मूढः तस्मात्कन्यादानं रावणाय प्रतिजानीहीति भावः ॥ ४४ ॥

**शतानन्दः—**

**शांभवं चापमारोप्य योस्मानानन्दयिष्यति ।**
**पूर्णपात्रमियं तस्मै मैथिली कल्पयिष्यते ॥ ४९ ॥**

**शौष्कलः**— शान्तं पापं, अहह युष्माकममून्यक्षराणि ।

**तेनाङ्गुलीशतनिघृष्टकुबेरशैल-**
**कण्ठोक्तदोःकुलिशकन्दलविक्रमेण ।**
**माहेश्वरेण महता दशकंधरेण**
**कर्मेदृशं कथमनार्यमपि क्रियेत ॥ ४६ ॥**

**शतानन्दः**— ( विहस्य )

**ब्रह्मन्नयं क्षत्रियगोत्रजन्मा दृढप्रतिज्ञो जनकाधिराजः ।**
**न चापमारोपयिता दशास्यस्त्वमेव जानासि यदुत्तरं नः ॥ ४७ ॥**

---

चिराय प्रागेव । **शांभवमिति** । पूर्णपात्रं पारितोषिकं यौतकादि "उत्सवेषु सुहृद्भिर्यद्बलादाकृष्य गृह्यते । वस्त्रभूषादिकं पूर्णपात्रं तत्कथितं बुधैः" इति यादवः स्पष्टमन्यत् ॥ ४९ ॥

युष्माकमपीति शेषषष्ठी, रावणस्य बलं शिवभक्तिञ्च विजानतामपीत्यपेरर्थः अमून्यक्षराणि ईदृशानि वचनानि । तदेवाहतेनेति । अंगुलीशतेन निघृष्टेन उद्धृतेन (विंशतिभुजत्वादंगुलीनां शतत्वं एतेनेषत्करत्वं सूचितं) कुबेरशैलेन कैलासेन (एतेन शिवद्रोहाभावः शत्रुषु विक्रमश्च सूचितः) कण्ठोक्तः स्पष्टमुक्तः दोःकुलिशकन्दलानां भुजरूपवज्रांकुराणां विक्रमः यस्य तेन । महेश्वरः (शिवः) भक्तिरस्य तेन महता पूज्येन तेन दशकंधरेण ईदृशं शिवधनुरारोपणरूपं अनार्यं स्वोपास्यद्रोहादूर्ह्यं कर्मापि क्रियेत अतस्त्वद्वचनान्यसमीक्ष्योक्तानीति भावः ॥ ४६

विहस्य अशक्तिगूहनार्थं माहेश्वरत्वव्याजश्रवणेन हासं कृत्वा **ब्रह्मन्निति** । **ब्रह्मन्** शौष्कल क्षत्रियगोत्रजन्मा अयं जनकः दृढप्रतिज्ञः सत्यसन्धः प्रतिज्ञां नान्यथा कुर्यादिति भावः, दशास्यश्च चापं धनुः नारोपयिता लुट् नारोपयिष्यति अशक्तत्वादिति भावः, एवं स्थिते नः यदुत्तरं तत्त्वमेव जानासि तस्माद्विफलां याच्ञां मुञ्चेति भावः । अर्थापत्त्यलंकारः ॥ ४७ ॥

शौष्कलः— (सहासम्)

अंगिराश्च पुलस्त्यश्च प्रभवौ परमेष्ठिनः ।
पौलस्त्ये ज्ञातिधर्मोऽयं तत्किमांगिरसस्य ते ॥ ४८ ॥

(सामर्षम्) माहेश्वरो दशग्रीवः क्षुद्राश्चान्ये महीभुजः ।
पिनाकारोपणं शुल्कं हा सीते किं भविष्यसि ॥ ४९ ॥

शतानन्दः—(सरोषव्ययम्) ब्रह्मन् एवमनेन धनुषा किं किमपि विनयाधिकारिकमध्याप्यते । यदद्य परं माहेश्वरस्ते रावणोऽपि संवृत्तः ।

शंभोराधारमचलमुत्क्षेप्तुं भुजकौतुकी ।
माहेश्वरो धनुः क्रष्टुमहो ते दशकंधरः ॥ ५० ॥

(शौष्कलवर्जमन्ये स्मयन्ते ।)

शतानन्दः— (सरोषावहित्थं) रामभद्र,

तदेतदारोपय चापमीशप्रकोष्ठभस्मप्रतिरूषितज्यम् ।
शौर्योष्मभाजां भजतां मुखानि स्वबाहुमौर्वीकिणकालिमैव ॥ ५१ ॥

---

अंगिरा इति । अंगिराः शतानन्दस्य कूटस्थः पुलस्त्यः रावणस्य कूटस्थः परमेष्ठिनः ब्रह्मणः प्रभवौ पुत्रौ । तत् आंगिरसस्य ते पौलस्त्ये रावणे किमयं ज्ञातिधर्मः कार्यविघटनं ॥ ४८ ॥

सामर्षं प्रत्याकरणजनितरोषेणसह । माहेश्वर इति । दशग्रीवः माहेश्वरः शिवभक्तः अतस्तद्धनुरारोपणे न प्रवर्तेतेति भावः अन्ये महीभुजः राजानः क्षुद्राः तदारोपणे अशक्ताः, शुल्कं कन्यामूल्यं पिनाकारोपणं, हा कष्टं किं भविष्यसि कथं ते गतिर्भविष्यतीति न जान इति भावः ॥ ४९ ॥

अनेन धनुषा पिनाकहेतोः, किमपि अपूर्वं, अधिकारेण निर्वृत्तं आधिकारिकं विनयस्याधिकारिकं विनयाधिकारिकं नीतितत्वमिति यावत्, एवं अध्याप्यते किं किंवा शिक्ष्यते । शंभोरिति । शंभोः शिवस्य आधारं आश्रयभूतं अचलं कैलासं उत्क्षेप्तुं उद्धर्तुं भुजकौतुकी दशकंधरः धनुः क्रष्टुं माहेश्वरः शिवभक्तः । शिवस्य वासस्थानमुत्क्षिप्य तद्धनुरारोपणे माहेश्वरत्वकथनं स्वाशक्तिगोपनोपाय इति स्पष्टमेवेति भावः ॥ ५० ॥

स्मयन्ते ईषद्धसन्ति "अवहित्याकारगुप्तिः" इत्यमरः । तदिति । ईशस्य प्रकोष्ठभस्मना मणिबंधोर्ध्वभागलिप्तविभूत्या प्रतिरूषिता लिप्ता ज्या यस्य तत्

**शौष्कलः**— (सक्रोधं) आः शतानन्द, किं भ्रान्तोसि । यदेवमस्मदग्र महाराजं पौलस्त्यमधिक्षिपसि । कथं ते माणिक्यपरिहारेण गैरिकपरिग्रहः । यदेवं दशग्रीवमवमन्यमानस्य मनुष्यपोतेऽनुरागः । यद्विवा भगवन्तं गौतममपहाय ढुलिचक्षुषि सहस्राक्षे भवतो मातुरपि कथमहल्यायाः ।

**शतानन्दः**—(सरोषहासं) किमात्थ रे, अस्मदग्रे इति ।

**विश्वामित्रः**—(सप्रणयरोषमिव) वत्स गौतम, विरम शुष्ककलहात् । अतिथिरयमस्माकमुपाध्यायो दशकंधरस्य । (व्यथमानौ रामलक्ष्मणौच दृष्ट्वा विहस्य) वत्स राम, धनुर्गृहोपसर्पणमनुजानाति जनकान्वयपुरोधाः ।

**रामः**— यदादिशन्ति गुरवः (इति सविनयलज्जाकौतुकं परिक्रम्य लक्ष्मणेन सह निष्क्रान्तः ।)

**शौष्कलः**— राजर्षे सीरध्वज, धन्योसि । पुरा किल परमेश्वरपरिचर्यापदाने कृत्तेषु नवसु मूर्धसु ।

> वरं तादृक्कर्माद्भुतसदृशमुत्प्रेक्ष्य किमपि
> भरोहद्वैलक्ष्यं पुरविजयिनो येन ददृशे ।
> तदुन्मार्ष्टुं येन त्रिभुवनमपि प्रार्थितमिदं
> तदेव त्वय्यर्थीभवति दशमं रावणमुखम् ॥ ५२ ॥

---

तत् चापं आरोपय सज्यीकुरु, शौर्येण ऊष्मभाजां गर्वितानां मुखानि कर्म स्वबाहूनां मौर्वीकिणस्य ज्याकर्षणजातकिणस्य कालिमैव कार्ष्ण्यमेव भजतां आश्रयतु । असंगत्यलंकारः ॥ ५१ ॥

आः कोपे अधिक्षिपासि दुर्वलमिव निन्दसि, गैरिकपरिग्रहः काचमणिस्वीकरणं । मनुष्यपोते मनुष्यार्भके "पोतः पाकोऽर्भको डिंभ" इत्यमरः यद्विवा यथावा ढुलिचक्षुषि कमठीचक्षुस्समानचक्षुषि "कमठी ढुलिः" इत्यमरः एतेन प्रत्यक्षनिष्ठुरभाषितेन वज्रं नाम संध्यंगमुक्तं भवति "वज्रं प्रत्यक्षनिष्ठुरं" इति तल्लक्षणोक्तेः । रे इति हीनसंबोधनार्थं इति प्रकाशं । शुष्ककलहाद्विरम निष्प्रयोजनं कलहं माकुरु । व्यथमानौ चापारोपप्रसंगविच्छेदाद्व्याकुलौ । धनुर्गृहस्य उपसर्पणं गमनं । अनुजानाति अनुमन्यते । सविनयलज्जाकौतुकं । गुरुसान्निध्यकृतविनयेन स्वविवाहोचितप्रवृत्तिकृतलज्जया चापदर्शनकृतकौतुकेन च सह, परिचर्यापदाने पूजाकर्मणि । वरमिति । येन दशमुखेन कर्त्रा, तादृशः शिरोऽर्पनरूपस्य कर्मणः तपसः अद्भुतसदृशं आश्चर्यतुल्यं यत्किंचिदयमपातिथि।वर् वरं

**शतानन्दः**—(उत्थाय । नेपथ्यावलोकितकेन ॥ सहर्षाद्भुतम् । ) पश्यन्तु भवन्तः

यस्मिन्नेकधनुष्मतो भगवतः खट्वांगपाणेरसा-
वाकृष्टो गुणतां गतोऽप्यहिपतिः कर्णावतंसायते ।
उन्मुक्तश्च पुरेव भूषणपदं याति प्रकोष्ठान्तरे
( जनक औत्सुक्यं नाटयति )
काकुत्स्थेन तदेव भार्गवगुरोः कोदण्डमाकृष्यते ॥ ५३ ॥

( नेपथ्ये कलकलः । सर्वे सातंकं पश्यन्ति ) ( पुनर्नेपथ्ये )

**लक्ष्मणः**—

रुंधन्नष्ट विधेः श्रुतीर्मुखरयन्नष्टौ दिशः क्रोडय-
न्मूर्तीरष्ट महेश्वरस्य दलयन्नष्टौ कुलक्ष्माभृतः ।
तान्यक्ष्णा बधिराणि पन्नगकुलान्यष्टौ च संपादय-
न्नुन्मीलत्ययमार्यदोर्बलदलत्कोदण्डकोलाहलः ॥ ५४ ॥

---

उत्प्रेक्ष्यपर्यालोच्य तदभावादितिशेषः अप्रेक्ष्येति पाठे अलब्ध्वेति भावः किमपि अतितरां प्ररोहत् संजातं पुरविजयिनः शिवस्य वैलक्ष्यं लज्जा ददृशे दृष्टं । येन च मुखेन तत् शिववैलक्ष्यं उन्मार्ष्टुं स्वोपास्यस्य स्वमूलकं तन्माभूदिति कृत्वा परि- हर्तुं त्रिभुवनमपि प्रार्थितमभूत् अपिशब्देन स्वतःसिद्धमपि त्रैलोक्याधिपत्यं प्रार्थितं । तदेव दशमं रावणमुखं त्वयि अर्थीभवति अभूततद्भावे च्विः । तस्मात्त्वं धन्योसीति पूर्वेण संबंधः ॥ ५२ ॥

यस्मिन्निति । असौ अहिपतिः वासुकिः यस्मिन् धनुषि गुणतां मौर्वीत्वं गतोपि प्राप्तोपि आकृष्टः सन् एकधनुष्मतः एकवीरस्य भगवतः ऐश्वर्यादिसंपन्नस्य खट्वांगं पाणौ यस्य तस्य खट्वांगपाणेः शिवस्य कर्णावतंसायते कर्णभूषणवदा- चरति आचारेक्यङ् । उन्मुक्तश्चधनुषः अवरोपितः सन् पुरेव पुर्ववत् प्रकोष्ठस्यमणि- बंधोपरिभागस्य अन्तरे मध्ये भूषणपदं कंकणतां याति गच्छति । औत्सुक्यं स्वप्रतिज्ञानिर्वाहकृतहर्षः । भार्गवगुरोः शिवस्य तदेव त्रिपुरविजयसमर्थमेव कोदण्डं काकुत्स्थेन आकृष्यते आयम्यते, अत्र भार्गवगुरोरित्युक्तिः भाविनो रावणजयस्य सौकर्यसूचनाय ॥ ५३ ॥

सातंकं आकस्मिकशब्दश्रवणजनितशंकया सह । रुन्धन्निति । अयं आर्यस्य दोर्बलेन बाहुबलेन दलतः स्फुटतः कोदण्डस्य कोलाहलः शब्दः विधेः ब्रह्मणः अष्ट चौराभावपक्ष इदं रूपं श्रुतीः श्रोत्राणि रुन्धन् आवृण्वन्

**जनकः**—( सहर्षविषादाद्भुतम् । ) कथं भग्नमपि ।

**शतानन्दः**—

वैदेहीकरबंधमंगलयजुःसूक्तं द्विजानां मुखे
नारीणांचकपोलकंदलतले श्रेयानुलूलुध्वनिः ।
पेष्टुंच द्विषतामुपश्रुतिशतं मध्येनभो जृंभते
रामक्षुण्णमहोक्षलाञ्छनधनुर्दंभोलिजन्मा रवः ॥ ५५ ॥

**शौष्कलः**—( सविषादाद्भुतं । आत्मगतं । ) अहो दुरात्मनः क्षत्रियस्फुलिंगस्य सर्वकर्मीणमूष्मायितं ।

**जनकः**—( सहर्षपादयोर्निपत्य । ) भगवन् गाधिनन्दन,

इयमात्मगुणेनैव क्रीता रामेण मैथिली ।
स्वगृहव्यवहारेण लक्ष्मणायोर्मिलाऽस्तु नः ॥ ५६ ॥

---

बधिरयन्नित्यर्थः, अष्टौ दिशः विदिशामपि दिक्त्वाविशेषादष्टत्वं तासां । मुखरयन् नादयन् महेश्वरस्य अष्ट मूर्तीः पृथ्व्याद्याः प्रसिद्धाः क्रोडयन् एकीकुर्वन् व्याप्नुवन्नितियावत् अष्टौ कुलक्ष्माभृतः वर्षप्रमाणपर्वतान् दलयन् विदारयन् अष्टौ तानि पन्नगकुलानि ( अनन्तवासुकितक्षककार्कोटकपद्ममहापद्मशंखगुलिकाख्यानि ) अक्ष्णा बधिराणि संपादयन् कुर्वन् चक्षुःश्रवस्त्वात्तेषामक्ष्णा बाधिर्यं "येनांगविकार" इति तृतीया । उन्मीलति उज्जृंभते ॥ ५४ ॥

वैदेहीति । रामेण क्षुण्णात् दलितात् महोक्षलाञ्छनस्य वृषभध्वजस्य धनुर्दंभोलेः पिनाकवज्रात् ( रूपकं ) जन्म यस्य सः रवः शब्दः द्विजानां ब्राह्मणानां मुखे वैदेहीकरबंधस्य अनन्तरभाविनः सीताविवाहस्य मंगलयजुःसूक्तं अभ्युदयमन्त्रघोषः सन् नारीणां कपोलकन्दलतलेच गण्डप्रदेशेच श्रेयान् प्रशस्यतरः उलूलुध्वनिः तस्मिन्नेवमंगले उलूलुरिति शब्दः सन्, विवाहकाले स्त्रियः "उलूलुः" इति शब्दायन्त इति प्रसिद्धिः, द्विषतां शत्रून् "जासिनी" त्यादिना कर्मणिषष्ठी पेष्टुं चूर्णयितुं मध्येनभः आकाशमध्ये उपश्रुतिशतं अमंगलसूचकध्वनिविशेषशतंसत् समुज्जृंभते वर्धते ॥ ५५ ॥

सविषादाद्भुतं स्वाम्यर्थनानैराश्यकृतदुःखेन रामस्य कौमारविक्रमकृताश्चर्येणच । सह ऊष्मायितं ऊष्मोद्गमनं तेजःस्फुरणमिति यावत् "बाष्पोष्मभ्यामुद्गमने" इति क्यङ् सर्वकर्मीणं सर्वकर्मव्यापकं सर्वातिशायीत्यर्थः "तत्सर्वादे" रित्यादिना खः इयमिति । इयं मैथिली रामेण आत्मगुणेनैव धनुरारोपणपणनिर्व-

**विश्वामित्रः**— (सस्मितं) सखे सीरध्वज, यदभिरुचितं भवते ।

**शतानन्दः**— (जनकस्यकर्णे एवंमिति कथयित्वा) भगवन् कौशिक, ममापि चन्द्रशेखरशरासनारोपणप्रथमप्रियवादिनोऽद्य पारितोषिकं धारयासि ।

**विश्वामित्रः**— (विहस्य) वत्स, दीयते किमभिप्रैषि ।

**शतानन्दः**— भगवन्, कुशध्वजदुहितृभ्यां माण्डवीश्रुतकीर्त्तिभ्यांभरत-शत्रुघ्नावभ्यर्थये,

**विश्वामित्रः**— (शतानन्दं हस्तेगृहीत्वा सस्मितं ।) वत्स सर्वमस्माभिरेवविधातव्यं आगमयस्व तावद्दशरथम् ।

**जनकः**— तर्हि प्रहीयतां भगवानांगिरसः प्रियसुहृदमुत्तरकोसलेश्वरमानेतुम् ।

**विश्वामित्रः**— एवमस्तु ।

**शतानन्दः**— (उत्थाय) भगवन्, किमन्यदाधिकमास्ति वाचिकम् ।

**विश्वामित्रः**— वत्स, निसृष्टार्थोऽसि गम्यतां (शतानन्दो निष्क्रान्तः ।)

**विश्वामित्रः**—(हर्षनाटयन् आत्मगतं)

दोर्लीलादलितेन्दुशेखरधनुर्व्याख्यातविक्रान्तिना
काकुत्स्थेन कृतो विदेहनृपतिस्तीर्णप्रतिज्ञाभरः ।
पश्यामश्च सुहृद्गृहान्नवनवोन्मीलद्विवाहोत्सवा-
नैक्ष्वाकेषु च मैथिलेषु च फलन्त्यस्माकमद्याशिषः ॥ ५७ ॥

---

हणरूपस्वगुणेनैव क्रीता गृहीता । नःस्वगृहव्यवहारेण ईप्सिताय वराय स्वेच्छया कन्यादानमित्येवंरूपकुटंबव्यवहारमनुसृत्य प्रकृत्यादित्वात्तृतीया ऊर्मिला लक्ष्मणाय अस्तु दीयत इति भावः ॥ ५६ ॥

धारेरुत्तमर्णत्वाविवक्षणान्ममेत्यत्र चतुर्थी न । आगमयस्व तावत् प्रतीक्षस्व मात्वरिष्ठा इत्यर्थः "आगमेः क्षमायां" इति तङ् । वाचिकं सन्देशवाक् । निसृष्टार्थः निश्चितबुद्धिः । उक्तंच - उभयोर्भावमाश्रित्य परापेक्षाविवर्जितम् । स्वबुद्ध्या कुरुते कार्यं निसृष्टार्थः सउच्यते" इति निष्क्रान्तः दशरथानयनाय गतः । दोर्लीलेति । दोर्लीलया भुजक्रीडया दलितेन भग्नेन इन्दुशेखरधनुषा हरचापेन व्याख्याता प्रकटीकृता विक्रान्तिः विक्रमः यस्य तेन काकुत्स्थेन विदेहनृपतिः जनकः तीर्णः पारितः प्रतिज्ञाभरः येन तथाभूतः कृतः भरशब्देन प्रतिज्ञाया दुष्करत्वं सूचितं । सुहृद्गृहान् जनकगृहं नवनवः अत्यन्तनूतनः उन्मीलन् भासमानश्च विवाहोत्सवः येषु तथाभूतांश्च पश्यामः अस्माकमाशिषः अभिलाषाः ऐक्ष्वाकेषु इक्ष्वाकुदेशभवेषु मैथिलेषु तद्देशभवेषुच फलन्ति निष्पद्यन्ते, इह इक्ष्वाकुमिथिलशब्दाभ्यां भवार्थे

**शौष्कलः**—(वैलक्ष्यरोषाभ्यां स्मयमानः) भो सीरध्वज, पुरुषप्रकर्षाधाने विद्यावृद्धसंयोगाद्बहिरंगानि वयांसि । यदनया प्रहीणलब्धकन्यया यौनसंबंधोपस्थितं पुलस्त्यकुलमुपेक्षमाणो वर्षीयानपि कोमलप्रज्ञोसि । (मुनिंप्रति) ऋषे कौशिक, नाद्यापि किंचिदतिक्रामति । तवापि लंकापतौ ताटकावधापराधमपमार्ष्टुमयमेव श्रेयानवसरः ।

**जनकः**— (तत्रावज्ञां नाटयन्।) भगवन् एहि स्वयमुपेत्य रामचन्द्रवदनचन्द्रचन्द्रिकाप्रवाहे निर्वापयामि तावदलीकधनुर्धरप्रार्थ्यमानमैथिलीकदर्थितमात्मानम् । नहि मिहिरमरीचिपरिचयपचेलिमस्य हिमकरबिंबसंपातादपरोऽपि कश्चिदगदंकारः कैरवाकरस्य । (इत्युत्थाय परिक्रामतः।)

**शौष्कलः**— (सखेदमाकाशे।) हा तपस्विनि सीते, हतासि पौलस्त्येन प्रार्थितापि विचार्यसे ।

---

शैषिकोऽण् । यदात्वपत्यविवक्षा तदा जनपदक्षत्रियाञ् बहुषु तस्य लुक्च । ततश्च इक्ष्वाकुषु मिथिलेष्विति रूपमिति बोध्यं । फलन्त्विति पाठान्तरम् । अत्र ऐक्ष्वाकेषु मैथिलेषुचेति सर्ववर्णानां सामान्येन ग्रहणात् वर्णसंहारो नाम प्रतिमुखसंध्यंगमुक्तं भवति "चातुर्वर्ण्योपगमनं वर्णसंहार इष्यते" इति तल्लक्षणोक्तेः ॥ ९७ ॥

वैलक्ष्यरोषाभ्यां पिनाकभंगकृतलज्जया स्ववाक्यानादरकृतकोपेन च । पुरुषप्रकर्षाधाने पुरुषस्य उत्कर्षनिश्चये विषये विद्यावृद्धसंयोगात् ल्यब्लोपे पञ्चमी ज्ञानवृद्धसंबंधमपेक्ष्य वयांसि वयोवृद्धत्वं बहिरंगानि अमुख्यं । पुरुषतारतम्यनिश्चये विद्यावृद्धैरेवानुसर्त्तव्या न केवलं जरद्वृद्धैरिति भावः । तव तु विद्यावृद्धसंवादो नास्तीत्याह यदिति । यत् अनया प्रहीणा पित्रादिरहिता अत एव त्वया लब्धाचेयं कन्या च तया यद्वा प्रहीणा अज्ञातपित्रादिका गत्यर्थाना ज्ञानार्थकत्वात् एतेन "यस्यास्तु न भवेद्भ्राता न विज्ञायेत वा पिता । नोपयच्छेत तां प्राज्ञः" इति स्मृतेः तद्ग्रहणे दोषोपि सूचितः प्रहीणात् लांगलपद्धतेर्वा लब्धा तया यौनसंबंधाय विवाहार्थं उपस्थितं प्राप्तं पुलस्त्यकुलं उपेक्षमाणः अस्वीकुर्वन् त्वं वर्षीयानपि वयसा वृद्धतरोऽपि "प्रियस्थिर" इत्यादिना वृद्धशब्दस्य वर्षादेशः कोमलप्रज्ञोसि मन्दबुद्धिरसि ॥ नाद्यापि किंचिदतिक्रामतीति "दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्" इति याज्ञवल्क्येनैवोक्तत्वादद्यापि रावणाय सीतादाने न न्यायविरोध इति भावः । अलीकधनुर्धरैः धनुर्ग्रहणानर्हैरिति यावत् प्रार्थ्यमानया । मिहिरमरीचिपरिचयेन सूर्यकिरणसंपर्केण पचेलिमस्य पक्वस्य "केलिमर उपसंख्यानम्" पचेः कर्मणि केलिमर् । कैरवाकरस्य कुमुदाकरस्य

त्रिभुवनविजयश्रियः सपत्नीं जनयति को भवतीमनात्मतन्त्राम् ।
स्वजनमपि न ते निरूपयामः किमपि भुवं विनिपाट्य निर्गतायाः ५८

(सरोषं जनकंप्रति ।)

पौराणीभिरनेकविक्रमकथागाथाभिरर्थापिता-
स्ते वीरस्य जयन्ति राक्षसपतेर्दोस्तंभदंभोलयः ।
यानुत्प्रेक्ष्य विशोषयन्मदमयं मैरेयमैरावणो
भूषास्रग्भिरभूदमर्त्यमधुपश्रेणीषु साधारणः ॥ ५९॥

तेषु सत्सु

वृथा सज्जनसंबंधसत्कारेणासि वंचितः ।
पौलस्त्यहस्तवर्तिन्या सीतया तु भविष्यते ॥ ६० ॥

---

हिमकरबिंबसंपातात् चन्द्रमण्डलसंसर्गंविना अगदंकारः चिकित्सकः "कारे सत्यागदस्य" इति मुम् । तपस्विनि शोच्ये, रावणाय स्वयमेव प्रार्थनापूर्वकं देया । सत्येवं तेन प्रार्थितापि यस्मात् देया वा न वेति विचार्यसे तस्मात्त्वं हतासि । त्रिभुवनेति । अनात्मतन्त्रां अस्वतन्त्रां भवतीं त्वां त्रिभुवनस्य विजयश्रियः विजयलक्ष्म्याः सपत्नीं समानः पतिरस्याः इति विग्रहः त्रैलोक्यजेतुः रावणस्य भार्यामिति यावत् को जनयति न कोऽपि कर्त्ता ततस्त्वं हतैवेत्यर्थः । तत्र हेतुमाह भुवं विनिपाट्य निर्भिद्य किमपि अज्ञातमूलं यथा तथा निर्गतायाः ते स्वजनमपि आप्तबंधुमपि न निरूपयामः निपुणमालोच्यापि न पश्यामः । बलाद्रावणाय दातुं समर्थस्याप्तबंधोरभावात् त्वं यस्मैकस्मैचिद्दीयसे तस्मात्त्वं हतप्रायैवेत्यर्थः ॥५८॥

पौराणीभिरिति । पौराणीभिः पुराणसंबंधिनीभिः अनेकाभिः विक्रमकथागाथाभिः पौरुषसंपादितचरित्रपरंपराभिः अर्थापिताः अभिधेयीकृताः प्रख्याता इत्यर्थः "अर्थवेदयोरापुग्वक्तव्य" इत्यापुक् । वीरस्य राक्षसपतेः रावणस्य ते दोःस्तंभाः दंभोलय इव वज्राणीव दोःस्तंभदंभोलयः यद्वा दोषः स्तंभा इव दोःस्तंभाः ततः रूपकं यद्वा (रूपितरूपकं) जयन्ति पराभिभवनदक्षा वर्त्तन्ते । ऐरावणः ऐरावताख्य इन्द्रगजः यान् दोःस्तंभदंभोलीन् उत्प्रेक्ष्य विचार्य दृष्ट्वा वा मदमयं मदरूपं मैरेयं आसवं विशोषयन् विशेषेण शोषं गमयन् सन् भूषास्रग्भिः अलंकारीकृतमालाभिः अमर्त्यमधुपश्रेणीषु देवलोकस्थभ्रमरपङ्क्तिषु साधारणः सामान्योभूत् । रावणबाहुबलभीत्या विमद ऐरावतः पुष्पाद्यलंकारगंधार्थमागतैरेव भ्रमरैः सेव्यते न तु दानार्थं ॥ ५९ ॥

तेषु सत्सु रावणभुजेषु जाग्रत्सु । वृथेति । सज्जनसंबंधेन यः सत्कारः पूजा तेन वृथा वंचितोऽसि परित्यक्तोसि रावणश्वशुरत्वसंमानभ्रष्टोऽसीति यावत्

(साक्षेपं नेपथ्याभिमुखमवलोक्य)

समन्तादुत्तालैः सुरसहचराचामरमरु-
त्तरंगैरुन्मीलद्भुजपरिघसौरभ्यशुचिना ।
स्वयं पौलस्त्येन त्रिभुवनभुजा चेतसि कृता-
मरे राम त्वं मा जनकनृपपुत्रीमुपयथाः ॥ ६१ ॥

(सविमर्शमात्मगतम्) अहोगंभीरामिदमुपस्थितंवस्तु । तन्मन्त्रिणं माल्यवन्तं पुरस्कृत्य लंकेश्वरस्य निवेदयामि । (इति निष्क्रान्ताः सर्वे)

इति पिनाकभंगोनाम तृतीयोऽङ्कः

---

यद्वा असज्जनेति पदच्छेदः असज्जनानां विश्वामित्रशतानन्दादीनाम् संबंधरूपो यः सत्कारः तेन वंचितोऽसि विप्रलब्धोऽसि तथा च त्वं रावणसत्कारानर्हइत्येतावदेवानेन कर्मणा निष्पन्नं कुतस्तदित्यत आह सीतया पौलस्त्यहस्तवर्त्तिन्या तु रावणवशवर्त्तिन्यैव भविष्यते भावे लट् ॥ १० ॥

समन्तादिति । अरे राम, समन्तात् सर्वतः उत्तालैः शब्दायमानैः सुरसहचरीणां देवस्त्रीणां चामरमरुत्तरंगैः वालव्यजनवायुवीचिभिः उन्मीलता प्रसरता भुजपरिघाणां बाहर्गलानां सौरभ्येण वासनया (यशसा) भुजलिप्तचन्दनादिसौरभ्येणेतिवा । शुचिना शुद्धेन एतेन देवानामपि नियन्तृत्वं सूचितं । त्रिभुवनभुजा त्रिभुवननाथेन पौलस्त्येन स्वयं चेतसि कृतां परिग्राह्यत्वेन मनसि निश्चितां जनकपतिपुत्रीं मोपयथाः स्वीकर्त्तुं न शक्ष्यसि 'यमउपरमे' इति धातोः "उपाद्यमः स्वकरणे" इति स्वीकरणार्थे उपोपसृष्टस्यात्मनेपदं तस्य लुङि "विभाषोपयमने" इति किस्वे 'अनुदात्तोपदेश' इत्यादिनाऽनुनासिकलोपे "ह्रस्वादंगात्" इति सिज्लोपे "न माङ्योगे" इति अडभावे च सति रूपं उपयथाः इति । एतेन भाविकथा सूचिता ॥ ११ ॥

उपस्थितं अनुभूतं इदं रामाख्यं वस्तु गंभीरं दुराधर्षं यद्वा इदं वस्तु पिनाकभंगाख्यं वृत्तं गंभीरं अनितरसाध्यं यद्वा इदं सीताख्यं वस्तु गंभीरं रामपरिगृहीतत्वाद्दुरापं । तत् मन्त्रिणं माल्यवन्तमेव पुरस्कृत्य तन्मन्त्रणद्वारा एवकारेण नान्यस्मै विज्ञापनीयमिति भावः यद्वा एवकारो भिन्नक्रमः पुरस्कृत्यैव न तु स्वातन्त्र्येण । तन्मूलत्वान्मन्त्रनिश्चयस्य । लंकेश्वरस्य निवेदयामि मिथिलावृत्तान्तं सर्वमपीति शेषः । एतेन अनन्तरांकारंभप्रवेशश्च सूचितः ।

इति लक्ष्मणसूरिविरचितायामाकराख्यायामनर्घराघवनाटकव्याख्यायां तृतीयोऽङ्कः समाप्तः ।

## चतुर्थोऽङ्कः ।

( ततः प्रविशति माल्यवान् )

**माल्यवान्**—( जृम्भमाणश्चक्षुषी परिमृज्य ) अये विभातप्रायैव विभावरी । तथाहि ।

स्तोकोन्निद्रनिदाघदीधितिमहस्तन्द्रालुचन्द्रातपाः
स्त्यायन्ते ककुभो रथाङ्गगृहिणीगार्हस्थ्यगर्हाभिदः ।
अद्यापि स्वकुलायशाखिशिखरे स्थित्वा रुवन्तो मुहु-
स्तूष्णीं प्रत्याभिजानते बलिभुजो भीताः स्वयूथ्यस्वरान् ॥१॥

---

दमयन्भृगुजंदर्पं निशाचराणां विनाशकोऽरण्यं ।
गुर्वादेशात्प्राविशन् सभ्राता जयति जानकीजानिः ॥

इदानीं प्राप्त्याशापताकासंबद्धं गर्भसन्धिं नियताप्तिप्रकरीसंबद्धं विमर्शसन्धिं च अङ्कद्वयेन वदन् रामस्य वनप्रवेशान्तकथां चतुर्थाङ्केन रचयितुं तदपेक्षितं विष्कंभमुपक्रमते "उपायापायशंकाभ्यां प्राप्त्याकार्यसंभवः" "पताकाव्यापिनी-कथा" "गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणंमुहुः" "गर्भसंधौ प्रसिद्धस्य बीजार्थस्यावमर्शनं । हेतुनायेनकेनापि विमर्शस्संधिरिष्यते" । "अपायाभावतः कार्यनिश्चयो नियताप्तिका" । "अव्यापिनीप्रकरिका" इतिचतेषां लक्षणानि । गर्भसन्धेरभूताहरणादीनि द्वादशांगानि विमर्शसन्धेस्त्वपवादादीनि त्रयोदशांगानि । तानिच यथोपयोगं प्रदर्श्यन्ते । अत्र जामदग्न्यागमनान्तमतीतार्थवर्णनं । अतीतानन्तरांकान्ते "मन्त्रिणं माल्यवन्तमेव" इति सूचितस्य माल्यवतः प्रवेशमाह

तत इति । ततः शौष्कलगमनानन्तरं । जृंभमाणः रामविक्रमश्रवणातंककृतप्रजागरनिमित्तिकां जृंभिकां कुर्वन् सन् । चक्षुःपरिमार्जनमपि तल्लिंगमेव । स्तोकेति । स्तोकोन्निद्रेण किंचिदुद्बुद्धेन निदाघदीधितिमहसा सूर्यकिरणेन तन्द्रालुः अलसः मलिन इति यावत् । स्पृहिगृहीत्यादिना तन्द्राशब्दादालुच् । चन्द्रातपश्चन्द्रिका यासु ताः । रथाङ्गगृहिणीनां चक्रवाकीणां गार्हस्थ्यगर्हायाः दांपत्यकुत्सायाः भर्तृवियोगदुःखस्येत्यर्थः । भिदः नाशयित्र्यः ककुभः दिशः स्त्यायन्ते स्फीताभवन्ति, अद्यापि बलिभुजः काकाः स्वकुलायशाखिशिखरे स्वकीयनीडविशिष्टवृक्षाग्रे "कुलायोनीडमस्त्रियां" । इत्यमरः स्थित्वा मुहुः रुवन्तः

अपिच—प्राचींवासकसज्जिकामुपगते भानौ दिशां वल्लभे
पश्यैतारुचयः पतंगदृषदामाग्नेयनाडिंधमाः।
लोकस्य क्षणदानिरंकुशरसौ संभोगानिद्रागमौ
कोकस्तोमकुमुद्वतीविपिनयोर्निक्षेपमातन्वते ॥ २ ॥

( सर्वतो निरूप्य सहर्षं ) हन्तसमन्तादामोदमानपौरसंभोगमयीखल्वियं दशग्रीवस्य भुजार्गलापरिपालिता राजधानी।

इतः पौरस्त्यायां ककुभिविवृणोतिक्रमदल-
त्तमिस्राममर्माणं किरणकलिकामंबरमणिः।.

---

पदे पदे शब्दं कुर्वन्तस्सन्तः स्वयूथ्यानां सजातीयवायसानां यूथशब्दस्य दिगादित्वाद्भवार्थे यत् ततः स्वशब्देन कर्मधारयः स्वरान् भीताः उलूकागमनशंकया उद्विग्नास्सन्तः तूष्णीं मौनेन प्रत्यभिजानते परस्परंनिश्चिन्वन्ति "कर्तरिकर्मव्यतिहारे" इतितङ् ॥ १ ॥

प्राचीमिति। दिशां वल्लभे भानौ सूर्ये अनेन तस्य बहुवल्लभत्वं सूचितं प्राचीं वासकसज्जिकां व्यस्तरूपकमिदं प्राग्दिगाख्यनायिकाविशेषं "स्त्रीणां वारस्तु वासकः।" इत्युक्तत्वाद्वासकेस्ववारादिने सज्जीकरोति केलीगृहमात्मानं चालंकृत्य प्रतीक्षत इति वासकसज्जिका उक्तं च "प्रियागमनवेलायां मण्डयन्ती मुहुर्मुहुः। केलीगृहं तथात्मानं सास्याद्वासकसाज्जिका" इति अत्र सूर्योदयकाले प्राचीदिशःशोभाप्राचुर्यात्तथारूपणं। पतंगदृषदां सूर्यकान्तानां "पतंगौ पक्षिसूर्यौ च" इत्यमरः। आग्नेयीः अग्नयेहिताः अग्निसंबन्धिनीर्वा सर्वत्राग्निकलिभ्यामुपसंख्यामाड्ढक्। नाडीस्सिराः धमन्ति अग्निसंयुक्ताः कुर्वन्ति इति आग्नेयनाडिंधमाः। "ध्माशब्दाग्निसंयोगयोः" इति धातोः नाडीशब्दे उपपदे नाडीमुष्टचोश्चेति खश्। खित्वान्मुमहस्वश्च शित्वात् पाघ्रेत्यादिनाधातोर्धमादेशः आग्नेय्यश्च ता नाड्यश्च आग्नेयनाड्यः ता धमन्तीतिसमासः। एतारुचयः अमीकिरणाः लोकस्य जनस्य क्षणदायां रात्रौ निरंकुशरसौ निरर्गलानंदौ संभोगः स्त्रीसंगमः निद्रागमः। तौकर्म। कोकस्तोमे चक्रवाकसमूहे कुमुद्वतीविपिने कुमुदाकरसमूहे च निक्षेपं यथाक्रमं न्यासं आतन्वते कुर्वन्ति। पश्य, क्रमालंकारः २

हन्तहर्षे भुजार्गलया भुजस्तंभेन धीयतेस्यामिति धानी राज्ञो धानी राजधानी पुरी लंका। आमोदमानानां हृष्यतां। पौराणां परवासिजनानां। संभोगमयी तत्प्रचुरा प्राचुर्यार्थे अधिकरणे मयट्। इदानीं सूर्योदयवर्णनेन संभोगमयत्वं च वर्णयति द्वाभ्यां। इत इति। अंबरमणिः सूर्यः। इतः अत्र पौरस्त्यायांदिशि

इतोनिष्कामंती नवरतिगुरोः प्रोंछति वधूः
स्वकस्तूरीपत्रांकुरमकरिकामुद्रितमुरः ॥ ३ ॥

अपि च ।

अयं मृदुमृणालिनीवनविलासवैहासिक-
स्त्विषां वितपते पतिः सपदि दृश्यमानानिजाः ।
स्तनौ पुलकयन्ति चोत्पलदृशां प्रियोरःस्थले
विपर्ययितवृत्तयो घुसृणपंकपत्रांकुराः ॥ ४ ॥

इतश्च ।

प्रियवसतेरपयान्त्यो मिथःकरंबितकरांबुजन्मानः ।
करजव्रणाविरलस्तनपुलकममूः किमपि विवदन्ते ॥ ५ ॥

---

प्राच्यां "दक्षिणात्पश्चात्पुरसस्त्यक्" क्रमेण दलन्तः शिथिलीभवन्तः तमिस्रायाः तामसरात्र्याः मर्माणः संधयः यया तां "मनः" इति निषेधान्नङीप् । किरणकलिकां किरणोद्भेदं विवृणोति प्रकाशयति । इतः अस्मिन्प्रदेशे निष्क्रामन्ती निर्गच्छन्ती नववधूः नवोढा स्वकस्तूरीपत्रांकुरमकरिकया मुद्रितं अंकितं नवरतिगुरोः प्रथमसंगमोपाध्यायस्य नायकस्य उरः वक्षःस्थलं प्रोंछति सुरतसूचकत्वभिया मार्ष्टि । यद्वा नवरतिगुरोरिति पञ्चमी ततः निष्क्रामन्ती सती स्वकस्तूरीपत्रांकुरमकरिकामुद्रितं उरः स्ववक्षः प्रोञ्छति ॥ ३ ॥

अयमिति । मृदुनः श्लक्ष्णस्य मृणालिनीनां पद्मिनीनां पुष्करादित्वादिनिः वनस्य विलासवैहासिकः क्रीडाविदूषकः विकासनकारी इत्यर्थः "वैहासिकः केलिकरः प्रहासी च विदूषकः ।" इति भरतः । "प्रयोजनं" इति ठञ् । अयं त्विषांपतिः सूर्यः वितपते दीप्यते "उद्विभ्यांतपः" इति तङ् । सपदीत्याद्युत्तरत्रसंबध्यते । सपदि सूर्योदयेसति दृश्यमानाः निजा आत्मीयाः प्रियोरःस्थले नायकस्य वक्षःप्रदेशे विपर्ययिता प्रातिलोम्येन वर्तिता आलिंगनसमये दक्षिणसव्यस्तनयोर्भर्तुःसव्यदक्षिणयोरेव संश्लेषसंभवात् विपरिपूर्वादयतेः "गत्यर्थ" इत्यादिना कर्त्तरिनिष्ठा विपर्ययशब्दात्तारकादीतज्वा वृत्तिर्वर्त्तनं येषां ते उत्पलदृशां स्त्रीणां घुसृणपंकपत्रांकुराः कुंकुमरचितपत्रादिरचनाविशेषाः स्तनौ पुलकयन्ति रोमांचयन्ति सूर्योदये तत्स्फुटदर्शनेन रात्रावनुभूतप्रियसंगादिस्मरणेन पुलकोद्भेद इति भावः ॥ ४ ॥

इदानीं संभोगमात्रं वर्णयति द्वाभ्यां । प्रियेति । प्रियवसतेः रमणगृहात् अपयान्त्यः निर्गच्छन्त्यः अमूः स्त्रियः मिथः अन्योन्यं करंबितानि संपृ-

अन्यतश्च ।

प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरी-
नवोढा न व्रीडामुकुलितमुखीयं सुखयति ।
लिखन्तीनां पत्रांकुरमतुलमस्यास्तु कुचयो-
श्चमत्कारोगूढं करजपदमासां कथयति ॥ ६ ॥

(मुहूर्त्तमनुध्याय) अहो यतःप्रभृति वैदेहीवरणाय प्रहितेन पुरोधसा कथ्यमानं ककुत्स्थकुलकुमारस्य तादृशंमानुष्यकातिशयमशृणवम् ततः प्रभृति कष्टां दशामनुभवामि । तथाहि ।

तत्तादृशं कथमुदेति मनुष्यलोके
तेजोऽद्भुतं निरभिसंधि न तावदेतत् ।
तान्येवचास्य चरितानि दशाननस्य
धिक् चिन्तया रजनिराक्षिषु नः प्रभाति ॥ ७ ॥

---

क्तानि गृहीतानीतियावत् " करंबः क्रूरदक् शारः संपृक्तखचितौ समौ " इति हलायुधः । करांबुजन्मानि पाणिपद्मानि याभिस्ताः करजव्रणेन नखक्षतेन विरलं अनिबिडं स्तनयोः पुलकोरोमांचो यथा तथा किमपि स्वगोष्ठीसदृशं यत्किंचिद्विवदन्ते विवादं कुर्वन्ति " व्यक्तवाचां समुच्चारणे " इति तङ् ॥ ५ ॥

प्रभात इति । नवोढा अधुनैव भर्त्रा नवसंगमं प्राप्ता इयं स्त्री अनुरहसवृत्तं एकान्तवृत्तान्तं "अन्ववतप्ताद्रहसः" इति रहःशब्दात्समासान्तोऽच् प्रभाते प्रातःकाले पृच्छन्तीः अनुयुञ्जानाः सहचरीः सखीः व्रीडया लज्जया मुकुलितं संजातमुकुलं नम्रमितियावत् तारकादित्वादितच् मुखं यस्यास्तथाभूतासती न सुखयति सुखिनीर्नकरोति न वक्तीतिभावः । अस्याः नवोढायाः चमत्कारः दुःखजनितचित्तविकारः कुचयोः स्तनयोः अतुलं पत्रांकुरं लिखन्तीनां आसां सखीनां गूढं रहस्यकृतमस्पष्टंवा करजपदं नखस्थानं क्षतमितियावत्, कथयतिस्पष्टं ब्रूते ६

एवं प्रासंगिकं समाप्य प्रकृतमुपक्रमते अहो इत्यादिना । यतःप्रभृति यत आरभ्य यस्मिन्दिन इतिं यावत् । वैदेहीवरणाय सीतां रावणाय वरीतुं । प्रहितेन प्रेषितेन पुरोधसा शौष्कलेन । मानुष्यकस्य मनुष्यकर्मणः "योपधात" इत्यादिना वुञ् अतिशयं उत्कर्षं अशृणवं श्रुतवानस्मि । कष्टांदशामनुभवामि चिन्तया निद्राद्यभावादितिभावः तदेवाह तत्तादृशमिति । तत्तादृशंताटकादिसंहारपिनाकभञ्जनाद्यमानुषकर्मकर्तृ अतएव अद्भुतंच तेजः एतेनामानुषत्वं दर्शितम् ।

किं च ।

श्रुत्वा दुःश्रवमद्भुतं च मिथिलावृत्तान्तमन्तःपत-
च्चिन्तापह्नवसावहित्थवदनस्तद्दिग्वितीर्णस्मितः ।
हेलाकृष्टसुरावरोधरमणीसीमन्तसन्तानक-
स्रग्वासोज्वलपाणिरप्यवति मां वत्सो न लंकेश्वरः ॥ ८ ॥

( विमृश्य आकाशे विहस्य । ) हन्त दारुणेयमस्माकं चिरजीविता ।

प्रीते विधातरि पुरापरिभूयमर्त्यान्
वव्रेऽन्यतो यदभयंसभवानहंयुः ।
तन्मर्मणि स्पृशति मामतिमात्रमद्य
हा वत्स शान्तमथवा दशकंधरोऽसि ॥ ९ ॥

---

मनुष्यलोकेकयमुदेत्याविर्भवति । एतत् रामाख्यतेजस आविर्भवनं न तावन्निरभि-सन्धि निर्हेतुकं नभवत्येव राक्षसनिग्रहरूपकारणेनैवावतीर्णमितिभावः । तर्हि "उत्तमं प्रणिपातेन" इति न्यायेन रामः समाधीयतामलंविरोधेनेत्यतआह तानीति अस्य दशाननस्य चरितानिच तान्येव नृशंसत्वपारदारिकत्वादीनि प्राग्वदेवाद्यापि, तस्मान्नायंसामाद्युपायमनुवर्तेतेतिभावः रजनिः रात्रिः चिन्तया रामरावणवृत्तस्मरणेन नःअक्षिषुप्रभाति लोकोक्तिरियं एतच्चिन्तयैवरात्रिंगच्छतीतिभावः धिक् ॥ ७ ॥

न केवलमहमेव चिन्ताकुलः रावणोपीत्याह श्रुत्वेति । वत्सो लंकेश्वरः दुःश्रवं कर्णकठोरं शत्रोरुत्कर्षख्यापनात् । अद्भुतं च अनितरसाध्यस्य साधनात् मिथिलावृत्तान्तं पिनाकभंगपूर्वकं सीतापाणिग्रहणं श्रुत्वा शौष्कलमुखेन ज्ञात्वा अन्तःपतन्त्याः हृदयं प्रविष्टायाः चिन्तायाः अपह्नवेन अपलापेन सावहित्थानि वैवर्ण्याद्याकारगोपनाविशिष्टानि "अवहित्थाऽऽकारगुप्तिः" इत्यमरः । वदनानि यस्य तथाभूतःसन् अत एव तस्यै दिशे मिथिलायै वितीर्णं स्मितं येन तथाभूतः सन् किमनेनेषत्करं सीतापहरणं मयेति स्मयमानःसन्नितिभावः । हेलाकृष्टस्य लीलयाऽऽहृतस्य सुरावरोधरमणीसीमन्तस्य देवान्तःपुरस्त्रीकेशवेशस्य सन्तानकस्रजः वासेन वासनया उज्वलाः पाणयो यस्य तथाभूतोपि एतेन महाबलत्वं सूचितं । मां नावति न प्रीणयति । समयोचिताचरणाभावादितिभावः ॥ ८ ॥

प्रीत इति । विधातरि ब्रह्मणि शिवे वा प्रीते वरदानाय प्रसन्ने सति सः तादृशः दुष्करतपश्चरणात् भवान् सभवानिति समस्तं पदं वा । हे रावण त्वं

( सविमर्शम् ) अहो मैथिलस्य नृपतेरनात्मज्ञता ।

विश्वामित्रवशीकृते हृदि वयं माभूम संबंधिन-
स्ते दृष्टा नकथं पुराणमुनयो मान्याः पुलस्त्यादयः ।
जामाताऽपि महेन्द्रमौलिवलभीपर्यंकरत्नांकुर-
ज्योत्स्नामृष्टनखेन्दुदीधितिरयं नापेक्षितो रावणः ॥ १० ॥

( पुरोवलोक्य ) कथं मिथिलावृत्तान्तमुपलब्धुं प्रहिता चिरयति वत्सा शूर्पणखा.

( प्रविश्य )

**शूर्पणखा**—अहो सोम्मसुन्दरीविवाहणेवच्छलच्छिविच्छुरिअअन्तिपब्भाराइ रहुउलकुमालाणं मुहपुण्डरीआइ पक्खन्दे। दुगुच्छिदेण वि माआमाणुसिभावेण किदत्था किदह्मि । अहो तारिसीगुणाणं पकिदि ज [illegible]पाडिदा वि सुहावेदि । अहो सौम्यसुन्दरीविवाहनेपथ्यलक्ष्मीविच्छुरितकान्तिप्राग्भा-राणि रघुकुलकुमाराणां मुखपुण्डरीकाणि पश्यन्ती जुगुप्सितेनापि मायामानुषीभावेन कृतार्थीकृतास्मि । अहो तादृशी गुणानां प्रकृतिर्यद्विप-क्षहस्तपतितापि सुखयति ।

---

अहंयुः भक्ष्यभूतैर्मनुष्यैरकिंचित्करत्वादित्यहंकारवान् सन् । अहमित्यव्ययमहं-कारवृत्तिकं ततः "अहं शुभमोर्युस्" इति मत्वर्थीयो युस् । मर्त्यान् मनुष्यान् परिभूय अनादृत्य अन्यतस्त्वद्व्यतिरिक्तेभ्यः अभयं वव्रे वृतवान् इति यत्तदद्य अतिमात्रं अत्यर्थं मां मर्माणि स्पृशति मर्मस्थानेषु व्यथयति रावणवरं रामबलं च स्मृत्वा दुःखेनाक्रोशन्नाह हा वत्सेति अथवा शान्तं अश्लीलचिंन्तनं मास्तु दशकंधरोऽसि त्वं दशग्रीवः तस्मादेकग्रीवाद्रामाद्भीतिर्न ते स्यादिति भावः ॥९॥

अनात्मज्ञता मौढ्यं । तदेवविशदयति विश्वामित्रेति । विश्वामित्रेण वशीकृते हृदि जनकस्येति शेषः वयं संबंधिनो माभूम संबंधयोग्यता न याम तथापि "दशपूरुषविख्याताच्छ्रोत्रियाणां महाकुलात्" इति स्मृत्या पूर्वपुरुषपरीक्षाकुतो न कृतेत्याह मान्याः लोकपूज्याः ते अतिप्रसिद्धाः पुराणमुनयः पुलस्त्यादयः कथं न दृष्टाः कुतोन गणिताः । ननु "आदौ वरं परीक्षेत" इति न्यायेन गुणन्यून-तया रावणाय नदत्तेत्याशंक्याह जामातेति । महेन्द्रस्य मौलिवलभीपर्यंकस्य किरीटकूटागारखट्वायाः रत्नांकुरस्य ज्योत्स्नया कान्त्या मृष्टा शोधिता नखेन्दोः दीधितिः यस्य तथाभूतः सर्वविजयीतियावत् अयं रावणः जामातापि दुहितुः भर्त्ताकर्थंनापेक्षितः नांगीकृतः तस्मादनात्मज्ञ इति भावः ॥ १० ॥

[illegible]ऽमन्तरप्रवेशस्य सूचनार्थमाहकथमित्यादि । चिरयति विलम्बते । विच्छु

**माल्यवान्**— (दृष्ट्वा सस्नेहं ।) कथं वत्सा शूर्पणखा । वत्से, अयमहं । इतोभवती

**शूर्पणखा**— कहं एव्वएव्व अट्टालसिहरवट्टिपग्गीवे मे कणिट्ठमादामहो । अहो दुस्सिलिट्ठदादुट्ठकज्जाणं । जं दाणिं पआअरकिलिंदलोअणो पडिक्खण-जिंभिआपसारिअमुहकुहरादिट्ठहिअअट्ठिदकठिणकज्जपब्भारो को वि अण्णो वि-अ दिस्सइ कणिट्ठमादामहो

कथमत्रैवाट्टालशिखरवर्त्तिप्रग्रीवे मे कनिष्ठमातामहः। अहोदुःश्लिष्टतादुष्ट-कार्याणां, यदिदानीं प्रजागरक्लान्तलोचनः प्रतिक्षणजृंभिकाप्रसारितमु-खकुहरदृष्टहृदयास्थितकठिनकार्यप्राग्भारःकोप्यन्यइव दृश्यते कनिष्ठमातामहः अहवा सामण्णणावि गुरुओखुमन्तिभावो । विसेसेण साहसकव्ववसाअस्स चण्ड-चरिदस्स अंहाणंरण्णो रावणस्स जाणामि मं एव्व पडिवालयन्दो चिट्ठइ जावणंउवस-प्पामि, अथवा सामान्येनापिगुरुः खलु मन्त्रिभावः विशेषेण साहसैकव्यव-सायस्य चण्डचरितस्यास्माकं राज्ञो रावणस्य । जानामिमामेव प्रतिपाल-यंस्तिष्ठति यावदेनमुपसर्पामि (इति सविषादमुपसृत्य) अज्ज वन्दामि, आर्य वन्दे ।

**माल्यवान्**—कल्याणीभूयाः इतआस्यतां अपिभरतशत्रुघ्नाभ्यां सहैव वैदेहमुपास्थितो दशरथः ।

**शूर्पणखा**—(उपविश्य) अज्जदसरहे आअदे कुमालाणं गोदाणमंगले संवुत्ते मए पविट्टं मिहिलाणअरं । आर्य, दशरथ आगते कुमाराणां गोदान-मंगले संवृत्ते मया प्रविष्टं मिथिलानगरम् ।

**माल्यवान्**—(निश्वस्य) अतिप्रकाशोऽयमर्थो यथानिर्वृत्तस्वीकारा जानकी

**शूर्पणखा**—अहइं अर्थकिं ।

---

रितः व्याप्तः कान्तिप्राग्भारः शोभातिशयो येषां तानि । इतोभवती त्वमत्रागच्छ अट्टालस्य प्राकारोपरि विरचितप्रासादस्य । प्रग्रीवे उन्नतप्राङ्कणे । दुष्ट-कार्याणां दुर्घटकार्यप्रवृत्तीनां । दुःश्लिष्टता दुःसन्धेयता दुःखरूपतेतियावत् । प्रजागरेण निद्राक्षयेण क्लान्ते ग्लाने लोचने यस्य तथाभूतःसन् । प्राग्भारो विस्तार आधिक्यं वा साहसं दण्डोपायः "साहसं तु दमोदण्डः" इत्यमरः । एकव्यवसायो दृढनिश्चयः प्राधान्येनानुष्ठानंवा यस्य तस्य । अत एव चण्डचरि-तस्य क्रूरवृत्तस्य । भरतशत्रुघ्नभ्यां दशरथमानेतुं शतानन्दो गत इति मौष्कलेन

**माल्यवान्**—(विमृश्य) अहोदुरात्मनः क्षत्रियब्राह्मणस्य कुशिकवंश जन्मनो दुर्नाटकम् ।

**यज्ञोपप्लवशान्तये परिणतो राजा सुतं याचित-**
**स्तंचानीय विनीयचायुधविधौ ते जघ्निरे राक्षसाः ।**
**त्रैयक्षं विदलय्य कार्मुकमथ स्वीकार्य सीतामितो**
**नो विद्मः कुहनाविटेन वटुना किं तेन कारिष्यते ॥ ११ ॥**

**शूर्पणखा**—अज्ज, एव्वं एदं । सो तस्सिं मए बंहणो वसिट्ठमहेसिणोसमीवे विप्फुरन्दो दिट्ठो । **आर्य एवमेतत् । स तत्र मया ब्राह्मणो वसिष्ठमहर्षेस्समीपे विस्फुरन् दृष्टः.**

---

निवेदितपूर्वत्वात्तदुत्तरार्थजिज्ञासया अपीत्यादिप्रश्नः । उपस्थितः प्राप्तः । गोदानमंगले समावर्त्तनमहोत्सवे । संवृत्ते पूर्णेसति । निर्वृत्तस्वीकारा कृतविवाहा । पूर्वंक्षत्रियः पश्चाद्ब्राह्मणः क्षात्रियब्राह्मणः तस्य । दुर्नाटकं दुरभिनयः दुष्प्रवृत्तिरिति यावत् कापट्यं वा तदेवोपपादयति **यज्ञेति** । कुहना दंभार्थतपस्विना अतएव विटेन धूर्तेन मेनकयासह चिरकालयापनात् मिथ्याचारेणेति यावत् " कुहनालोभान्मिथ्येर्यापथकल्पना । " इत्यमरः " विटोऽद्रौ लवणे षिङ्गे मूषिकेखदिरेऽपिच" इतिमेदिनी । तेन वटुना विश्वामित्रेण तुच्छत्वद्योतनाय वटुशब्दप्रयोगः । यज्ञस्य उपप्लवशान्तये विघ्नपरिहारार्थं परिणतो वृद्धः राजा दशरथः गौणकर्मतया प्रथमा । सुतं रामं याचितः । ततश्च तं रामं आनीय स्वाश्रममिति शेषः । आयुधविधौ अस्त्रशास्त्रे विनीय शिक्षयित्वा ते अतिबलिनः राक्षसाः सुबाहुप्रमुखाः जघ्निरे हताः हन्तेः कर्मणिलिट् । त्रीणि अक्षीण्यस्येतित्र्यक्षः शिवः " बहुव्रीहौ सक्थ्यक्ष्णोः" इत्यादिनाषच् । तस्येदं त्रैयक्षं " न य्वाभ्यां " इत्यादिना एच् । कार्मुकं पिनाकं विदलय्य भञ्जयित्वा " ल्यपिलघुपूर्वात् " इति णेरयादेशः । अथ तथाविधजनकप्रतिज्ञापूरणानन्तरं मंगलार्थश्चायमथशब्दः सर्वलोकाभ्युदयहेतुत्वात्तद्विवाहस्य । मांगलिकश्चायंकविः । सीतां स्वीकार्य ग्राहयित्वा । इतः अत ऊर्ध्वं किंकारिष्यते किंकरिष्यते कृञः कर्मणि लट् । धातोरजन्तत्वेन " स्यसिच् " इत्यादिनापाक्षिकचिण्वद्भावे वृद्धिः । नो विद्मः न जानीमः ११

विस्फुरन् विवाहघटनाय चेष्टमानः । **ब्राह्मणादेश इत्यादि** आदेशस्य स्थानिवद्भाव इति वैयाकरणप्रक्रियेयं । प्रकृतस्थानवान् स्थानी तस्य विधीयमान आदेशः तस्य पुनस्तत्कार्यातिदेशः स्थानिवद्भावः । प्रकृतेतु विश्वामित्रस्य

**माल्यवान्**—( विहस्य ) वत्से, तपोभिरस्य ब्राह्मण्यादेशोऽपि स्थानिवद्भावेनक्षत्रधर्मं न जहाति । किंच । स्वभावमधुरोपि काकुत्स्थवटुरौत्पत्तिकेन ब्राह्मेण ब्राह्मण्येनच जन्मना त्रिजातकान्मुनेरधीयन्नवरीणशीलः परिणंस्यते । तथाहि ।

**अविनयभुवामज्ञानानां शमाय भवन्नपि**
**प्रकृतिकुटिलाद्विद्याभ्यासः खलत्वविवृद्धये ।**
**फणिभयभृतामाशुच्छेदक्षमस्तमसामसौ**
**विषधरफणारत्नालोको भयंतु भृशायते ॥ १२ ॥**

भवतु, किमतिक्रान्तवर्णनेन । कथमिदानीं स्वयं गृहीतुमुत्तिष्ठमानो राक्षसपतिः प्रतिकर्तव्यः स्यात् ।

**शूर्पणखा**— अज्ज, णखु बलामोडिअं परिहरिअ तस्स अण्णोउवाओ तक्किआदि । आर्य नखलु बलात्कारं परिहृत्य तस्यान्यउपायस्तर्क्यते ।

**माल्यवान्**— वत्से, मामैवं । महाप्रमादो हि तादृशेन धर्मविजायिना वीरप्रवालेन परिगृहीताया वैदेह्याः प्रसह्यापहारः । पश्य ॥

---

ब्राह्मणत्वं क्षत्रियत्वस्य स्थानिन आदेशः तस्य पुनः क्षत्रियकर्माचरणं स्थानिवद्भावः तपोभिः प्राप्तब्राह्मण्योपि क्षत्रियसहजंक्रौर्यं न मुञ्चतीति भावः । मधुरोपि विनीतोपि । औत्पत्तिकेन सहजेन क्षत्रियत्वेन ब्रह्म वेदः तन्निमित्तकेन ब्राह्मेण उपनयनेनेति यावत् । ब्राह्मण्येन आगन्तुकेन ब्राह्मणत्वेनच जन्मना त्रिजातकात्त्रिजन्मनस्त्रैवर्णिकानां सर्वेषामपि द्विजत्वमस्य तु त्रिजत्वमिति कुत्सायां कन् । अस्मान्मुनेर्विश्वामित्रात् अधीयन् विद्याभ्यासकरणहेतोः "इङ्धार्योः शत्रकृच्छ्रिणि" इति शता हेत्वर्थकश्च । अवरीणशीलः अनाचारस्वभावः परिणंस्यते परिणतो भविष्यति । तदेवसमर्थयति अविनयेति । विद्याभ्यासः शास्त्राध्ययनं अविनयभुवां उद्धृतत्वाद्यास्पदानां अज्ञानानां मौढ्यानां शमाय भवन्नपि निग्रहक्षमःसन्नपि प्रकृत्या कुटिलात् अनृजोः भवन्निति शेषः खलत्वविवृद्धये दौर्जन्योपोद्बलकं भवति असौ विषधरफणारत्नस्य सर्पफटामणेः आलोकः कान्तिः "आलोकौ दर्शनोद्योतौ" इत्यमरः फणिभयभृतां सर्पशंकया भयहेतूनां तमसां आशुशीघ्रं छेदक्षमः नाशनसमर्थः तथापितुभयं तद्दर्शनजं भृशायते अधिकं भवति "भृशादिभ्यः" इत्यादिनाक्यङ् । (दृष्टान्तकाव्यलिङ्गालंकारौ) ॥ १२ ॥

ग्रहीतुं सीतां प्राप्तुं उत्तिष्ठमानः प्रयतमानः । अनूर्ध्वकर्मत्वादात्मनेपदं ।

दोस्तंभद्वयदर्पडंबरमिति स्पष्टं न विस्पन्दते
वैदेहीकरबंधसूचनमिति प्रस्तौति न व्रीडया ।
इत्यालोच्य कृतस्मितैर्मुनिभिरादिष्टेन येन क्षणा-
दात्तं सज्जितमाञ्छितंच सहसाभग्नंच तादृग्धनुः ॥ १३ ॥

कथंचास्मदीयं निशाचरनाथमाततायिनमनुजानीमः ।

**शूर्पणखा**—( निश्वस्य ) जह णिरुविदं कणिठ्ठमादामहेण । अहो काल्लस्स माहप्पं । यथानिरूपितं कनिष्ठमातामहेन । अहो कालस्य माहात्म्यम् । जं दाणिं तिहुवणलच्छिलीलावन्दिआरे महाराअरावणे वि एव्वं मन्दिअदि । यदिदानीं त्रिभुवनलक्ष्मीलीलाबन्दीकारे महाराजरावणेप्येवं मन्यते ।

**माल्यवान्**— वत्से,

मुनिरपि गुरुर्दिव्यास्त्राणां बभूव दिवौकसा-
मजगवधनुर्भंगे तावानहो स महोत्सवः ।
रघुपतिगुणक्रीतामेतामवेहि जगत्रयीं
विपरिणमते दौर्जन्यं तु प्रभुत्वपदेन नः ॥ १४ ॥

---

धर्मेण विजयवान् धर्मविजयी तेन, जनकानुमतिपूर्वकमारोपितचापेनेतियावत् प्रसह्य हठात्कारेण । महाप्रमादः महाननर्थः स्यात् दोःस्तंभेति । अयं रामः दोस्तंभद्वयस्य स्तंभसदृशबाहुद्वयस्य दर्पडंबरइति अंसलत्वगर्वइतिवदेयुरितिकृत्वा स्पष्टं प्रकाशं नविस्पन्दते नवल्गति धनुरारोपणौत्सुक्यं न दर्शयतीति भावः । वैदेह्याः करबंधसूचनमिति विवाहाभिलाषसूचनस्यादिति व्रीडया लज्जया न प्रस्तौति प्रसंगागतमपि नवक्ति, इत्यालोच्य एवं तदभिप्रायमिंगितैर्विमृश्य कृतस्मितैः बलविनयलज्जानां तस्मिन्नैसर्गिकत्वदर्शनेन ईषत्स्मयमानैः मुनिभिः शतानन्दादिभिः आदिष्टेन येन रामेण तादृग्धनुः इतरैरप्रकंप्यं पिनाकं क्षणात् आत्तं गृहीतं सज्जितं आरोपितं आञ्छितं आयमितं "आछि आयामे" सहसा बलेन लाघवेनेतियावत् भग्नं च आमर्दितं च ॥ १३ ॥

नकेवलमनर्थएवापितु पातकमपिस्यादित्याह कथंचेत्यादिना । आततं अधिकं पापमेतीत्याततायिभ्यमिदइत्याद्युक्तलक्षणस्तं "आततायिनमायान्तं हन्यादेवाविचारयन्" इति स्मृत्यर्थं जानन्तोऽपि कथं तत्रानुज्ञांकुर्मः । बन्दीकारे निग्राहके । एवं मन्यते अनर्थउत्प्रेक्ष्यते । मुनिरिति मुनिरपि विश्वामित्रोऽपि अनेन तदनुग्रहस्यानैकान्तिकत्वंसूचितम् । दिव्यास्त्राणां जृंभकाद्यमानुषायुधानां गुरुः उपदेष्टा

**शूर्पणखा**—को सन्देहो **कः सन्देहः** । तास्सिं विवाहमहोस्सवे सव्वं मए पच्चक्खीकिदं । **तास्मिन् विवाहमहोत्सवे सर्वंमया प्रत्यक्षीकृतम्** ।

**माल्यवान्**— तदेवमेकलोष्टवधः स्यात् तथाहि मिथिलां प्रविश्य बलादाकृष्यमाणे कलत्रे कथं तितिक्षेत राजपुत्रः तंचोत्तिष्ठमानं पौरजानपदाः प्रकृतयोऽप्यनूत्तिष्ठेरन् । किंपुनरंगसंबंधिनो बांधवाः यथोक्तं । "आरण्योऽग्निरिव दुःसहदुःखामर्षजं तेजो विक्रमयति मण्डलस्य चानुग्राह्यो भवति" इति ।

**शूर्पणखा**— (दीर्घमुष्णंचनिश्वस्य) अज्ज किंदाणिं णुत्तं, आर्य किमिदानीं, युक्तम् ॥

---

बभूव एवमाधातृशक्तिमुक्त्वाऽऽधेयशक्तिमाह अजगवधनुषः पिनाकस्य भंगे आमर्दनसमये दिवौकसां देवानां द्यौः ओको येषामिति विग्रहे पृषोदरादित्वाद्वृद्धिः दिवमित्यदन्तशब्दान्तरमिति केचित् । तावान् स महोत्सवः यावांस्त्रिपुरसंहारे तावानिति भावः । अहो आश्चर्यं । किंबहुना एतां जगत्त्रयीं रघुपतिगुणैः क्रीतीं वशीकृतां "क्रीतात्करणपूर्वादिति ङीष् । अवेहि जानीहि । एवं रामगुणोत्कर्षमुक्त्वा स्वदोषमाह नस्तु प्रभुत्वपदेन नियन्तृत्वव्याजेन "पदं शब्दे च वाक्ये च व्यवहारापदेशयोः" इति विश्वः । दौर्जन्यं दौष्ट्यं । विपारिणमते विशेषेण वर्धते तस्मादपि कालवैपरीत्यं न्याय्यमिति भावः ॥ १४ ॥

एकलोष्टवधःस्यात् । एकस्यैव पुरुषस्य बहुभिःसंहत्य लोष्टैः (पांसुपिण्डैः) यो वधः क्रियते स एकलोष्टवधः सर्वेऽपि संहत्य हन्युरितिभावः । "यथाऽश्मानमृत्वा लोष्टो विध्वंसेत" इत्यादि श्रुत्या आसन्यप्राणायद्रोग्धुकामा आसुरपाप्मानो यथा विनेशुरेवंरामद्रुहोऽपीत्यपि ध्वन्यते । कलत्रे सीतायां, राजपुत्रः रामः कथंतितिक्षेत सहेत "गुप्तिज्किद्भ्यःसन्" । उत्तिष्ठमानं दारापहारिप्रमथनाय यतमानं तं रामं अनुपश्चात् पौराश्च जानपदाश्च पौरजानपदाः उभयत्र भवार्थेऽण् । अंगसंबंधिनः शरीरेणसंबद्धाबांधवाः अनूत्तिष्ठेरन्निति किमुवक्तव्यम् । तत्र वृद्धसंमतिमाह **आरण्य इत्यादिना** अरण्ये (वने) भवः आरण्यः "अरण्याण्णः" । दुस्सहेन दुःखेन अमर्षेण (कोपेन) वा जायत इति दुस्सहदुःखामर्षजं तेजः "अधिक्षेपावमानादेः प्रयुक्तस्यपरेण यत् । प्राणात्ययेप्यसहनं तत्तेजस्समुदाहृतम्" इत्युक्तलक्षणं कर्तृ । विक्रमयति विक्रमवन्तंकरोति । मण्डलस्य राष्ट्रस्य अनुग्राह्यः अनुग्रहार्हो भवति । राष्ट्रस्थाः सर्वेऽपि तस्य सहायाः स्युरिति यावत् ।

**माल्यवान्**— शृणु वत्से, कार्यज्ञाऽसि । अस्ति वनौकसांमन्त्री जांबवान्नाम समतंगाश्रमवास्तव्यामुपसृत्य श्रमणां नाम सिद्धशबरीमभ्यर्थितवान् । यथाऽस्य वालिनो वैराग्येण क्षीणलुब्धापसारिताः प्रकृतयः किष्किन्धायां कुमारं सुग्रीवमभिषेक्ष्यमाणाः सामवायिकमैक्ष्वाकं रामभद्रमवेक्षन्ते ।

**शूर्पणखा**— (सातंकं) कहं खत्तिअवोदो वालिणिग्गहे सहाओ समीहिअदि । **कथं क्षत्रियपोतो वालिनिग्रहे सहायः समीह्यते** । तदो तदो **ततस्ततः** ।

**माल्यवान्**—ततश्चायोध्यातः कैकेय्या भरतवार्त्ताहरणाय प्रेषिता मंथरानाम वृद्धदासी कठोरतरतरणितापज्वालावलीढजीवितामिथिलाप्रान्ते तिष्ठतीति निदाघकिरणान्तेवासी सतीर्थ्यमृषिं याज्ञवल्क्यमुपस्थाय संप्रत्येव निमेषमात्रान्निवृत्तो हनुमान् कथयति । अतस्त्वमस्मदनुरोधेन हनूमदवेक्षितस्वशरीरा परपुरप्रवेशविद्यया मन्थराशरीरमधितिष्ठन्ती मिथिलामुपेत्य प्रत्ययिता संविधानमिदं दशरथगोचरीकरिष्यसि । इत्थंभाविना गुरुनिदेशचर्याप्रसंगेन पंकपाषाणविषमकण्टकव्यालबहुलां दण्डकारण्यानीमनुप्रविष्टः सर्वथा वैदेशिको राजपुत्रः स्वकार्यगौरवान्नियतमेष वालिवधपूर्वकेण प्रतीकाराभिसंधिना सुग्रीवमुपगृह्णीयादिति।

---

वनौकसां ऋक्षवानरगोपुच्छादीनां । वास्तव्यां वसन्तीं "वसेस्तव्यत्कर्तरि णिच्च" इति कर्त्तरितव्यत् । सिद्धशबरीं सिद्धिसंपन्नां शबरजातिभवां । यथास्येत्यारभ्य सुग्रीवमुपगृह्णीयादित्यन्तं श्रमणां प्रतिजांबवदभ्यर्थनं । वैराग्येण राजकर्मोपेक्षया । क्षीणाः दरिद्राः अतएव लुब्धाः धनादिकांक्षिणः अतएवापसारिताः नगराद्विद्राविताः सत्यः । सामवायिकं समवायसमवायिनं सहायमितियावत् । "समवायान्समवैति" इति ठक् । अवेक्षन्ते प्रतिपालयन्ति । समीह्यते प्रतीक्ष्यते चिन्त्यते वा । कठोरस्य अत्युग्रस्य तरणितापस्य सूर्यसंतापस्य ज्वालया अवलीढं व्याप्तं जीवितं यस्यास्सा अतीवश्रान्तेति यावत् । निदाघकिरणान्तेवासी सूर्यशिष्यः । समाने तीर्थे (गुरौ) वसतीति सतीर्थ्यः एकगुरुकः तं सूर्यशिष्यमिति यावत् "समानतीर्थेवासी" इति यः । "तीर्थेये" इति समानस्यसादेशः । उपस्थाय संगत्य । हनूमता अवेक्षितं पालितं स्वशरीरं यस्याः तथाभूतासती । परपुरप्रवेशविद्यया परकायप्रवेशविद्यया मन्थरायाःशरीरं बुद्धिं अधितिष्ठन्ती प्रविशन्तीसती प्रत्ययिता कृतप्रत्ययासती विश्वासमुत्पाद्येति यावत् इदं संविधानं कैकेय्या वरद्वयप्रार्थनारूपं गुरुनिदेशचर्याप्रसंगेन पित्राज्ञाचरणहेतोः । पंकैः कर्दमैः पाषाणैः तीक्ष्णाग्रैरुप-

**शूर्पणखा**—( सकौतुकम् ) किं उणतंसांविधाणं । किं पुनस्तत्संविधानम्
( माल्यवान् कर्णे एवमेवेति कथयति )

**शूर्पणखा**—( हसन्ती ) अहो ठेरभल्लूअस्स कुसलद्दा च । तदोतदो ।
अहो स्थविरभल्लूकस्य कुशलताच । ततस्ततः ।

**माल्यवान्**—ततश्चसा शबरयोगिनी सुग्रीवगुणानुरागेण सर्वंतथेत्युररीकृत्य तदैव विदेहाभिमुखी प्रस्थितेति जनस्थाननिवासिभिर्निशाचरैरागत्य निवेदितं । अमुना जांबवत्प्रयोगेण फलवताविराधप्रभृतिभिरधिष्ठितेषु विन्ध्यगिरिगह्वरेषुविहरतः सुकरं कलत्रापहरणं । अस्मदीयास्तुमायाः सुरासुरप्रधनप्रथमरेखायोधस्य विबुधपातिवितीर्णमायामहामन्त्रधारिणो दशरथस्य सन्निधौ न प्रभवन्ति ।

**शूर्पणखा**— ( सविचिकित्सम । ) अज्ज, उवणदस्स कहं एव्वं करिअदि
आर्य उपनतस्य कथमेवं क्रियते ।

**माल्यवान्**— साधु वत्से, वृद्धसंवादिनी ते दृष्टिः । यदाहुः । "योह्युपनतस्य पुत्रदारानवमन्यते । तस्योद्विग्नम्मण्डलमभावायोत्तिष्ठते" इति, किंपुनरस्मासु नैष निसर्गतेजस्वी संश्रयवृत्तिमातिष्ठते ।

---

लखण्डैश्च विषमां निम्नोन्नतां कण्टकैः सूच्यग्रैः व्यालैः सर्पैः दुष्टगजैर्वा हिंस्रजन्तुभिर्वा बहुलां निबिडां "व्यालो दुष्टगजे सर्पे श्वापदे नान्यवत्खले ।" इति मेदिनी । दण्डकारण्यानीं दण्डकाख्यं महावनं "इन्द्रवरुण" इत्यादिना अरण्यशब्दस्यानुङ्ङीष् च "हिमारण्ययोर्महत्वे" इति महत्वे वृत्तिः । वैदेशिकः देशान्तरे भवः सन् स्वकार्यगौरवात् विदेशे स्वरक्षणार्थं सहायान्तरस्यावश्यकत्वात् । प्रतीकाराभिसंधिना प्रत्युपकाराभिप्रायेण । "उपकारं करोम्यस्य ममाप्येषकरिष्यति । अयं वापि प्रतीकारो वालिसुग्रीवयोरिव ।" इत्युक्तत्वात् स्थविरभल्लूकस्य जांबवतः । उररीकृत्य अंगीकृत्य । ऊर्यादित्वाद्गतिसंज्ञा । विहरतः रामस्येति शेषः अनादरेषष्ठी रामं मायया वञ्चयित्वेति भावः । तर्हि तत्रैव क्रियतां तत्राह । अस्मदीया इत्यादि । उपनतस्येति श्रितदारापहरणस्यान्याय्यत्वादिति भावः । दृष्टिः ज्ञानं वृद्धसंवादिनी शिष्टानुमता । तत्सम्मतिमाह य इत्यादिना । उपनतस्य शरणं प्रपन्नस्य अवमन्यते अपहरति हिनस्ति वा । मण्डलंराष्ट्रं उद्विग्नं अयमेव न्यायोऽस्मास्वपिस्यादिति भीतं सत् तस्याभावाय नाशाय उत्तिष्ठते प्रवर्तते । नातिष्ठते न प्रतिजानीते नांगीकरोतीत्यर्थः "आङः प्रतिज्ञायाम्" इति तङ् । किमपिरूपं प्रत्ययस्तु उन्मीलयन्तः

**शूर्पणखा**— हुं अण्णं भणामि अवि एव्वं करिस्सइ रामभद्दो । हुं । अन्यत्फणामि । अप्येवं करिष्यति रामभद्रः ।

**माल्यवान्**— कः संशयः लोकोत्तरं किमपि रूपमुन्मीलयन्तो जगति राज्योपभोगेभ्यो जुगुप्सन्ते महानुभावाः ।

**शूर्पणखा**— अण्णं किं वि अणत्थंतरं तत्थ आपडिअंदि तक्केमि । अन्यत्किमप्यनर्थान्तरं तत्रापतितमिति तर्कयामि ।

**माल्यवान्**— कीदृशं तत् ।

**शूर्पणखा**— मए जणअणअरादो णिग्गदाए सुदं । जह खण्डिअसिरिखण्डसरासणस्स दासरहिणो मच्छरेण सअलखत्तिअकिदंदो परसुरामो आअदोत्ति । मयाजनकनगरान्निर्गतयाश्रुतं । यथा । खण्डितश्रीकण्ठशरासनस्य दाशरथेर्मत्सरेण सकलक्षत्रियकृतान्तःपरशुराम आगत इति ।

**माल्यवान्**— सर्वमुपपद्यते ।

भुजार्गलितनर्मदामकरचक्रदंष्ट्रांकुर-
व्रणप्रकरकर्कशं किमपि बिभ्रदुग्रं वपुः ।
स येन परशौ हुतो नृपतिरर्जुनः कौतुका-
दसौ कथमुपेक्षते गुरुधनुर्व्यलीकं मुनिः ॥ १५ ॥

---

आपरोक्ष्येण पश्यन्तः सन्तः । राज्योपभोगेभ्यः उपलक्षणमेतत् सर्वविषयेभ्योऽपि जुगुप्सन्ते वैराग्येण घृणां कुर्वते । "तस्माज्जुगुप्सेत" इति श्रुतेः इदानीं शंकान्तरोत्थापनव्याजेन जामदग्न्यप्रवेशं सूचयितुमाह अन्यदिति । मत्सरेण विजयश्रीद्वेषेण भुजेति । येन परशुरामेण भुजैः अर्गलितायाः निरुद्धप्रवाहायाः नर्मदायाः रेवानद्याः मकरचक्रस्य ग्राहसमूहस्य दंष्ट्रांकुराणां दंष्ट्राग्राणां व्रणप्रकरेण क्षतसमूहेन कर्कशं क्रूरं । अत एव किमपि सर्वविलक्षणं उग्रं भीषणं वपुः शरीरं दधत् बिभ्रत् "नाभ्यस्ताच्छतुः" इति नुम्निषेधः । सोऽर्जुनः नृपतिः परशौ स्वायुधे कौतुकाल्लीलया । हुतः प्रक्षिप्तः हत इति यावत् । एतेन परशुरामस्य महाबलत्वं गुरुद्रोहासहत्वं च सूचितं । पुराकिलकृतवीर्यपुत्रः सहस्रभुजोऽर्जुनः कदाचित्परशुरामस्य पितुर्जमदग्नेराश्रमं ससैनिकोगतः । महर्षिणाचालितरामातिथ्येन तर्पितः सन् तत्सर्वं तदीयहोमधेनुमहिमानमवेत्य तं मुनिं हत्वा तां च धेनुं हठादाजहार । ततश्च विदितवृत्तान्तः परशुरामस्तंन्यवधीदिति भारती कथा । असौ मुनिः परशुरामः गुरुधनुषः पिनाकस्य व्यलीकं भंगरूपमप्रियं कथमुपेक्षते अनादृत्यवर्त्तते अतस्तत्सर्वमुपपद्यते ॥ १५ ॥

परमनेनापि सकलमूर्धाभिषिक्तकंधरारुधिरावसेकपंकिलकुठारेण दुरभिभवो दाशरथिः ।

**शूर्पणखा**— (साभ्यसूयम्) अहो दुग्धमुहे तस्सिं खत्तिअवटुए एव्वं संभावेदि कणिट्ठमादामहो । अहो दुग्धमुखे तस्मिन् क्षत्रियवटौ एवं संभावयति कनिष्ठमातामहः ।

**माल्यवान्**—(विहस्य) वत्से, नैतावज्जनासि ।

**सर्वराजकदुर्धर्षं सर्वदेवमयं धनुः**
**भञ्जता रामभद्रेण विजिग्ये भुवनत्रयम् ॥ १६ ॥**

इदानींतु

**राजन्यरुधिराम्भोधिकृतत्रिषवणो मुनिः ।**
**प्राप्तः परशुरामोऽसौ नविद्मः किं भविष्यति ॥ १७ ॥**

तदेहि राजकुलमेव गच्छावः । (इतिनिष्क्रान्तौ । मिश्रविष्कम्भः ।)

(नेपथ्ये) भो भो जनकाग्निहोत्रपरिचारकाः, पाद्यं पाद्यं अर्घ्यमर्घ्यम् ।

---

सकलानां मूर्धाभिषिक्तानां राज्ञां कंधरारुधिरावसेकेन कण्ठरक्तसेचनेन पंकिलः कर्दमितः कुठारः परशुः यस्य तेन । दुरभिभवः अजय्यः । साभ्यसूयं रामस्य सर्वोत्कर्षगुणाकर्णनासहिष्णुतया तत्र दोषारोपणपूर्वकं । **सर्वेति** । सर्वेण राजकेन राजसमूहेन "गोत्रोक्ष" इत्यादिना राजन् शब्दात्सामूहिकोवुञ् । दुर्धर्षं दुरारोपं सर्वदेवमयं सर्वदेवहेतोरागतं सर्वदेवरक्षणार्थं प्रयत्नेन निर्मितमिति यावत् । तत आगताधिकरणे हेतुमनुष्येभ्यइत्यनुवर्तमाने "मयट्च" इतिहेत्वर्थे मयट् । धनुः पिनाकं भञ्जता रामभद्रेण भुवनत्रयं विजिग्ये विजितं वशीकृतं । कर्मणि लिट् ॥ १६ ॥

**राजन्येति** । असौ परशुरामः राजन्यानां रुधिराम्भोधौ रक्तमयतटाके कृतं त्रिषवणं त्रिकालस्नानं येनसः । तर्हि दृष्टविजयत्वात्स एव जयेत्तत्राह इदानींतु वर्त्तमानेतु मुनिरेव नतु शस्त्राभ्यासकथाप्यस्ति तस्मात् "आम्नायानामयोगेन विद्यां प्रशिथिलामिव ।" इति न्यायेन संशयितत्वादिति भावः । तर्हि निर्विचिकित्सादाशरथेर्जयप्राप्तिस्तत्राह प्राप्तइति नाहि जामदग्न्यः आत्मनः शिक्षावैधुर्यं जानन्नपि परजयार्थीसन्नागच्छेदितिभावः । तस्मात् किं भविष्यति कतरोनयो रामयोर्जेष्यतीति न विद्मः ॥ १७ ॥

नेपथ्य इति इयं चूलिका पादाय इदं पाद्यं अर्घाय (पूजाविधये) इदं अर्घ्यं

आजन्मब्रह्मचारी विपुलभुजशिलास्तंभविभ्राजमान-
ज्याघातश्रेणिसंज्ञान्तारितवसुमतीचक्रजैत्रप्रशस्तिः ।
वक्षःपीठे घनास्त्रव्रणकिणकठिने संक्ष्णवानः पृषत्कान्
प्राप्तो राजन्यगोष्ठीवनगजमृगयाकौतुकी जामदग्न्यः ॥ १८ ॥

अपिच । एष स्त्रैणकपोलकुंकुमलिपिस्तेयातिभीरौ भुजे
बिभ्राणश्चतुरन्तराजविजयिज्यानादरौद्रं धनुः ।
तूणावेव पुनस्तरां द्रढयति स्वादन्तरस्मात्पटा-
दाकृष्टैः कुशचीरतन्तुभिरतिक्रुद्धो मुनिर्भार्गवः ॥ १९ ॥

---

"पादार्घाभ्यां च" इति यत् । संभ्रमार्थो द्विरुक्तिः । आजन्मेति । आजन्म जननादारभ्य ब्रह्मचारी ब्रह्मचरणशीलः नैष्ठिक इति यावत् एतेन महातपस्वित्वं सूचितं । विपुलभुजयोरेव शिलास्तंभयोः विभ्राजमानया दीप्यमानयाज्याघातश्रेण्यैव धनुर्गुणास्फालनपङ्क्त्यैव संज्ञया कालान्तरेऽपिभूतार्थसूचनव्यञ्जनेन ( अक्षरेणेति यावत् ) सम्यग्ज्ञायते अनयेतिसंज्ञा "आतश्चोपसर्गे" इत्यङ् । अन्तरितापिहि-ता वसुमतीचक्रस्य भूमण्डलस्यजैत्राणां जयशीलानांवीराणां प्रशस्तिः प्रख्यातिः येनसः । एतेनाप्रतिभटत्वंसूचितं । घनास्त्राणां अतिदृढायुधानां व्रणकिणेन क्षतज-नितचिह्नेन कठिने कर्कशे वक्षःपीठे पृषत्कान् बाणान् संक्ष्णुवानः उत्तेजयन् सन् । "क्ष्णु तेजने" समःक्ष्णुवः "इत्यात्मनेपदं । एतेन तस्यानेकयुद्धविजयित्वंत्वक्सा-रश्च सूचितः । राजन्यगोष्ठ्याएव क्षत्रियसमाजस्यैव वनगजानां मृगयायां "आखेटोमृगयास्त्रियां" इत्यमरः । कौतुकी कुतूहली एतेन तत्प्रसादनार्थपूजाया आवश्यकत्वं सूचितं जमदग्नेरपत्यं जामदग्न्यः परशुरामः गर्गादित्वाद्यञ् । प्राप्तः आगतः ॥ १८ ॥

एष इति । एषभार्गवो मुनिः परशुरामः अतिक्रुद्धः अतीव कोपनः सन् स्त्रैणयोः स्त्रीसंबंधिनोः "स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्" इतिनञ् कपोलयोः गण्डयोः कुंकुमलिपेः काश्मीररचनाविशेषस्य स्तेये चौर्यविषये मार्जन इति यावत् । "स्तेनाद्यन्नलोपश्च" इति यन्नलोपौ । अतिभीरौ अतीवभीते । नैष्ठिकत्वेन स्यग्राम्यधर्माप्रसक्तेरिति भावः । भुजेबाहौ चत्वारः अन्तायस्यतच्चतुरन्तं भूम-ण्डलं तत्र ये राजानः तेषां विजयि, ज्यानादेन शिञ्जिनीघोषेण रौद्रं भयंकरं धनुः बिभ्राणः सन् स्वात् स्वकीयात् "पूर्वादित्वेन पाक्षिकत्वात्स्मादादेशाभावः । अन्त-रस्मात् उपसंव्यानात् उत्तरीयादित्यर्थः । "अन्तरं बहिर्योगोपसंव्यानयोः" इति

(ततः प्रविशति शरचापहस्तः क्रुद्धोद्धतो जामदग्न्यः ।)

**जामदग्न्यः**—(सखेदम्) यथामृष्टभोजिना कृतान्तेन प्रत्यवसितास्तादृशाः सांयुगीनाः । वर्त्तमानेषु ।

**शस्त्राशस्त्रिकथैव का नवभवद्गीर्वाणपाणिंधमाः**
**पन्थानो दिवि संकुचन्ति वसुधा वन्ध्या न सूते भटान् ।**
**लक्ष्मीरप्यरविन्दसौधवलभीनिर्यूहपर्यङ्किका-**
**विश्रान्तैरलिभिर्न कुञ्जरघटागण्डोद्भवैर्मोदते ॥ २० ॥**

---

सर्वनामता । पटात् वस्त्रात् आकृष्टः उद्धृतः कुशचीराणां तन्तुभिः सूक्ष्मावयवैः करणे तृतीया । पुनस्तरां भूयोभूयः तूणावेव इषुधीएव दृढयति अशिथिलं बध्नाति। एतेन युद्धोन्मुखत्वं सूचितं ॥१९ ॥

सूचितपात्रप्रवेशमाह तत इत्यादिना । क्रुद्धः रुष्टः उद्धतः गर्वितश्च सन्। सखेदं गुरुचापभञ्जनश्रवणजनितदुःखेन सह । मृष्टमनतिक्रम्ययथामृष्टंपर्याप्त-मित्यर्थः । तथाभोक्तुं शीलमस्येति यथामृष्टभोजीतेन कृतान्तेन मृत्युना "कृतान्तो यमसिद्धान्ता" इत्याद्यमरः । तादृशः संयुगे ( युद्धे ) साधवः सांयुगीनाः प्रति-जनादित्वात्खञ् । प्रत्यवसिताः खादिताः, "प्रत्यवसितगिल्तिखादितप्सातं ।" इत्यमरः। शस्त्राशस्त्रीति । शस्त्रैश्च शस्त्रैश्च प्रहृत्येदं युद्धं प्रवृत्तं शस्त्राशस्त्रि प्रहरणयुद्धं "तत्र तेनेदमितिसरूपे" इति समासः । "इच् कर्मव्यतिहारे" इतीच् । "अन्येषामपिदृश्यते" इति पूर्वपदस्य दीर्घः । तिष्ठद्गवादिष्विचः पाठा-दव्ययीभावत्वं । तत्कथैवका तत्प्रसक्तिरेवनास्तीति भावः । ततः किमायातं तत्राह नवभवद्गीर्वाणानां युद्धाभिहतानां सद्यएवदेवत्वेन वीरस्वर्गमगच्छतां पाणिधमाः हस्त-तालविशिष्टाः अस्फुटवर्त्मसुप्रदेशेषु हिंस्रापनयनाय पाणिध्मापनं प्रसिद्धमेव पाणयः ध्मायन्तेऽत्रेति पाणिधमाः "ध्मा शब्दाग्निसंयोगयोः" "उग्रंपश्य" इत्यादिनानिपातनात्साधुः । पन्थानः मार्गाः दिविस्वर्लोके संकुचन्ति अनभ्यासा-त्विलीभवन्ति । तत्र हेतुमाह वसुधाभूः वंध्यासती अत एव भटान् वीरान् न सूते ततश्च लक्ष्म्या अनाश्रयत्वंजातमित्याह लक्ष्मीरपि सौधस्य प्रासादस्य वलभ्याः गोपानस्याः निर्यूहः नागदन्तकः अरविन्दमेव सौधवलभीनिर्यूहः तस्य पर्यंकिका गर्भः तत्र विश्रान्तैः कृतश्रमपरिहारैरेव अलिभिः भ्रमरैः मोदते संतोषमनुभवति नतु कुञ्जरघटायाः गजवृन्दस्य गण्डोद्भवैः मदवर्षिकटवर्त्तिभिः अलिभिः मोदते । तादृशां राज्ञामभावाल्लक्ष्मीः पद्मालयैवसंवृत्तेति भावः ॥ २० ॥

(सविमर्शाश्चर्यम् । )

शंभौ यद्गुणवल्लरीमुपनयत्याकृष्य कर्णान्तिकम्
भ्रश्यन्ति त्रिपुरावरोधसुदृशां कर्णोत्पलश्रेणयः ।
स्वं चास्फालयति प्रकोष्ठकमिमामुन्मुच्य तासामहो
भिद्यन्ते वलयानि दाशरथिना तद्भग्नमैशं धनुः ॥ २१ ॥

( सरोषाविकटं परिक्रामन् ) भोभो विदेहाः, क्व रामो दाशरथिः ।

यस्मिन्नर्जुनदोःसहस्रनलकप्रोद्गच्छदस्रच्छटा
जिह्वाले जुहवांबभूविम रुषा राजन्यसत्तामपि ।
अद्य प्राक्कबलग्रहस्य विघसीभूतेष्वपि क्षत्रिय-
क्षुद्रेषु क्षुधितश्चिरेण परशुस्तेनायमन्विष्यते ॥ २२ ॥

---

शंभाविति । शंभौ शिवे यस्य पिनाकस्य गुणवल्लरीं ज्यालतां आकृष्य कर्णान्तिकं उपनयति प्रापयति सति त्रिपुरावरोधसुदृशां त्रिपुरासुरान्तःपुरस्त्रीणां कर्णोत्पलश्रेणयः कर्णपूरपङ्क्तयः भ्रश्यन्ति गलन्ति । पिनाके कर्णान्तमाकृष्टे शत्रवो म्रियन्ते ततश्च तत्स्त्रीणां वैधव्यप्राप्तेः कर्णोत्पलधारणं न भवतीति भावः । (असंगत्यलंकारः) "विरुद्धं भिन्नदेशत्वं कार्यहेत्वोरसंगतिः" इति तल्लक्षणोक्तेः । वामनमतेतु विरोधालंकारः । एवमुत्तरार्धेऽपि । शंभौ इमां ज्यावल्लरीं उन्मुच्य मुक्त्वा स्वंप्रकोष्ठकं कूर्परस्याधोभागं आस्फालयति आस्फोटयतिसति । तासां असुरीणां वलयानि कंकणानि भिद्यते भेदं प्राप्नुवन्ति त्रुट्यन्तीति यावत् । कर्मकर्तरिप्रयोगः तदैशंधनुः दाशरथिनाभग्नं अहो दशरथो हि एवं मदभियोगेषु कार्पण्यप्रकाशनेनैव कालयापनं कृतवान् तत्पुत्रोऽतिदुष्करकर्मकृतवानित्याश्चर्यं ॥२१॥

यस्मिन्निति । अर्जुनस्यकार्तवीर्यस्यदोःसहस्रस्य नलकात् मांसवेधशलाकातः प्रोद्गच्छन्त्या अस्रच्छटया रक्तप्रवाहेण जिह्वाले ज्वालावति लौहित्यसामान्यात्तथारूपणं । राजन्यानां सत्तामपि शिशुगर्भादीनपीतिभावः । रुषा पितृवधामर्षेण जुहवांबभूविम वयं हुतवन्तः । "भीह्रीभृहुवां श्लुवच्च" इति श्लुवद्भावामादयः अनेनतदातस्यातिक्रोधपारवश्यंसूच्यते । अन्यथापारोक्ष्यासंभवाल्लिटोनुपपत्तेः तस्मात् "बहुजगदपुरस्तात्" इत्यादाविवप्रत्ययान्तरेण बुद्धिपारोक्ष्यं सूचितं । प्राक्कबलग्रहस्य पूर्वं भक्षितग्रासग्रहणस्य विघसीभूतेषु भुक्तावशिष्टतांगतेषु "भुक्तशिष्टंतु विघसं" इतिमानवे । क्षत्रियक्षुद्रेषु अल्पक्षत्रियेषुविषये अद्य मे परशुः क्षुधितः बुभुक्षितः "क्षतिक्षुधोरिट्" तेन हेतुना अयं रामः अन्विष्यते युद्धार्थं मृग्यते ॥ २२ ॥

( ततः प्रविशति सधैर्यसंभ्रमो दाशरथिः )

**दाशरथिः**—साकं शक्तिधरेण तत्रभवतो देवाद्भवानीपते-

र्यः सम्यञ्चमवाप चापनिगमं सम्यञ्चि सामानि च ।
शूराणां तपस्विनांच परमांकाष्ठामाधिष्ठास्नुभि-
स्तेजोभिर्भगवानसौ भृगुपतिर्दिष्ट्याऽद्यदर्शिष्यते ॥ २३ ॥

**जामदग्न्यः**—( सखेदोपालभं । आत्मानंप्रति )

भस्मांकुरेति खुरलीकलहेकुमार-
मप्याक्षिपन् परुषरोषमदांधचेताः ।
दृष्टोऽस्मि यः कृतमिथोहसितं शिवाभ्यां
तच्चापभंगमपिहा मसृणः शृणोमि ॥ २४ ॥

सधैर्यसंभ्रमंवीराभिगमनशक्त्या धैर्यं तपस्विप्रतीक्षणेन संभ्रमः ताभ्यां सह साकमिति । यः भार्गवः तत्रभवतः पूज्यात् देवात् सर्वज्ञात् भवस्य स्त्री भवानी " इन्द्रवरुण " इत्यादिना आनुङ्ङीष् च तस्याः पतिः शिवः तस्मात् । यद्यपि भवशब्देनैवसिद्धे भवानीपतिरित्यनावश्यकत्वादपुष्टार्थमेव तथाऽपि क्वचित्कविसंप्रदायोनिरंकुशएव । " आख्यातोपयोगे " इति पञ्चमी । शक्तिधरेण साकं सुब्रह्मण्येन सह सम्यञ्चं साधुतरं चापनिगमं धनुर्वेदं सम्यञ्चि सामानि च " गीतिषुसामाख्या " इत्युक्तलक्षणान् वेदभागान् एतदुपलक्षणमन्येषामपि वेदानां अवाप अधीतवान् ततश्च किमित्यत आह शूराणां च धनुर्वेदपारीणत्वात् तपस्विनां च वृत्ताध्यनादिसंपत्या परां काष्ठां निरतिशयमुत्कर्षं "काष्ठोत्कर्षे स्थितौ दिशि" इत्यमरः । अधिष्ठास्नुभिः सम्यक्प्राप्तवद्भिः तेजोभिः उपलक्षित इति शेषः इत्थंभावे तृतीया । असौ भगवान् भार्गवः दिष्ट्या भाग्येन अद्य दर्शिष्यते दृष्टो भविष्यति । कर्माणि लृट् । " स्यसिच् " इत्यादिना चिण्वद्भावे इट् ॥ २३ ॥

उपालंभः गुरुद्रोहश्रवणानन्तरमियताऽपिकालेन प्रतीकाराकरणात्स्वस्य निन्दा । भस्मांकुरेति योऽहं खुरलीकलहे लक्ष्यबंधननिमित्ते कलहे "खुरली लक्ष्यबंधनं" इति यादवः । परुषेण रोषमदेन कोपजनितगर्वेण अंधं अविविक्तं वाच्यावाच्यविवेकशून्यमितियावत् चेतः यस्य तथाभूतःसन् कुमारमपि सुब्रह्मण्यमपि हे भस्मांकुर भग्नव्रतस्य पुत्र "भग्नव्रतात्समुत्पन्नो योऽसौ भस्मांकुरःस्मृतः । "इत्युक्तत्वात् मुनिपत्नीद्वाराशिवस्य भग्नव्रतत्वमवगन्तव्यं इत्याक्षिपन् गर्हयन्सन् शिवा च शिवश्च शिवौ" "पुमान् स्त्रिया" इत्येकशेषः ताभ्यां पार्वतीपर-

( विमृश्य ) अहो मामरण्यवासिनमुपश्रुत्य दुरात्मना रघुकुलकुटुंबकेन दूरमुच्छ्वसितं ।
( किंचिदुच्चैः )

रे काकुत्स्थाः कथं वः श्रुतिविषयमयं नागमद्भार्गवीयो
दुःसामन्तापचारप्रचितपितृवधामर्षनिस्तारबंधुः ।
वारानासन्नविंशान्विशसितविषमक्षत्रजातिप्ररोहः
क्रोधादुत्कृत्तगर्भामिषरुधिरवसाविस्रगंधिः कुठारः ॥ २९ ॥

**रामः**— ( दृष्ट्वासहर्षबहुमानं )

जेतारं दशकन्धरस्य रभसाद्दोःश्रेणिनिःश्रेणिका-
तुल्यारूढसमस्तलोकविजयश्रीपूर्यमाणोरसम् ।
यः संख्ये निजघान हैहयपतिं शत्रोर्मुखं दृष्टवान्
यः पृष्ठं ददतोऽपि षण्मुखजये सोऽयं कृती भार्गवः ॥ २६ ॥

---

मेश्वराभ्यां कृतमिथोहसितं मद्धाष्टर्यजनितपरस्परहासोयथा तथा । दृष्टोऽस्मि तस्य (एवं प्रत्यक्षमाक्रोशति परप्रेमास्पदं पुत्रमाक्षिपत्यपि मयि कृतप्रसादस्य) शिवस्य चापभंगमपि मसृणःश्लक्ष्णः अविदीर्णहृदयः सन् शृणोमि हाकष्टम् ॥ २४

उच्छ्वसितं अवलिप्तं । रे काकुस्थाइति । तुच्छत्वार्थं रे इत्युक्तं । रामापराधेन तत्कुटुंबस्य सर्वस्यापिनिग्राह्यत्वद्योतनाय बहुवचनं कार्त्तवीर्यापराधेन क्षत्रजातौ तदारोपवत् । दुःसामन्तस्य दुष्टक्षत्रियस्यार्जुनस्य अपचारेण अक्रमेण प्रचितस्य प्रवृद्धस्य पितृवधामर्षस्य पितृसंहारजनितकोपस्य निस्तारे कृतार्थताऽऽपादने बंधुः सहायः । अत एव क्रोधात् आसन्ना विंशतिः येषां तान् आसन्नविंशान् वारान् एकविंशतिकृत्वइतियावत् । "संख्ययाऽव्ययासन्न" इत्यादिना बहुव्रीहिः। "बहुव्रीहौ संख्येये" इत्यादिनाडाच् । "तिविंशतेर्डिति" इतितिलोपश्च । अत्यन्तसंयोगेद्वितीया । विशसितः नाशितः क्षत्रजातेः प्ररोहः येन तथाभूतः उत्कृत्तानां छिन्नानां गर्भाणां कुक्षिस्थशिशूनां आमिषस्य मांसस्य रुधिरेण रक्तेन वसया मेदसाच विस्रगंधिः अल्पामगंधवान् चिरेण तत्कर्माभावात्प्राक्तनगंधस्याल्पत्वमिति भावः । "अल्पाख्यायां" इतिगंधशब्दस्येत्वं "गंधोगंधक आमोदेलेशे संबंधगर्वयोः" इतिविश्वः । भार्गवस्यायं भार्गवीयः अयं कुठारः वः श्रुतिविषयं कथं नागमत् नप्राप्तःकिं, येनैवमपराद्धमितिभावः ॥ २९ ॥

जेतारमिति । यः रभसाद्वेगेन दशकंधरस्य रावणस्य जेतारं दोःश्रेणिभिः बाहुपरंपराभिरेव निःश्रेणिकाभिः अधिरोहणीभिः "निःश्रेणिस्त्वधिरोहणी" इत्य-

(क्षणं च निर्वर्ण्य । सस्मितम् ।) अहो संकीर्यमाणानेकरसानुभावगंभीरमधुरोऽयमस्याभोगः । तथाहि ।

जटां धत्ते मूर्ध्नि परशुधनुषी बाहुशिखरं
प्रकोष्ठो रौद्राक्षं वलयमिषुदण्डानपि करः ।
प्ररूढप्रौढास्त्रव्रणविकटरौद्राद्भुतमिदं
प्रशान्तामैणेयीं त्वचमपि च वक्षः कलयति ॥ २७ ॥

(इत्युपसर्पति ।)

**जामदग्न्यः**— (विलोक्य) कथमसौ श्रूयमाणगुणानुरूपकल्पिताकारसंवादी दाशरथिः । साधु रे राजन्यपोत, साधु ।

---

मरः । तुल्यं समकालं आरूढया ऊर्ध्वमागतया समस्तलोकस्य विजयश्रिया पूर्यमाणं निरन्तरं कृतं उरः वक्षः यस्य तं । अत्र "नारिकेलादिषु द्वैधं" इति द्विरूपकोशाभिधानात् उरःशब्दस्य नारिकेलादित्वं कल्पयित्वा उरसमितिरूपान्तरमेष्टव्यं । अन्यथा समासान्तविधेर्दुर्वारत्वात् तस्यानित्यत्वंवा वक्तव्यं । और-समितिपाठे उरःशब्दस्य प्रज्ञाद्यणिति बोध्यं । हेहयपतिं अर्जुनं संख्ये युद्धे निजघान निहतवान् । किंचायं षण्मुखजये स्कन्दकर्मकपराभवे पृष्ठंददतोऽपिपलायनेनेतिशेषः । शत्रोः स्कन्दस्यमुखं दृष्टवान् षण्मुखत्वेन तस्य पृष्ठतोऽपि मुखसंभवात् विद्रावितवानित्यर्थः । कृती भाग्यवान् सोऽयं भार्गवः दृश्यत इति शेषः २६

संकीर्यमाणानां मिश्रीभूतानां अनेकरसानां शान्तवीरभक्तिभयानकबीभत्सरौद्राद्भुताख्यविरुद्धनानारसानां अनुभावेन तत्तदनुगुणचिन्हेन "भ्रूविक्षेपकटाक्षादिविकारो हृदयस्थितं । भावं व्यनक्ति यः सोऽयमनुभावइतीरितः ।" इत्युक्तलक्षणेन । गंभीरो दुर्धर्षः मधुरः प्रियश्च अस्यमुनेराभोगः आकारः । तदेव समर्थयति जटामिति । अस्यमूर्धाशिरः जटां धत्ते अनेन तपस्विलिंगेन शान्तरसानुभावः सूचितः । बाहुशिखरं अंसः परशुं धनुश्च धत्त इति सर्वत्रानुवर्त्तते । अनेन वीररसानुभावः, प्रकोष्ठः कूर्पराधोभागः रौद्राक्षं रुद्राक्षनिर्मितं वलयं जपमालां । अनेन भक्तिरसानुभावः । करः इषुदण्डान् । अनेन भयानकरसानुभावः । गृहीतबाणत्वेन दर्शनमात्रेण भयजननात् । प्ररूढैः किणीभूतैः प्रौढानां युद्धवीराणां अस्त्रव्रणैः (अनेन बीभत्सरसानुभावः) विकटं निम्नोन्नतं अत एव रौद्रं अद्भुतं च एतेन रौद्राद्भुतरसयोरनुभावः । इदं वक्षः कर्तृ । प्रशान्तां मोक्षार्हध्यानस्य साधनभूतां ऐणेयीं त्वचं कृष्णाजिनं कलयति धत्ते । काव्यलिंगमलंकारः । अनेकरसवत्वस्य समर्थनात् ॥ २७ ॥

सविधमुपसरन्समूलकाषं कषितनृपान्वयमद्यमांधिनोषि ।
हरिमिव करिकुंभकोटिकूटप्रकटकठोरनखांकुरं कुरंगः ॥ २८

**रामः** (सस्मितम् ।) भगवन् भार्गव, गुरुगर्भरूपयोरेतावदेवान्तरम् ।

आदेष्टा भगवान्भृगुर्जननयोरौत्पत्तिकब्राह्मयो-
देवो धूर्जटिरस्त्रकर्मणि गुरुर्वीर्यं तु दूरे गिराम् ।
सप्तद्वीपवतीं ददद्भुवमभिप्रैषि द्विजान् कश्यप-
प्रायानप्रतिमप्रभाव भवते कस्मैचिदस्मै नमः ॥ २९ ॥

**जामदग्न्यः**—अरे क्षत्रियडिंभ तवानेन सत्यसौजन्ययोरुत्कर्षेण किम-प्यन्तराप्यायितोऽस्मि

किंतु ।

---

संवादी सदृशः । सविधमिति । कुरंगः हरिणः करिकुंभकूटानां अयोधनवद्दृढतराणां गजमस्तकानां कोटिषु अग्रभागेषु प्रकटाः विशदाः तद्भेदन-क्षमा इति यावत् । कठोराः नखांकुराः नखाग्राणि यस्य तं हरिमिव सिंहमिव त्वं सविधमुपसर्पन् मत्समीपमागच्छन् सन् समूलकाषं मूलेन सहवर्त्तत इति समूलं "निमूलसमूलयोः कषः" इति णमुल् कषादित्वादनुप्रयोगश्च । कषितः हिंसितः नृपान्वयः राजवंशः येन तं मामद्यधिनोषि प्रीणयसि ॥ २८ ॥

गर्भरूपस्य अतिशिशोः तन्महत्वमेवाह आदेष्टेति । भगवान् भृगुः औत्पत्तिकस्य उत्पत्तिनिमित्तकस्य गर्भाधानस्येति यावत् । ब्राह्मस्य वेदग्रहणस्य उपनयनस्येति यावत् । तयोर्जननयोः जन्मनोः आदेष्टाभवतः कर्त्ता एतेन जन्म-संस्कारयोर्वैशिष्ट्यं दर्शितं । धूर्जटिः शिवः देवः सर्वज्ञत्वद्योतनार्थमिदं विशेषणं । भवतः अस्त्रकर्मणि विषये गुरुः उपदेष्टा एतेनाप्रतिबंधज्ञानवत्वमस्त्रविद्यायां दर्शितं । भवतः वीर्यं तु गिरां दूरे वागविषयं अतिमानुषमिति भावः । सप्त द्वीपाः (जंब्वादयः) सन्त्यस्या इति सप्तद्वीपवती तां समाहारपक्षे तु पात्रादित्वं वक्तव्यं बहुव्रीहिणा सिद्धेऽपि मतुब्ग्रहणं प्रशंसार्थं । भुवं ददत् दास्यन् सन् वर्त्तमान-सामीप्याल्लट् । कश्यपप्रायान् तत्प्रमुखान् अभिप्रैषि संप्रदानकर्मतया इच्छसि ददासीत्यर्थः कस्मैचिदस्मै अनिर्वचनीयमाहात्म्याय तस्मै भवते नमः ॥ २९ ॥

सौजन्यं प्रियवादिता विनयो वा । आप्यायितोऽस्मि तर्पितोऽस्मि । तथापि तव दुःसहापराधेन क्रोधो नशाम्यतीत्याह किंत्विति तदेव व्यनक्ति

नाराचैः कृतवीर्यनन्दनवधूबाष्पप्रियंभावुकै-
रुत्पाद्य क्षतजोदमर्णवमथन्युप्तं पितृभ्यः पयः।
संप्रत्यस्य समस्तबाहुजभुजः क्रोधस्यनिर्वास्यतः
क्षुन्दानो धनुरैन्दुशेखरमहो जातो भवानिंधनम् ॥ ३० ॥

**रामः**—(स्मित्वा) भगवन्।

बालस्वभावसुलभेन कुतूहलेन कृष्टन्धनुर्भगवतो वृषभध्वजस्य।
तत्रानुषंगिकममंगलमीदृशंतु संवृत्तमत्र न मयागणितस्त्वमासीः ॥ ३१ ॥

**जामदग्न्यः**—आः क्षत्रियडिंभ, प्रमथनाथप्रथमान्तेवासिनं परशुराममपि भवान्नाजीगणत्।

महासेनोयस्य प्रमदयमदंष्ट्रासहचरैः
शरैर्मुक्तो जीवन् द्विरिव शरजन्मा समभवत्।
इमांच क्षत्राणां भुजवनमहादुर्गाविषमा-
मयं वीरो वारानजयदुपविंशान्वसुमतीम् ॥ ३२ ॥

---

**नाराचैरिति।** कृतवीर्यनन्दनस्य अर्जुनस्य वधूनां बाष्पप्रियंभावुकैः अश्रुप्रियभूतैः तत्कारणैरिति यावत् प्रियंभावुकशब्दः सुभगंभावुकवत् नाराचैः बाणैः क्षतजोदमर्णवं रक्तमयजलपूर्णं ह्रदं उत्पाद्य निर्वर्त्य। अथ अनन्तरं पितृभ्यः पयः न्युप्तं निवापजलं दत्तं वपेर्यजादित्वात्किति संप्रसारणम्। संप्रति ऐन्दुशेखरं धनुः पिनाकं क्षुन्दानः भञ्जन् भवान् समस्तबाहुजानां सर्वक्षत्रियाणां भुजः भोक्तुः भुजेः क्विप्। निर्वास्यतः शममेष्यतः अस्य क्रोधस्य कोपाग्नेः इन्धनं समित् (करणेल्युट्।) जातः संवृत्तः ॥ ३० ॥

स्मित्वा परबलमज्ञात्वा विकत्थनेन ईषद्धासंकृत्वा। **बालेति।** भगवन् बालस्वभावस्य बाल्यस्य सुलभेन स्वतःसिद्धेन कुतूहलेन हेतुना उत्साहेन चापलेन वा भगवतो वृषभध्वजस्य शिवस्य धनुः कृष्टं मयेतिशेषः। तत्र तु आकर्षणसमये पुनः ईदृशममंगलं भञ्जनरूपमशुभं आनुषंगिकं संवृत्तं प्रासंगिकं प्राप्तं अत्र भंगविषये त्वं मया गणितोनासीः न चिन्तितोऽसि अज्ञानादिति बाह्यार्थः। त्वयाऽकिंचित्करत्वादित्यन्तराशयः ॥ ३१ ॥

आः क्रोधे। नाजीगणत् न गणितवानसि "ई च गणः" इति गणयतेश्चङ्यभ्यासस्यपाक्षिकमीत्वम्। काका अपह्नूयते त्वयेति भावः। आत्मनः प्रख्यातत्वमेव स्फुटयितुमाह महासेन इति। महासेनः स्कन्दः प्रमदेन विशिष्टो

**रामः** शान्तंशान्तं प्रसीदभगवन्, अविमृश्यकारितया नगणितोऽसि । नपुन-
रवलेपात् ।

स्त्रीषुप्रवीरजननी जननी तवैव
देवीस्वयं भगवती गिरिजाऽपि यस्यै ।
त्वद्दोर्वशीकृतविशाखमुखावलोक-
व्रीडाविदीर्णहृदया स्पृहयांचकार ॥ ३३ ॥

**जामदग्न्यः**— ( विहस्य )

अनुभवपुनरुक्तां मुञ्चनस्तोत्रचर्या-
मुपनमय तदेतत्कौशिकोपज्ञमस्त्रम् ।
क्षिपतिनखलुकालं वीरगोष्ठीविनोद-
प्रियपरशुरयंमेबाहुरुद्यच्छमानः ॥ ३४ ॥

---

यमः प्रमदयमः शाकपार्थिवादित्वात्समासः तस्य दंष्ट्रया सहचरैः सदृशैः यस्य शरैः मुक्तः परित्यक्तः सन् । अत एव जीवन् प्राणधारणं कुर्वन् सन् द्विः वारद्वयं "द्वित्रिचतुर्भ्यः सुच्" शरजन्मेव समभवत् । पूर्वं तु शरवणे जातः युद्धे तु मच्छरात्कृच्छ्रान्मुक्तत्वात्पुनर्जात इवासीदिति भावः । अयं वीरः अहं च क्षत्राणां भुजवनैरेव महता दुर्गेण विषमां दुर्गमां इमां वसुमतीं भुवं उपविंशान्वारान् एकविंशतिकृत्वः । आसन्नविंशवत्प्रक्रिया । अजयत् जितवान् । तस्मादज्ञानादगणितत्वमपह्नव एवेति भावः ॥ ३२ ॥

अविमृश्यकारितया अनालोच्यकरणात् । अवलेपोगर्वः । स्त्रीष्विति । स्त्रीषुमध्ये प्रवीरजननी वीरसूः तव जनन्येव नान्येत्यर्थः । यस्यै त्वन्मात्रे "स्पृहेरीप्सितः" इति चतुर्थी । देवीस्वयं भगवती आप्तकामाऽपि गिरिजा पार्वती तव दोर्भ्यां बाहुभ्यां वशीकृतस्य द्वन्द्वयुद्धे जितस्य विशाखस्य स्कन्दस्य "विशाखः शिखिवाहनः" इत्यमरः मुखावलोकेन म्लानमुखदर्शनेन या व्रीडा लज्जा तया विदीर्णं दूनं हृदयं यस्यास्तथाभूता सती स्पृहयांचकार वाञ्छति स्म । वीरजननीं त्वन्मातरमात्मनः श्रेष्ठाममन्यतेति भावः । एवं स्थितेऽन्येषां काकथेति तात्पर्यं ॥ ३३ ॥

अनुभवेति । अनुभवेन पुनरुक्तां सिद्धत्वान्निष्प्रयोजनां नः स्तोत्रचर्यां मुञ्च माहं स्तुत्वा प्रसादयेय इति भावः । कौशिकस्य उपज्ञा ( आद्यज्ञानं ) कौशिकोपज्ञं तेन पूर्वं दृष्टमित्यर्थः "उपज्ञोपक्रमं तदाद्याचिख्यासायां ।" इति

**रामः**— (स्वगतम्) अयेभगवन्तं विश्वामित्रमपिस्पृशति । भवत्वेवंतावत् ।
(प्रकाशं सधैर्यस्मितम्)

भूमात्रं कियदेतदर्णवमितंतत्साधितंहार्यते
यद्वीरेण भवादृशेन वदतात्रिःसप्तकृत्वो जयम् ।
डिंभोऽयंनवबाहुरीदृशमिदंघोरंचवीरव्रतं
तत्क्रोधाद्विरम प्रसीद भगवन् जात्यैवपूज्योऽसि नः ॥ ३९ ॥

**जामदग्न्यः**— (सक्रोधं । स्वगतम्) अहोदुरात्मनोराजन्यपोतस्य महावीरप्रहतायाः पद्धतेरस्खलितमुक्तिप्रत्युक्तिवैदग्ध्यम् । (प्रकाशम्) आःपाप, जात्यैव केवलमहं पूजनीयः परशुरामः । कथमद्यापि निरायुधोऽसि ।

विनयनिचुलितैर्भवद्वचोभिः किमपिनवं विवृणाद्विरक्रमंनः ।
अयमजनिकरः कृतान्तदंष्ट्राक्रकचकठोरकुठारदुर्निरीक्षः ॥ ३६ ॥

---

क्लीबत्वं । तदेतदस्त्रं उपनमय सज्यीकुरु । वीरगोष्ठीविनोदे युद्धविहारे प्रियः परशुर्यस्य सः अत एव उद्यच्छमानः युद्धोद्यतः "समुदाङ्भ्यो यमोऽग्रन्थे" इत्यात्मनेपदं । अयं मे बाहुः नक्षिपति खलुकालविलंबनं न सहतेहि ॥ ३४ ॥

स्पृशति आक्षिपति । भूमात्रमिति त्रिःसप्तकृत्वः एकविंशतिवारान् प्रथमं त्रिशब्दस्य क्रियाभ्यावृत्तौ सुच् ततः सप्तन्शब्देन "विशेषणं विशेष्येण बहुलं" इति समासः ततः कृत्वसुच् । यद्वा त्रिःशब्दस्य सप्तकृत्वःशब्दस्य च सुप्सुपेति समासः । जयं वदता भवादृशेन वीरेण यत् हार्यते हारितं क्रियते (प्रतिग्राह्यते कश्यपादीनित्यर्थः) तत् अर्णवमितं समुद्रपारिच्छिन्नं भूमात्रं भूमिरेव न ततोऽभ्यधिकं किंचित्तस्मात्कियदेतत्साधितं अत्यल्पं कृतं तत्रेदमाश्चर्यं येन पदे पदे स्तूयत इति भावः तर्हि किमाश्चर्यं तत्राह । अयमहं डिंभः अर्भकः नवबाहुः इतः पूर्वमगृहीतास्त्रः । इदं वीरव्रतं च पिनाकारोपणव्यवसायश्च ईदृशं घोरं अतिनिष्ठुरमितरदुष्करत्वात् । एवं स्थिते का ते स्तुतिरिति भावः । तत्कोपाद्विरमकोपं नियच्छ । "जुगुप्साविराम" इत्यादिना पञ्चमी । भगवन् प्रसीद तर्हि युध्यतां किमनुनयेनेत्यत आहत्वं जात्यैव ब्राह्मणत्वेनैव नः पूज्योऽसि न तु वीर्याधिक्येनेति भावः ॥ ३९ ॥

उक्तेः वाक्यस्य प्रत्युक्तिकावैदग्ध्यं प्रत्युत्तरसामर्थ्यं महावीरैः प्रहतायाः अभ्यस्तायाः पद्धतेः मार्गात् अस्खलितं अभ्रष्टं तदनुसारीति यावत् । निरायुधोऽसीति तद्वधस्यान्याय्यत्वादिति भावः । विनयेति । विनयेन प्रश्रयेण निचुलितैः

(उच्चैश्च) अहोनुखलुभोभोः, ।

त्रैलोक्यत्राणशौण्डः सरसिजवसतेर्यः प्रसूतो भुजाभ्यां
स क्षत्रं नामवर्णः कुलिशकठिनयोर्यस्य दोष्णोर्विलीनः ।
ज्वालाजिह्वालकालानलकवलभयभ्रान्तदेवासुराणि
व्यातन्वानो जगन्ति ज्वलति मुनिरयं पार्वतीधर्मपुत्रः॥ ३७ ॥

(नेपथ्ये) भो भो भार्गव भार्गव, ।

अप्रवृत्तिविषयं वितन्वतः क्षत्रशब्दमियमेवमेदिनी ।
दक्षिणा तव बभूव यज्वनो मुञ्चसंप्रतितु शुष्कमायुधम् ॥ ३८ ।

**जामदग्न्यः**—अये प्रशान्तगंभीरस्वरः कएषः । जनकेन भवितव्यम् । (तदभिमुखमवलोक्य) राजर्षे सीरध्वज, भगवतः सूर्यशिष्यात्पुराणवाजसनेयिनो याज्ञवल्क्यादधीतब्रह्मसिद्धान्तो गृहीतवाक्यएवासि । किंतु नायमवसरः शिष्टानुरोधस्य ।

---

पिहितैः किमपि दुःश्रवं नवं अपूर्वं नः अक्रमं विवृणद्भिः प्रकाशयद्भिः भवद्वचोभिः अयं करः मद्दक्षिणहस्तः कृतान्तदंष्ट्रावत् मृत्युदशनाग्रवत् स्थितैः क्रकचैः करपत्रसदृशधाराभिः कठोरेण उग्रेण कुठारेण दुर्निरीक्षः दुःखेनापि निरीक्षितुमशक्यः अजनि जातः । उद्धृतपरशुरस्मीति भावः ॥ ३६ ॥

उच्चैरिति अतिक्रुद्धत्वात् । त्रैलोक्येति । त्रैलोक्यस्य त्राणे रक्षणे शौण्डः समर्थः सरसिजवसतेः ब्रह्मणः भुजाभ्यां यः प्रसूतः जातः "बाहू राजन्यः कृतः" इति श्रुतेः । क्षत्रन्नाम प्रसिद्धं नियतलिंगत्वात्क्लीबत्वं सः वर्णः जातिः कुलिशवत् वज्रवत् कठिनयोः यस्य दोष्णोः विलीनः मारित इत्यर्थः जगन्ति ज्वालाभिः शिखाभिः जिह्वालस्य जिह्वाविशिष्टस्य कालानलस्यप्रलयकालाग्नेः कवलभयेन ग्रसनभीत्या भ्रान्ताः मुग्धाः देवासुरा येषु तथाभूतानि व्यातन्वानः कुर्वाणः पार्वत्याः धर्मपुत्रः शिष्यः अयं मुनिः जामदग्न्यः ज्वलति कोपेन दीप्यते ॥ ३७ ॥

भोभो इत्यादि जनकवचनं । अप्रवृत्तीति । क्षत्रशब्दं अप्रवृत्तिविषयं प्रयोज्यव्यक्त्यभावात्प्रयोगानर्हं वितन्वतः ततश्च यज्वनः तत्प्रायश्चित्तार्थं विधिवदिष्टवतः तव इयमेव मेदिनी दक्षिणा बभूव । एतेन समाप्तव्रतत्वं दर्शितं । संप्रति तु शुष्कं प्रयोज्याभावान्निष्फलं आयुधं मुञ्चत्यज (वृ) रथोद्धता ॥ ३८ ॥

प्रशान्तः (ज्ञानेन) गंभीरः (वैराग्येण) स्वरः यस्य सः । जनकेन भवितव्यमित्यनेन अनुमानं नाम गर्भसंध्यंगमुक्तं भवति" "अभ्यूहोलिंगतोऽनु

अवनिमधिकविंशानभ्यवस्कन्द्य वारा-
नवभृथभृतकेभ्यः संप्रदाय द्विजेभ्यः ।
विरमति रमणीयद्वन्द्वयुद्धात्कथं मे
निखिलनृपतिहत्यादृष्टसारः कुठारः ॥ ३९ ॥

(नेपथ्ये) भृगुतिलक नमस्ते मुञ्चवैमत्यमेत-
त्कुरुकरुणमिदानीं मानसंमानशौण्ड ।
वहति बत किमस्त्रंपुत्रभाण्डेऽपि रामे
त्रिजगदभयदानस्थूललक्षो भुजस्ते ॥ ४० ॥

**जामदग्न्यः**— (रामंप्रति) अरेधीरकर्कशस्वरः कएषः ।

**रामः**— (सप्रश्रयं) भगवन् अयं तातोरघुपतिः ।

**जामदग्न्यः**— (सव्यथम्) धिक् सर्वतः क्षत्रकण्टकोद्भेदः ।
(नेपथ्याभिमुखं) भोभोराजन् दशरथ, अस्मन्नामधेयमात्रमित्रेण सूनुनामुनामानार्होऽसि । किंपुनरनभिज्ञएवासि वीरव्यवहारस्य ।

---

मा" इतितल्लक्षणोक्तेः गृहीतवाक्योऽसि विज्ञातमहावाक्यार्थोऽसि । अवनिमिति । अधिकविंशान्वारान् एकविंशतिकृत्वः पूर्ववत्प्रक्रिया । अभ्यवस्कन्द्यनाशयित्वा क्षत्रियानितिशेषः अवभृथभृतकेभ्यः दीक्षान्तकर्मकर्तृभ्यः द्विजेभ्यः ऋत्विग्भ्यः ब्राह्मणेभ्यः "भृतकोभृतिभुक्कर्मकरोवैतनिकोऽपिसः" इत्यमरः । अवनिं भुवं संप्रदाय दत्वा निखिलनृपतीनां सर्वक्षत्रियाणां हत्यया वधेन "हनस्तच" चाल्यप् । दृष्टसारः विज्ञातबलः मेकुठारः रमणीयात् नातिकर्कशात् द्वयोर्युद्धं द्वन्द्वयुद्धं तस्मात् "द्वन्द्वं रहस्ये कलहे तथामिथुनयुग्मयोः" इति विश्वः । कथं विरमति अन्यथा मदैन्यस्यादितिभावः । "विभाषाकथमिलिङ्च" इति लट् ॥ ३९

भृगुतिलकेति । (एतद्दशरथवचनं) भृगतिलक, अनेन कोपानर्हत्वं दर्शितं । ते तुभ्यं नमः । एतद्वैमत्यं कोपं मुञ्च जहिहि । हे मानशौण्डप्रख्यातसामर्थ्य, एतेनकृपणशरण्यत्वं दर्शितं मानसं कर्मइदानीं करुणं कुरुकरुणाविशिष्टं विधेहिकरुणाशब्दादर्शआद्यच् । त्रिजगतः अभयदानेस्थूललक्षः बहुप्रदः "स्युर्वदान्यस्थूललक्षदानशौण्डा बहुप्रदे" इत्यमरः । ते भुजः पुत्रभाण्डे पुत्ररूपमूलधने "स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने" इत्यमरः । रामे विषये किं किमिति अस्त्रंवहति आयुधं गृह्णाति । बतखेदे ॥ ४० ॥

क्षत्रियकण्टकानां बहुपक्षुद्रशत्रूणां सूच्यग्राणां वा तद्वद्व्यथाकरत्वात्

पुरमथनधनुःप्रमर्दनोत्थं प्रदहदहर्दिवमस्तितीव्रमार्चिः ।
रघुजनककुटुंबबाष्पपूरैः परमिहशान्तिमुशन्ति शस्त्रभाजः ॥ ४१ ॥

( पुर्नेपथ्ये ) आः जामदग्न्य, किमेवमतिप्रसक्तः सन्न्यस्तशस्त्रानपिबलाद्धनुर्ग्राहयसि।

**जामदग्न्यः**— ( सरोषम् ) अरेविदेहप्रसवपांसन ।

अयमधिपतिर्भासामेकान्तरो भवतोगुरु-
स्त्वमसितपासि त्वं वर्षीयानितिस्म तितिक्ष्यसे ।
कथमसि धनुर्नामग्राहीतदेष समाप्यसे
मम हि सकलक्षत्रालंभक्रतोरमृतं भवान् ॥ ४२ ॥

( नेपथ्ये ) भार्गव भार्गव, च्यवनादिवृद्धवाक्यनिगृहीतसंप्रहारक्रियासमभि-

---

उद्भेदः अंकुरः । "सूच्यग्रे क्षुद्रशत्रौच लोमहर्षेचकण्टकः" इत्यमरः । पुरमथनेति । पुरमथनधनुःप्रमर्दनोत्थं पिनाकभंगजातं अतएव तीव्रं अर्चिः कोपाग्निः अहर्दिवं अहन्यहनि "अचतुर" इत्यादिना निपातनात्साधुः । प्रदहदस्ति प्रकर्षेणान्तर्दहद्वर्त्तते । इहरघुजनकयोः कुटुंबानां पोष्यवर्गाणां बाष्पपूरैः रामवधजनिताश्रुप्रवाहैः शस्त्रभाजः वीराः परं नितरां शान्तिं निर्वाणं कोपार्चिष इति शेषः । उशन्ति इच्छन्ति "वशकान्तौ" "ग्रहिज्या" इत्यादिना संप्रसारणं ॥ ४१ ॥

आ इत्यादिजनकवाक्यं । अतिप्रसक्तः अतिक्रान्तमर्यादः सन्न्यस्तशस्त्रानपि त्यक्तायुधानपि । बलाद्धनुर्ग्राहयसि त्वदक्रमेण त्वन्निग्रहार्थं धनुर्जिघृक्षुरस्मीति भावः । पांसन निन्द्य । अयमिति । अयं भासामधिपतिः सूर्यः भवतः एकान्तरः एकव्यवधानविशिष्टगुरुः तत्प्रशिष्यत्वात्तव किं च त्वं तपसि मनोनिग्रहे असि वर्त्तसे "मनसश्चेन्द्रियाणां च ऐकाग्र्यं परमं तपः" इति स्मरणात् । यद्वा । तपसि अध्यात्मदर्शने असि । किं च । त्वं वर्षीयान् वृद्धतरः इति एतैर्हेतुभिः "इति हेतुप्रकरणप्रकाशादिसमाप्तिषु ।" इत्यमरः तितिक्ष्यसेस्म क्षान्तोऽसि पूर्वं न निहत इति भावः। स्वार्थिकसन्नन्तात्तिजेः कर्मणि लट् । धनुर्नामग्राही कथमसि तत्राप्यनर्हं इति भावः । तत् एष भवान् सकलक्षत्राणां आलंभः विशसनमेव क्रतुः यस्य तस्य मम अमृतं यज्ञशिष्टभोजनं "अमृतं यज्ञशेषस्यात्पीयूषे सलिले घृते ।" इति वैजयन्ती । "यज्ञशिष्टामृतभुजः" इति भगवद्गीतासुच । समाप्यसे हन्यसे इत्यर्थः ॥ ४२ ॥

भार्गवेत्यादिशतानन्दवचनं । संभ्रमार्थं द्विरुक्तिः । च्यवनादीनां वृद्धानां वाक्येन निगृहीतः परित्यक्तः संप्रहारस्य युद्धस्य क्रियासमभिहारः पौनःपुन्यं

हारस्य भवतः परे ब्रह्मणि वर्त्तमानस्य पुनरुपप्लवन्ते बुद्धयः । तद्विरम कियच्चिरमपरमिव भवन्तं नटयिष्यत्यायुधपिशाचिका ।

**जामदग्न्यः**—(विहस्य) अहो याज्यकुलस्नेहः शतानन्दमाकुलयति भवतु सांत्वयामितावदेनं । (तदाभिमुख) आंगिरस,

नृपस्ते पाल्योऽयं मम पशुपुरोडाशरसिकः
पृथिव्यामव्याजोद्भटभुजभृतः सन्ति रघवः ।
अमीषामुत्सिक्तं किमपि कुलमुत्कृत्य लवशो
विधाता तत्सर्वं यदभिरुचितं ते भृगुपतिः ॥ ४३

(नेपथ्ये) आः पाप क्षत्रियायाःपुत्र क्षत्रियभ्रूणहत्यामहापातकिन्, निसर्गनिष्प्राणं हि प्रहरणमिक्ष्वाकूणां ब्राह्मणेषु तैर्यादृशस्तादृशोवा सोढव्योऽसि । कथमेवमतिक्रामन्नस्माकमपि ब्रह्मवर्चसान्नबिभेषि ।

**जामदग्न्यः**— (सरोषहासं) अरेब्रह्मबंधो बांधकिनेयगौतमगोत्रपांसन

---

भृशार्थो वा येन तथाभूतस्य परे ब्रह्मणि वर्त्तमानस्य ब्रह्मध्यानाभ्यासं कुर्वाणस्य भवतः बुद्धयः बुद्धिवृत्तयः पुनः उपप्लवन्ते विक्षेपं प्राप्नुवन्ति । तत् विरमशान्तिमाप्नुहि "योगारूढस्य तस्यैव शमः कारणमुच्यते" इति स्मृतेः । आयुधपिशाचिका तदभिनिवेशः । अपरमिव पृथग्जनमिव भवन्तं कियच्चिरं कियन्तं कालं नटयिष्यति प्रवर्त्तयिष्यति । नृप इति । आंगिरस, पशुपुरोडाशरसिकः कर्मठ एव न तु युद्धकुशल इत्यर्थः अयं ते नृपः जनकः मम पाल्यः मया रक्षणीयः "कृत्यानां कर्त्तरि वा" इति षष्ठी । अयमेव तवाभिप्राय इति भावः । पृथिव्यां भूमौ रघवः अव्याजं यथा तथा उद्भटभुजभृतः गंभीरदोष्मन्तः सन्ति अमीषां रघूणां किमप्युत्सिक्तं अतीवगर्वितं कुलं लवशः कणं कणं अल्पार्थे शस् । उत्कृत्य छित्वा तदनन्तरं भृगुपतिः परशुरामः ते तव यदभिरुचितं यदिष्टं तत्सर्वं विधाता कर्त्ता रामवधवर्जं त्वदिष्टं सर्वं करोमीति भावः ॥ ४३ ॥

आइत्यादिपुनः शतानन्दवचनं । पापत्वं मातृहननादिति भावः । क्षत्रियायाःपुत्रेत्यत्र "षष्ठ्या आक्रोशे" इत्यलुक् । ततश्चानुलोम्यक्षेपोदर्शितः । क्षत्रियाणां भ्रूणहत्यया गर्भहिंसनेन पातकिन् निष्प्राणं निर्व्यापारं यादृशस्तादृशोवा यथेष्टप्रवृत्तिरपि सोढव्योऽसि मर्षणीयोऽसि "सहिवहोरोदवर्णस्य" इत्योत्वं । एवं यत्किंचित्कारिण्यपि ब्राह्मणे इक्ष्वाकूणां शस्त्राग्रहज्ञानेन । ब्रह्मवर्चसादपि वृत्ताध्ययनादिजन्यब्रह्मतेजसोऽपि "ब्रह्महस्तिभ्यां वर्चसः" इति

कुर्युः शस्त्रकथाममी यदि मनोर्वंशे मनुष्यांकुराः
स्याच्चेद्ब्रह्मगणोऽयमाकृतिगणस्तत्रेष्यते चेद्भवान् ।
सम्राजां समिधांवसाधकतमं धत्ते-च्छिदाकारणं
धिङ्मौर्वीकुशकर्षणोल्वणकिणग्रन्थिर्ममायंकरः ॥ ४४ ॥

( नेपथ्ये ) भार्गव

त्वं वेदवानसि वसिष्ठगुरोः सनाभिः
स्वायंभुवः सभगवान्प्रभवोगुरुस्ते ।
तेनातिमात्रमसृणंहृदयं मदीय-
मद्यापि नत्रटति शाम्यतु ते कुदृष्टिः ॥ ४५ ॥

---

समान्तोऽच् । ब्रह्मबंधोब्राह्मणाधम "ब्रह्मबंधुरधिक्षेपे" इत्यमरः बंधक्याः कुलटायाः अपत्यं बांधकिनेयः । कल्याण्यादित्वादिनङ्ढक्च । कुर्युरिति । मनोर्वंशेमनुष्यांकुराः रामादयः शस्त्रकथां कुर्युर्यदि कथाया एवासंभाव्यत्वात्कुतोवा तत्प्रयोग-इतिभावः । एतेन "इक्ष्वाकवो ब्राह्मणे शस्त्रं न गृह्णीयुः" इत्यस्योत्तरमुक्तं गृह्णन्त्वस्त्रं ततो न बिभेमीति । अस्माकं ब्रह्मवर्चसादपि न बिभेषीत्यस्योत्तरमाह ब्रह्मगणः ब्राह्मणजातिः आकृतिगणःस्याच्चेत् आकृतिमात्रेण नतु कुलादिनागण्यते चेत् यथाहि व्याकरणेऽनिर्धारितानां शिष्टपरिगृहीतानां शब्दानां साधुत्वायाकृति-गण इष्टः एवंत्वामपि शिष्टा ब्राह्मणत्वेनांगीकुर्युश्चेदपित्वद्ब्रह्मवर्चसान्नबिभेमीति भावः । उभयत्रोपपत्तिमाह मौर्व्याःज्यायाःकुशानांच कर्षणेन उल्वणः अधिकः किणग्रन्थिः यस्मिन् तथाभूतो ममायं करः सम्राजां क्षत्रियाणां समिधांच होमार्थं कुशादीनां छिदायां द्वैधीकरणे भिदादित्वादङ् । कारणं हेतुभूतं स्वस्य ब्रह्मवर्च-सित्वदर्शनाय समिधां छिदाकारणमित्युक्तं । साधकतमं करणं कुठारमिति यावत् । धिक् निष्फलं यथातथा "धिग्भर्त्सनेच निन्दायां निष्फलेकुत्सनेऽपि च" इति विश्वः । धत्तेबिभर्तिइयता कालेन रामादीनां भवतश्चाध्वंसनादिति भावः ॥ ४४ ॥

भार्गवेत्यादि पुनर्दशरथवचनं । त्वमिति । हे भार्गव, त्वं वेदवानसि अधी-तवेदोऽसि अयमेकोहेतुः । द्वितीयस्तु । वसिष्ठाख्यस्य अस्मद्गुरोः त्वं सनाभिः सपिण्डः "सपिण्डास्तुसनाभयः" इत्यमरः तृतीयस्तु स्वयंभुवः ब्रह्मणः अपत्यं स्वायंभुवोभृगुः संज्ञापूर्वकाविधेरनित्यत्वान्नगुणः । ते प्रभवः कूटस्थः, चतुर्थस्तु । सभगवान् महेश्वरः ते गुरुः, अत्रक्रमालङ्कारः । तेन उक्तकारणचतुष्टयेन मदी-यं हृदयं अतिमात्रं अत्यर्थं मसृणं स्निग्धं शान्तं वा सत् । अद्यापि ईदृशपरुष-वाक्यबाहुल्यश्रवणेऽपि नत्रुटति न भिद्यते न विक्रियत इति यावत् तस्मात्

**जामदग्न्यः**—( उच्चैर्हासं ) किमात्थरे दशरथ, नाद्यापि हृदयं त्रुटतीति अथवा त्रुत्यतु यदेष नव्याप्रियते परशुः । ( नेपथ्ये ) आः जामदग्न्य गुरूनधिक्षिपसि

पुरोजन्मानाद्यप्रभृति ममरामः स्वयमहं
न पुत्रः पौत्रोवा रघुकुलभुवांच क्षितिभुजाम् ।
अधीरं धीरं वा कलयतु जनोमामयमयं
मया बद्धोदुष्टद्विजमथनदीक्षापरिकरः ॥ ४६ ॥

**जामदग्न्यः**—( सावज्ञं रामं प्रति ) अरे किमयं लक्ष्मणो भवन्तं पुरोजन्मानं नापदिशति ।

---

ते कुदृष्टिः इयं दुर्बुद्धिः शाम्यतु विरमतु । "शमामष्टानांदीर्घःश्यनि" इतःपरं न सहेयेति भावः ॥ ४९ ॥

अप्रगल्भस्य दशरथस्य "अद्यापि न त्रुटतीतिवचनमुच्चैर्हासे हेतुः । परिहसनार्थं तद्वाक्यमनुवदति नाद्यापीति । यत् यावत् नव्याप्रियते नप्रयुज्यते । तावत्रुत्यतु "वाभ्राश" इत्यादिना त्रुटेः श्यन्वा । आ इत्यादिलक्ष्मणवचनं । पुरोजन्मेति । अद्यप्रभृति इतआरभ्यरामः ममपुरोजन्मान अग्रजोमास्तु । तदनुजत्वेहितदनुसरणेन वक्ष्यमाणप्रतिज्ञायास्त्याज्यत्वं स्यात् । गुरुनिराकरणेनापिदुष्टनिग्रहेधर्मएवेतिभावः । ननुभ्रात्रननुसरणस्य यथाकथंचित्समाधेयत्वेऽपिकुलधर्मानुवर्त्तनस्यावश्यकत्वात्कथंप्रतिज्ञासिद्धिरित्याशंक्याह अहं रघुकुलभुवां क्षितिभुजां राज्ञां स्वयं पुत्रःपौत्रोवान इतऊर्ध्वं तादृशसंबन्धोमास्तु । येनव्रतभंगःस्यात् । कुलधर्मत्यागेनापि प्रतिज्ञापरिपालने प्रायश्चित्तीयता न स्यादितिभावः । ननु तथापि "लोकापवादाद्भयं" इतिन्यायेन लोकस्यानुसर्त्तव्यतया प्रतिज्ञाहानिःस्यादित्यत आह अयमयंजनः सर्वोऽपिलोकः वीप्सायां द्विरुक्तिः । मामधीरं ब्राह्मणे शस्त्रग्रहणात् । धीरंवा दुष्टनिग्रहात् । कलयतु स्वैरंव्यवहरतु "नलोकःपारमार्थिकः" इति न्यायेन तस्यानभिज्ञत्वात्तत्कृतमानावमानाभ्यामकिंचित्करत्वादितिभावः । अधीरं धीरंकेत्यस्य अविवेकिनं विवेकिनंवेत्यर्थान्तरं । सर्वापेक्षयापित्वयाकिं प्रतिज्ञातं तत्राह मया दुष्टस्य त्यक्तशान्त्यादिस्वधर्मस्य द्विजस्य जामदग्न्यस्य यद्वा सामान्यनिर्देशोऽयं यो यो द्विजोदुष्टः तस्य सर्वस्य मथनदीक्षायाः वधकर्मारंभनियमस्य परिकरोबद्धः कंकणधारणंकृतम् ॥ ४६ ॥

नापदिशति त्वां ज्येष्ठत्वेन व्यवहृत्य तदप्याक्षिपति । यौवमादवीचीने बाल्ये । यानिकानिचिदक्षराणि प्रलपति असंबद्धमनर्थकं च वदति । अस्तमयमानं

**रामः**—(सवैलक्ष्यस्मितम्) प्रसीद भगवन्, । सएवायं यौवनादर्वाचीने निरपराधमधुरे वयसि वर्त्तमानो यानिकानिचिदक्षराणि प्रलपति ।

**जामदग्न्यः**—(सस्मितम्) कथमेतावत्यपि मामप्रमृष्यमाणं शंकसे । त्वदनुवर्त्ती खल्वयं त्वामेवास्तमयमानमन्वस्तमयिष्यते । निर्वान्तं हि सवितारंतराणिमणिरप्यनुनिर्वाति । (नेपथ्यं पाति) साधुरेलक्ष्मणसाधुकानिष्ठतरोऽपि वरं भवान् । नपुनरयं वृथाज्येष्ठस्ते ।

**प्रागुच्चैःशिरसं क्षुरप्रनखरैः क्रौञ्चाद्रिदन्तावलं**
**भित्वा हंसमयानि मौक्तिकफलान्याकीर्य पर्यापिताम् ।**
**सैंह्रीं वृत्तिमधिष्ठितेऽपि हि मयि क्षात्रेण कल्पेन ते**
**दिष्ट्या कौतुकमाभिगामिकमासि त्वं कोऽपिवीरांकुरः ॥४७॥**

(नेपथ्ये) भार्गव भार्गव दुर्विज्ञानमिदमवार्क्फलानिष्पत्तेराभिगामिकं सांप्रामिकंवेति ।

**रामः**—(सरोषं नेपथ्याभिमुखं।) आः कोऽयं वत्स, अद्यतनस्तेदुर्विनयप्ररोहः यद्गुरूनपिक्षेत्रीकरोति । (नेपथ्ये) आर्य, तूष्णीमस्मि । क्षमस्व जामदग्न्य, नियन्त्रितोऽहमार्येण ।

---

नश्यन्तं । वरं ईषत्प्रियः । वृथा वीरोचितौद्धत्याभावान्निरर्थकः प्रागिति । प्राक् उच्चैःशिरसं उत्तुंगशृङ्गं पक्षे उदग्रमस्तकं क्रौञ्चाद्रिदन्तावलं क्रौञ्चगिरिरूपं गजं "दन्तशिखात्संज्ञायां" इति वलच् "वलेच" इति दीर्घश्च । क्षुरप्राणि आयुधान्येव नखराणि नखाः तैः भित्वा छिद्रमुत्पाद्य विपाट्य च हंसमयानि मौक्तिकफलानि मुक्ताः आकीर्य बहिर्गमयित्वा । पुराकिल जामदग्न्येन क्रौञ्चगिरिं भित्वा मानससरोवास्तव्याहंसाः सर्वत्र चराः कृता इति पुराणप्रसिद्धिः । तत एव पर्यापितां प्रतिष्ठापितां सैंह्रींवृत्तिं सिंहसंबंधिव्यापारं क्रौञ्चस्य गजत्वेन रूपणात् । अधिष्ठितेऽपि प्राप्तेऽपि मयि विषये दिष्ट्या इतः पूर्वमीदृशस्य मदभियोक्तुरभावात् आभिगामिकं अभिगमनप्रयोजनं । "प्रयोजनं" इति ठक् । अनुशतिकादित्वादुभयपदवृद्धिः । तव कौतुकं अस्तीति शेषः । तत् त्वं कोऽपि वीरांकुरः वीरपरिगणनार्ह इत्यर्थः ॥ ४७ ॥

अर्वाक्फलनिष्पत्तेः जयात्प्राक् संग्रामाय (युद्धाय) प्रभवतीति सांग्रामिकं "तस्मै प्रभवति संतापादिभ्यः" इति ठञ् । दुर्विज्ञानं निश्चेतुमशक्यं । अद्यतनः अपूर्व इति यावत् । क्षेत्रीकरोति अधिक्षेपभाजनं करोति । नियन्त्रितः निरुद्धः । सूनृतां सत्यप्रियां "सत्यं प्रियं च वचनं सूनृतं समुदाहृतं" इत्युक्तत्वात् ।

**जामदग्न्यः**—(विहस्य) अरे राम, कथं वाचमेव सूनृतामस्मदभियोगप्रशमनीं समर्थयसे। कवचहरःखल्वसि। शस्त्रैरेव प्रतिक्रियन्तां शस्त्राणि किंच रे,

**राजन्येभ्यो जन्म वैवस्वतेभ्यश्चक्रे चापाचार्यकं कौशिकश्च।**
**क्षात्रींचर्यामेवमुन्मुञ्चतस्ते गोत्राक्षेपी वज्रलेपःकलंकः॥ ४८॥**

**रामः**—(सगर्वस्मितम्।) भगवन्, सत्यमेतत्।

**जातःसोऽहंदिनकरकुले क्षत्रियश्रोत्रियेभ्यो**
**विश्वामित्रादपि भगवतो दृष्टदिव्यास्त्रपारः।**
**अस्मिन्वंशे कथयतुजनो दुर्यशो वा यशोवा**
**विप्रे शस्त्रग्रहणगुरुणः साहसिक्याद्बिभेमि॥ ४९॥**

---

कवचहरोऽसि युवासीति भावः "वयसि च" इति हृञोऽच्। शस्त्रैरित्यादि युद्धेनैव मम प्रियं कार्यमिति भावः **राजन्येभ्य इति**। हे राम, विवस्वतः सूर्यस्य गोत्रापत्यानि वैवस्वताः तेभ्यो राजन्येभ्यः ते जन्म एतेन पूर्वेषामयशोमाभूदिति योद्धव्यं कौशिकस्ते चापाचार्यकं धनुर्विद्याभ्यासस्याचार्यकर्म "योपधात्" इत्यादिना वुञ्। चक्रेकृतवान्। एतेन गुरोरयशोमाभूदिति योद्धव्यं। एवं स्थितेऽपि क्षात्रीं चर्यां क्षत्रधर्मं एवमुन्मुञ्चतः त्यजतः ते कलंकः अपवादः "कलंकोऽङ्कापवादयोः" इत्यमरः। गोत्राक्षेपी कुलस्य निन्दाकरःसन् अत एव वज्रस्य हीरस्येव लेपः कथमपि परिहर्त्तुमशक्यत्वात् स्यादिति शेषः तस्माद्युद्धाय शस्त्रं गृहाणेति भावः (वृ) **शालिनी**॥ ४८॥

**जात इति**। सोऽहं दिनकरकुले सूर्यवंशे क्षत्रियश्रोत्रियेभ्यः अधीतवेदेभ्यः बहुवचनं पारंपर्येण श्रोत्रियत्वज्ञापनाय जातः सत्यमेतत् अत एव हि "ब्राह्मणो न हन्तव्यः" इति श्रुत्यात्वयि प्रहरणाद्बिभेमीत्यर्थः। (व्याघातालंकारः) महाकुलीनत्वादेः शस्त्रग्रहणसाधनतया जामदग्न्योपात्तस्य दाशरथिना तद्विरुद्धतया ग्रहणात्। "स्याद्व्याघातोऽन्यथाकारितथाकारि क्रियेत चेत्।" इत्युक्तेः एवमुत्तरत्रापि। भगवतो विश्वामित्रादपि दृष्टः साक्षात्कृतः दिव्यास्त्राणां जृंभकाद्यमानुषास्त्राणां पारः सामस्त्यं येन तथाभूतोऽस्मि तच्चसत्यं अत एव मद्गुरोर्भगिन्याः सत्यवत्याः पौत्रत्वाच्च तव त्वयि प्रहरणं नेष्टमिति भावः। "ब्राह्मणोऽसीति पूज्योमे विश्वामित्रकृतेन च। तस्माच्छक्तो न ते राम मोक्तुं प्राणहरं शरम्।" इति रामायणे तर्हिलोकस्य निरंकुशत्वाद्वाच्यतास्यात्तत्राह जनः प्राकृतोलोकः अस्मिन्वंशे अयं रामो भीतः शस्त्रं नाग्रहीदिति दुर्यशोवा।

**जामदग्न्यः**— आः पाप दुर्मुख, वसिष्ठइवविश्वामित्रइव स्वस्तिवाचनिको ब्राह्मणस्ते परशुरामः । धिक्कष्टं । एवमुच्चावचा वाचः क्षत्रियाच्छ्रूयन्ते (क्रोधातिशयं नाटयन्) अयमहं भोः ।

सह दशरथमधोकृत्य पुत्रैश्चतुर्भि-
र्जनककुलकबंधस्कंधनिर्गत्वरीभिः ।
नवरुधिरसटाभिःक्लृप्तलीलापताकां
रणभुवमतिरौद्रीं रुद्रशिष्यःकरोमि ॥ ५० ॥

**रामः** — आः जामदग्न्य, केयं वाग्विभीषिका । दूरमतिक्रामतिप्रसंगे कदाचिदिक्ष्वाकवोऽपि दुर्मनायन्ते ।

**जामदग्न्यः** — (सभ्रुकुटिभंगम्) ततःकिम् ।

---

आहोस्वित् शास्त्रवित्त्वाद्ब्राह्मणं नावधीदिति यशोवा कथयतुभूतां एवं लोकापवादसहनेनापि कुतः शस्त्रग्रहणं न क्रियते तत्राह विप्र इति एतेन "क्षमाशक्तौ" इति न्यायोऽपि दर्शितः । उक्तं च पूर्वं जात्यैव पूज्योऽसिनः इति विप्रे ब्राह्मणे शस्त्रग्रहणेन गुरुणः दुर्भरात् साहसिक्यात् साहसिककर्मणः "ओजः सहोऽभसा वर्त्तते" इति ठक् । ततः ष्यञ् । विभेमि तस्मात्क्षमस्वेति भावः ४९

दुर्मुख, मुखर, यत्किंचित्प्रलपनस्वभावेतियावत् । "दुर्मुखौ मुखराबद्धमुखौ" इत्यमरः । स्वस्तिवाचनं प्रयोजनं अस्य (कर्मणः) इति अनुप्रवचनादित्वाच्छः तस्य "पुण्याहवाचनादिभ्यः" इति लुक् । तदस्यास्तीति स्वस्तिवाचनिकः "अत इनिठनौ" उदक् च अवाक् च उच्चावचं "मयूरव्यंसकादित्वात्समासः "उच्चावचं नैकभेदं" इत्यमरः । सहेति । रुद्रशिष्यः अयमहं दशरथं चतुर्भिः पुत्रैः सह उत्कृत्य निहत्य जनककुलस्य कबंधानां कृत्तमूर्ध्ना विचेष्टमानानां कलेबराणां "कबंधोऽस्त्री क्रियायुक्तमपमूर्धकलेबरं" इत्यमरः स्कंधेभ्यः अंसेभ्यः निर्गत्वरीभिः निर्गच्छन्तीभिः "गत्वरश्च" इति गमेः क्वरबन्तनिपातनात् "टिड्ढाणञ्" इत्यादिना ङीप् । नवरुधिरसटाभिः नूतनरक्तप्रवाहैः रणभुवं युद्धभूमिं क्लृप्ता रचिता लीलापताका क्रीडार्थं वैजयन्ती यस्यां तथाभूतां अतएव अतिरौद्रीं अतीवभीषणां करोमि ॥ ५० ॥

वाग्विभीषिका वागाडंबरेण विशेषेण भयोत्पादनं । "पर्यायार्ह" इत्यादिना ण्वुच् "भियोहेतुभयेषुक्" प्रसंगेदूरमतिक्रामति मर्यादोल्लंघने सति । दुर्मनायन्ते मनोविक्रियां प्रपद्यन्ते । दुर्मनःशब्दस्य भृशादित्वात्क्यङ् सलोपश्च ।

**रामः**— (सावष्टंभम्) ततश्च ।

तैस्त्रिःसप्तभिरेवराजविजयैर्यत्ते भुजस्तंभयोः
कृत्वा तोरणमालिकां पुनरमुंद्वाविंशमारिप्सते
द्रक्ष्यामि त्वयि वर्त्तमानमधुनातच्चापविद्याद्भुतं
शंभोस्तस्य हि केवलेनधनुषाकृष्टेन तुष्टि र्न मे ॥ ५१ ॥

**जामदग्न्यः**— (ससंरंभं) किमात्थरे "द्रक्ष्यामि त्वयि वर्त्तमानं" इति (त्रिःपठित्वा) (सव्यथं) अहोसर्वतः समिध्यमानदारुणरोषजातवेदसो विदेहादिलीपयोः कुलं नाम कति भविष्यन्त्याहुतयः। भो भोः सप्तद्वीपकुलपर्वतवर्त्तिनो राजानश्चेतयध्वम् ।

येन स्वां विनिहत्य मातरमपि क्षत्रास्रमध्वासव-
स्वादाभिज्ञपरश्वथेन विदधे निःक्षत्रिया मेदिनी ।
यद्बाहुव्रणवर्त्मना शिखरिणः क्रौञ्चस्य हंसच्छला-
दद्याप्यस्थिकणाः पतन्ति स पुनः क्रुद्धो मुनिर्भार्गवः ॥ ५२ ॥

---

सावष्टंभं समर्वं । तैरिति । यत् । तैः अतिप्रसिद्धैः त्रिःसप्तभिः त्रिरावृत्तसप्तवारैः एकविंशतिकृत्व इति यावत् । राजविजयैरेव तोरणमालिकां विजयमंगललक्षणां मालां ते तव भुजस्तंभयोः (अत्ररूपकं) कृत्वा । पुनः अमुंद्वाविंशं मद्विजयेन द्वाविंशतेः पूरणं विजयमिति शेषः । "तस्य पूरणे डट्" इति डटि "तिविंशतेर्डिति" इतितिलोपः । आरिप्सते आरब्धुमिच्छति । "सनिमीमा" इत्यादिना आङुपसृष्टस्य रभेः अच इस् अभ्यासलोपश्च । त्वयि वर्त्तमानं तत् चापविद्याद्भुतं धनुर्विद्याश्चर्यं अन्यादृशं युद्धकौशलमिति यावत् । अधुना द्रक्ष्यामि । कृष्टेन आकर्षितेन तस्य तव गुरोः शंभोः केवलेन धनुषा प्रयोजकरहितचापेन मे तुष्टिर्न मम प्रीतिर्न भवति ॥ ५१ ॥

चेतयध्वं निबोधत । येनेति । क्षत्रास्रस्य क्षत्रियरक्तस्यैव मध्वासवस्य मद्यविशेषस्य "मध्वासवो माधविकः" इत्यमरः स्वादाभिज्ञः रसज्ञः परश्वथः। परशुः यस्य तथाभूतेन येन मया स्वां मातरमपि विनिहत्य एतेन स्वस्य निर्घृणत्वं दर्शितं । मेदिनीनिःक्षत्रिया क्षत्रजातिशून्या विदधे कृता कर्मणि लिट् । यस्य मम बाणव्रणवर्त्मना बाणकृतक्षतद्वारा हंसच्छलात् हंसव्याजेन क्रौञ्चस्य शिखरिणः क्रौञ्चगिरेः अस्थ्नां कणाः शकलानि अद्यापि पतन्ति निःसरन्ति सभार्गवोमुनिः पुनः क्रुद्धः ॥ ५२ ॥

**रामः**— (सहासम्।)

नृपानप्रत्यक्षान् किमपवदसे नन्वयमहं
शिशुक्रीडाभग्नत्रिपुरहरधन्वा तव पुरः।
अहंकारक्रूरार्जुनभुजवनीव्रश्चनकला-
निसृष्टार्थोबाहुःकथय कतरस्ते प्रहरतु ॥ ५३ ॥

**जामदग्न्यः**— आः पाप विकर्त्तनकुलकलंक, पुनस्तरां तदेव पार्वतीदयितकोदण्डदलनमुद्भावयसि। अहह। क्षत्रियोऽपि भार्गवस्य कार्तवीर्यविजयिनं भुजदण्डमन्विष्यति। अहो गरीयान् कालः यदश्रुतचरमपि श्रावयति यददृष्टचरमपि दर्शयति। अपि च। रे रे राजन्यकीट,

जानास्येव यथा पितुःपरिभवन्होमार्जुनीमर्जुनो-
मत्कोदण्डमनेकराजकवधस्वाध्यायमध्यापिपत्।
तेनैवास्ति भवत्सु यद्यपि मम क्रोधोऽयमौत्सर्गिक-
स्तत्संप्रत्युपसर्जनं गुरुधनुर्भङ्गादयं हेतुमान् ॥ ५४ ॥

---

नृपानिति। अप्रत्यक्षान्नृपान् अतीतक्षत्रियान् किमपवदसे निन्दसि "अपाद्वदः" इति तङ्। शिशुक्रीडया (नतु प्रयत्नेन) भग्नं त्रिपुरहरधनुः पिनाकं येन तथाभूतः "धनुषश्च" इति समासान्तोऽनङ् अयमहं तवपुरो ननु तवाग्रतएव वर्त्ते इति शेषः एतेन निःक्षत्रियामेदिनीकृतेत्युक्तिरनर्थिकैवेति भावः। ते कतरो बाहुः दक्षिणः सव्यो वाकोवा भुजः अहंकारेण दर्पेण क्रूरस्य तीक्ष्णस्वभावस्य अर्जुनस्य कार्त्तवीर्यस्य भुजवन्याः बाहुसमूहस्य व्रश्चनकलया छेदनपाण्डित्येन निसृष्टार्थः ज्ञातार्थः प्रसिद्ध इति यावत्। तं कथय प्रहरतु तंभुजंव्यथयतु अयं राम इति शेषः ॥ ५३ ॥

क्षत्रियोऽपीति निःसारत्वेन गर्हणार्थोऽपिः। पूर्वमश्रुतं अश्रुतचरं "भूतपूर्वे चरट्" एवमदृष्टचरं। जानासीति। हे राजन्यकीट क्षत्रियाधम राम, अर्जुनः कार्त्तवीर्यः पितुः जमदग्नेः होमार्जुनीं होमधेनुं "माहेयी सौरभेयी गौरुस्रा माता च शृंगिणी। अर्जुन्यघ्न्यारोहिणीस्यात्" इत्यमरः परिभवन् कर्षन् सन्। मत्कोदण्डं "गतिबुद्धि" इत्यादिना कर्मत्वं अनेकराजकस्य बहुराजसमूहस्य वधस्वाध्यायं संहाररूपवेदाभ्यासंयथा अध्यापिपत् अध्यापयामास। ण्यन्तादिङो लुङ् तथा जानास्येव तेनैव कार्तवीर्यापराधेनैव भवत्सु विषये ममायं क्रोधः यद्यप्यौत्सर्गिकोऽस्ति क्षत्रियत्वजातिनिमित्तको वर्त्ततएव। तथापीतिशेषः तत्

**रामः**— जामदग्न्य, पटच्चरीभूता खल्वियं पुरातनी कीर्तिपताका । नन्वि-दानीमेव द्रष्टव्यम् । (नेपथ्याभिमुखं) वत्स लक्ष्मण, धनुर्धनुः ।

**जामदग्न्यः**— अरे अनात्मज्ञ क्षत्रियवटो,

तच्चापमीशकरपीडनवीतसारं
प्रागप्यभज्यत भवांस्तु निमित्तमात्रम् ।
राजन्यकप्रधनसाधनमस्मदीय-
माकर्ष कार्मुकमिदं गरुडध्वजस्य ॥ ५५ ॥

आकृष्टेन पुनरमुनैव धनुषाकिलास्मानाभियोक्ष्यसे । क्षत्रवधसत्रेदीक्षितानां चिरस्य होतापरशुरस्माकमस्त्येव । (इति रामस्य हस्ते धनुरर्पयति)

**रामः**—(गृहीत्वा) भार्गव, समन्तादुत्खातिनी भूमिरियं । तदेहि विमर्द-क्षमंप्रदेशमवतरावः

**जामदग्न्यः**—(सरोषंपरिक्रामन्) भो भोः क्षात्रेण ब्राह्मणेच तेजसा विकत्थमानाः ।

भवतुशरणदोवा शस्त्रसर्वाभिसारः
प्रतिविदधतु वास्मिन्नाशिषो वैजयिक्यः

---

सक्रोधः विधेयप्राधान्यात्क्लीबत्वं संप्रति उपसर्जनं अप्रधानं गुरुधनुर्भंगाद्धेतोः अयं क्रोधः हेतुमान् प्रयोज्यः अपवादशास्त्रवदवश्यमेव प्रवर्त्ततइति भावः ॥ ५४ ॥

पटच्चरीभूता जीर्णतां गता । "पटच्चरं जीर्णवस्त्रं" इत्यमरः तदिति । हे क्षत्रियवटो, तच्चापं पिनाकं ईशकरपीडनेन शिवकृतमुष्टिबंधायमनाकर्षणपीडया वीतसारं दुर्बलंसत् प्रागप्यभज्यत भग्नमासीत् (कर्मकर्तरिप्रयोगः) भवांस्तुनिमि-त्तमात्रं यशोहेतुरेवकेवलं । राजन्यकस्य क्षत्रियसमूहस्य सामूहिको वुञ् प्रधनसा-धनं युद्धसहायभूतं अस्मदीयं अस्मद्वशवर्त्ति इदं गरुडध्वजस्य कार्मुकं वैष्णवं धनुः आकर्ष आरोपय ॥ ५५ ॥

अभियोक्ष्यसे योद्धुं शक्ष्यसि । "अभियोगस्त्वभिग्रहः" इत्यमरः । म य्यर्पितधन्वात्वं केनयोत्स्यसीत्यत आहक्षत्रवधेत्यादि । होतेति यथा यजमानस्य होत्रा यागनिष्पत्तिरेवंवधस्य निष्पादकत्वात्तथारूपणं । उत्खातिनी निम्नोन्नता विमर्दक्षमं युद्धयोग्यं सममितियावत् । भो इत्यादि जनकविश्वामित्रादिसंबोधनं विकत्थमानाः श्लाघमानाः शृणुतेतिशेषः भवत्विति । शस्त्राणां सर्वाभिसारः स

अदशरथमरामं निर्विदेहेन्द्रमूर्वी-
वलयमिह विधत्ते रोषणो रैणुकेयः ॥ ५६ ॥

( इति निष्क्रान्तौ )

(नेपथ्ये) भोभोः पौरजानपदाः, प्रवर्त्यतां मांगलिकमातोद्यं । प्रसज्यतामयं वैदेहीविवाहोत्सवो जामदग्न्यविजयोत्सवेन ।

कन्या काचिदिहापि कर्मणि पणः स्यादित्यसूयावल-
त्सीताऽपांगमयूखमांसलमुखज्योत्स्नावलिप्तां दिवम् ।
कुर्वाणेन रघूद्वहेन चकृषेनारायणीयं धनुः
संधायाथ शरश्च भार्गवगतिच्छेदादमोघीकृतः ॥ ५७ ॥

( ततः प्रविशतो रामजामदग्न्यौ )

**रामः**— भगवन् भार्गव भार्गव,

परैराहूतानां विहितमपि शस्त्रं भवतु नः
प्रकृत्या विप्रेभ्यः पुनरकृतशिल्पा रघुभुवः ।

---

वैसन्नाहः "सर्वाभिसारःसर्वौघः सर्वसन्नहनार्थकः" इत्यमरः । शरणदोवा शरण्यो वा भवतु । एतेन क्षात्रतेजसाऽकिंचित्करत्वं सूचितं । वैजयिक्यः विजयप्रयोजनाः आशिषोवा ब्राह्मणानुग्रहा वा अस्मिन्कर्मणि प्रतिविदधतु प्रतिक्रियां कुर्वन्तु । एतेन ब्राह्मतेजसादुष्प्रातिरोपत्वं सूचितं । रेणुकाया अपत्यं रैणुकेयः "स्त्रीभ्योढक्" इति ढक् रोषणः क्रुद्धःसन् "क्रुधमण्डार्थेभ्यश्च" इति युच् । उर्वीवलयं भूमण्डलं न विद्यतेदशरथो यस्मिन् तं अदशरथं तथा अरामं निर्विदेहेन्द्रं च इह मिथिलायां विधत्ते कुरुते ॥ ५६ ॥

मांगलिकं मंगलप्रयोजनं आतोद्यं वाद्यं प्रवर्त्यतां उद्घुष्यतां । **कन्येति ।** इहापि कर्मणि अस्य धनुष आरोपणेऽपि काचित्कन्या पणःस्यात् अहमिव शुल्कभूताभवेत्किं काक्का किमर्थोलभ्यते इत्यसूयया सापत्न्यशंकया वलता संचरता अनुदात्तेत्वानिमित्तात्मनेपदत्वस्यानित्यत्वज्ञापनाच्छानच् । सीताया अपांगमयूखेन-कटाक्षकान्त्या मांसला व्याप्ता या मुखज्योत्स्ना मुखचन्द्रिका तया अवलिप्तां ईषद्दिग्धां "क्तादल्पाख्यायां" इति ङीष् । दिवं आकाशं कुर्वाणेन रघूद्वहेन नारायणीयं वैष्णवं "वा नामधेयस्य" इति छः धनुः चकृषे आरोपितं कर्मणि लिट् । अथ आरोपणानन्तरं शरश्च संधाय मौर्व्यांसंयोज्य भार्गवस्य गतिच्छेदात् पुण्यलोकनिरोधेन अमोघीकृतः अनवद्यतां नीतः ॥ ५७ ॥

**परैरिति ।** हे भार्गव, परैःशत्रुभिः आहूतानां युद्धार्थमाकारितानां नः

चिरादण्डीरेणत्वयि तदपि रामेण गुणितं
तपोविद्यावीरव्रतमय मयि क्षाम्यतु भवान् ॥ ५८ ॥

**जामदग्न्यः**— कथमपराद्धमस्मासु वत्सेन ।

यदर्थमस्माभिरसि प्रकोपितस्तदद्य दृष्टं तव धाम वैष्णवम् ।
विशीर्णसर्वामयमस्मदन्तरं चिरस्य किंचिल्लघिमानमश्नुते ॥ ५९ ॥

**रामः**— इत इतो भवान्.

**जामदग्न्यः**— (चुबुकमुन्नमय्य) अप्रशस्तःखल्वारण्यकानां जनपदेषु चिरप्रचारः तत् क्व पुनरस्मान्नेष्यसि ।

**रामः**— भगवन्, याज्ञवल्क्यमुपेत्यावलोकयितुम् । तस्यावसथे कृतातिथेयसंविधानौ तातजनकौ भवन्तमनुपालयतः ।

एहि विष्टरपाद्यार्घ्यमधुपर्कैरुपस्थितान् ।
इक्ष्वाकूंश्च विदेहांश्च पुनीहि भगवन्नमून् ॥ ६० ॥

---

राज्ञां शस्त्रं विहितमपि भवतु । तथापि रघुभुवः पुनः प्रकृत्यास्वभावेन विप्रेभ्यः अकृताशिल्पाः अनभ्यस्तविद्याहि ब्राह्मणेषु नप्रहरन्तीति यावत् । अतएव अण्डीरेण अशक्तेन "अण्डीरः पुरुषेऽशक्ते" इतिमेदिनी । "काण्डाण्डादीरन्नीरचौ" इत्यण्डशब्दान्मत्वर्थीयईरच् । रामेण मया । निन्द्याचरणद्योतनार्थं रामेणेति स्वस्य पारोक्ष्यवचनं । तदपि विप्रेष्वप्रहरणमपि चिरात् चिरकालं गुणितं आहतंपुनः पुनः कथितमित्यर्थः । "गुणिताहते" इत्यमरः । प्रचुराणि तपश्च विद्याच वीरव्रतंच तानि यस्य तथाभूत, भवान् मयिविषये क्षाम्यतु क्षमेःशमादित्वाद्दीर्घः ॥५८ ॥

कथमपराद्धं अपराधो न कृतः । यदर्थमिति । यदर्थं यस्मै प्रयोजनाय अस्माभिः त्वं प्रकोपितोऽसि तत् तव वैष्णवं धाम तेजः अद्य अस्माभिर्दृष्टं अत एव अस्माकं अन्तरं अन्तरात्मा विशीर्णोनष्टः सर्वामयः यस्मात्तथाभूतं सत् चिरस्य चिरप्रार्थितं लघिमानं लाघवं भारनिवृत्तिसुखं किंचिदश्नुते अनुभवति दुष्टनिग्रहकर्मणो रामे न्यस्तत्वाल्लघिमा । रावणादिवधस्यासाधितत्वात्तस्य किंचित्त्वं । तस्मादत्रतवापराधोऽस्तीति भावः ॥ ५९ ॥

चिबुकं अधरादधोभागं । अरण्ये भवाः आरण्यकाः तेषां । "अरण्यान्मनुष्ये" इति वुञ् । अतिथिषु साधु आतिथेयं " पथ्यतिथिवसतिस्वपतेर्ढञ् एहीति । हे भगवन् एहि विष्टरेण आसनेन "वृक्षासनयोर्विष्टरः" इ

**जामदग्न्यः**—वत्स, अपरिहार्यमातिथ्यं राजन्यश्रोत्रियाणाम् । किंतु पुनरेवंविधवैखानसोचिताचारस्खलितविलक्षो न शक्नोमिधर्माचार्यं याज्ञवल्क्यमुपेत्यावलोकयितुं । आचारस्तुदूरादेवकृतोऽपिकृतःस्यात् । (किंचिदुच्चैःनेपथ्याभिमुखम्)

**यस्य स्मृतीःप्रतीक्षन्ते चतुर्वर्गे मनीषिणः ।**
**नमो भगवते तस्मै याज्ञवल्क्याय योगिने ॥ ६१ ॥**

(नेपथ्ये)

**गायत्री त्रिपदा देवी पाप्मानमपहन्तु ते ।**
**पुनन्तु पावमान्यस्त्वामृध्नोतु ब्रह्म ते परम् ॥ ६२ ॥**

**जामदग्न्यः**—अपत्रपमाणो न भगवन्तं द्रष्टुमुत्सहे तदनुमन्यस्वमामरण्यगमनाय.

(नेपथ्ये)

**शिवास्ते पन्थानो व्रज निजगृहेभ्यो निजगृहान्**
**किमन्यत्सर्वेषां गुणमय शिरोमाल्यमसि नः ।**

---

निपातनात्साधुः पाद्येन पादार्थजलेन अर्घ्येण पुष्पाक्षतादिपूजाद्रव्येण मधुपर्केण च तैः । उपस्थितान् प्रत्युद्गतान् अमूनिक्ष्वाकूंश्च विदेहांश्च पुनीहि पावय ॥ ६०

अतिथये इदं आतिथ्यं "अतिथेर्ञ्यः" इति तादर्थ्येञ्यः । वैखानसानां वनस्थानां उचिताचारात् स्खलितः चलितः कर्तरिनिष्ठा अतएव विलक्षः लज्जितः । यद्वा आचारस्य स्खलितेन भ्रंशेन विलक्षः भावेनिष्ठा । धर्माचार्यंधर्मप्रवर्त्तकं गुरुं । **यस्येति** । मनीषिणः विवेकिनः यस्यस्मृतीः यत्कर्तृकस्मरणानि चतुर्वर्गे धर्मार्थकाममोक्षेषु विषये । प्रतीक्षन्ते प्रमाणीकुर्वन्ति । तस्मै भगवते सर्वज्ञाय । यद्वा । भगः सूर्यः तद्वते सूर्यशिष्यायेतियावत् । योगिने कर्मज्ञानयोगयोर्निष्णाताय याज्ञवल्क्याय नमः ॥ ६१ ॥

**गायत्रीति** । याज्ञवल्क्यवचनमिदम् । त्रिपदा प्रत्येकमष्टाक्षरविशिष्टपादत्रयवती "त्रिपदा गायत्री" इति श्रुतेः । "टाबृचि" इति टाप्, गायत्रीदेवी तन्मन्त्राधिदेवता । ते पाप्मानं मातृहत्यादिजनितपातकं अपहन्तु नाशयतु उक्तंच मानवे "सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः । महतोऽप्येनसोमासात्त्वचेवाहिर्विमुच्यते" इति । एवं महापातकनिवृत्तिमाशास्य चित्तशुद्ध्यर्थं सामान्यदुरितक्षयमाशास्ते । पावमान्यः मन्त्रविशेषाः त्वां पुनन्तु पावयन्तु चित्तशुद्धिमापादयन्त्वितिभावः । ततश्चाधिकृतस्यास्याप्रतिबन्धेन विद्याफलमाशास्ते । परं निरतिशयं ब्रह्म सर्वज्ञत्वादिधर्मविशिष्टं वस्तु । ऋध्नोतु वर्धतां स्फुरत्विति भावः ॥६२॥

अपत्रपमाणः लज्जमानः **शिवा इति** । पुनर्याज्ञवल्क्यवचनमिदं । हे

त्रिलोकीनिर्माणस्थितिनिधनबंधोर्मधुभिदो-
भवान् षष्ठी मूर्त्तिर्भृगुकुलमधिष्ठाय रमते ॥ ६३ ॥

**जामदग्न्यः**—वत्स रामभद्र,

**रामः**—आज्ञापय भगवन्,

**जामदग्न्यः**—निवर्तस्व, नूनमिदानीं कृतकौतुकमंगलोपचारः श्वशुरलोकस्त्वां प्रतीक्षते । (इति परिक्रम्य निष्क्रान्तः)

**रामः**—(सोद्वेगं) कथंगतो भगवान् । तदहमपि तातसमीपमेव गच्छामि (इति परिक्रामन् पुरोऽवलोक्य) कथंतातश्च जनकश्च इत एवाभिवर्तेते । (इत्युपसर्पति)

(ततः प्रविशतो जनकदशरथौ । राजानावन्योन्यंपरिष्वज्य ।)

**जनकः**—

सुचरितमिदमैतिहासिकानां न हृदि विरंस्यति यत्तवैष वत्सः ।
भृगुसुतपरशूदराद्विराजत्सहजविजित्वरमाचकर्षतेजः ॥ ६४ ॥

**दशरथः**— (पुरोऽवलोक्य) कथमागत एव वत्सोरामभद्रः ।

---

गुणमय प्रचुरगुण, ते पन्थानः मार्गाः आचारा वा शिवाः सन्त्विति शेषः । निजगृहेभ्यः अस्मदाश्रमात निजगृहं स्वाश्रमं व्रज याहि । किमन्यत् वक्तव्यमिति शेषः । सर्वेषां नः शिरोमाल्यमसि श्लाघ्योऽसीत्यर्थः "प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरं ।" इति न्यायेन संन्यस्तैषणतोऽप्यपरिगृहीतैषणस्य श्रैष्ठ्यादिति भावः । किं च । त्रिलोक्याः निर्माणस्थितिनिधनानां सृष्टिस्थितिसंहाराणां बंधुः स्थापकः हेतुरिति यावत् "समुद्र एवास्य बंधुः" इति श्रुतौ बंधुशब्दस्य तथा व्याख्यातत्वात् । मधुभिदः विष्णोः षष्ठी षण्णां पूरणी मूर्तिः अवतारभूतो भवान् । उक्तं च "मत्स्यः कूर्मो वराहश्च नरसिंहश्च वामनः । रामोरामश्च रामश्च कृष्णः कल्किश्चते दश ।" इति भृगुकुलमधिष्ठाय भृगुवंशे आविर्भूय रमते क्रीडति ॥ ६३ ॥

कृतः सज्जितः कौतुकमंगलोपचारः विवाहांगभूताभ्युदयाचरणं येन तथाभूतः सन् । **सुचरितमिति** । तवैषवत्सः रामः विराजत् दीप्यमानं सहजविजित्वरं स्वभावत एव जयशीलं तेजः प्रतापं भृगुसुतस्य परशूदरात् कुठारमध्यात् आचकर्ष आकृष्टवान् इति यत् इदं सुचरितं जामदग्न्यभंगपुण्यकथा ऐतिहासिकानां इतिहासविदां तदध्येतॄणां च "आख्यानाख्यायिका" इत्यादिना ठक् हृदि न विरंस्यति विरामं न यास्यति अमितां तृप्तिं दास्यतीति भावः ॥ ६४ ॥

**जनकः**— सखे दशरथ, पश्य पश्य ।

चिरात्क्षात्रं तेजास्त्रिजगदुपजीव्यं जनयिता
विधाता सर्वेषामुपरि सवितारं कुलभृताम् ।
विनेता वर्णानां भृगुपतिभुजादर्पनिकषो-
महावीरः श्रीमानयममृतमक्ष्णोर्विकिरति ॥ ६५ ॥

**दशरथः**— (निर्वर्ण्य । सस्नेहम्) सखे सीरध्वज, रघुराजधर्माधिकारसर्वधुरीणः शिरसि सर्वेषां वत्सोऽयं । तदस्मिन् जरसा दुर्वहं वर्णाश्रमभारमारोप्य क्वापितपोवनेदिलीपकुलोचितेन विधिना शेषमायुरुपबुभुक्षामहे ।

**जनकः**— सखे दशरथ, साधुतेहृदयं । क्रमादेवमनुष्ठातव्यम् । (रामउपसृत्याभिवादयते)

**जनकः**— एह्येहिवत्स । (इतिसहर्षमालिंगति)

**दशरथः**—(राममालिंग्य) सखेजनक, रामभद्रमभिषेक्तुंजामदग्न्यविजयप्रीतिरेव श्रेयानवसरः कालक्षेपे पुनः कोहेतुः । (प्रविश्य लक्ष्मणः) .

**लक्ष्मणः**— इयमार्यमन्थरोपनीता मध्यमांबायाः पत्रिका ।

(राजानावन्योन्यं सवितर्कंपश्यतः)

**रामः**— (सहर्षं) वत्सलक्ष्मण, अपिसपरिवारायाः कुशलमंबायाः कथयत्यार्यामन्थरा.

---

चिरादिति । भृगुपतेः भुजादर्पस्य बाहुमदस्य निकषः शाणः निर्धारकः दमन इति यावत् । "शाणस्तु निकषः कषः" इत्यमरः । अत एव महावीरः श्रीमांश्च अतश्च क्षात्रं तेजः त्रिजगतः उपजीव्यं आश्रयार्हं रक्षकमिति यावत् । जनयिता सम्यक्कर्त्ता साधुकारिण्यर्थेतृन् तेन "न लोक" इत्यादिना षष्ठी निषेधाद्द्वितीया । इतः पूर्वं जामदग्न्याक्रान्तत्वान्नसम्यग्बभूवेति भावः । सवितारं सूर्यं सर्वेषां कुलभृतां कुलकूटस्थानां उपरि श्रेष्ठं विधाता । वर्णानां ब्राह्मणादिजातीनां विनेता शासितुं शक्तः । "अर्हे कृत्यतृचश्च" इति तृच् । तेन षष्ठी । अयं रामः अक्ष्णोरमृतं विकिरति आसेचनकोभवतीति भावः ॥ ६५ ॥

सर्वधुरीणः सर्वामपिधुरं वोढुं शक्तः । "खः सर्वधुरात्" जरसाजरया "जराया जरसन्यतरस्यां" । वर्णानां ब्राह्मणादीनां आश्रमाणां ब्रह्मचर्यादीनां च भारं रक्षणधुरां । दिलीपकुलोचितेन विधिना मुनिवृत्त्या उक्तं च । "वार्धके मुनिवृत्तीनां" इति उपबुभुक्षामहे उपभोक्तुमिच्छामः । सवितर्कं आकस्मिकत्व-

**लक्ष्मणः**— अथकिम्

**रामः**— नूनमस्मत्प्रवासदौर्मनस्यमंबां पीडयिष्यति । (जनको लक्ष्मणहस्तात्पत्रिकां गृहीत्वावाचयति) "स्वस्ति, महाराज, दशरथं कैकेयी विज्ञापयति ।

**तन्मे वरद्वितयमाश्रुतपूर्वमेव**
**याचे बिभर्तु भरतस्तव राज्यलक्ष्मीम् ।**
**वर्षाणि तिष्ठतु चतुर्दश दण्डकायां**
**सौमित्रिमैथिलसुतासहितश्चरामः ॥ ६६ ॥**

इति । (राजानौमूर्च्छतः)

**रामः**— (पटान्तेन वीजयति । शिरसि पत्रिकांगृहीत्वा) वत्स लक्ष्मण, अयोनिजामस्मदाराधनसहाध्यायिनीं प्रजावतीमादायपुरस्ताद्गच्छ ।

(लक्ष्मणो निष्क्रान्तः)

**रामः**— तातौ, समाश्वसितं समाश्वसितम् ।

**जनकः**— (समाश्वस्य)

**पाणिर्गृहीतो रघुपुंगवेन देवःपुराणः श्वशुरो विवस्वान् ।**
**पिता स्वयं केकयचक्रवर्ती कर्मेदमेतादृशमाः किमेतत् ॥ ६७ ॥**

(इति मूर्च्छति । रामः पटान्तेन वीजयति ।)

**दशरथः**— (आश्वस्य)

---

जनितविविधोहेन सह । दौर्मनस्यं दुःखं । स्वस्तीत्यादि अनन्तरश्लोकान्तंपत्रिकास्थं कैकेयीवचनं । **तदिति** । मे मह्यं आश्रुतपूर्वमेव पूर्वप्रतिज्ञातमेव नत्वपूर्वमिति भावः । "आश्रुतं प्रतिज्ञातं" इत्यमरः । तत् आसुरयुद्धे दत्तं वरद्वितयं याचे । तत्राद्येनतु भरतः तवराज्यस्य राजकर्मणः "गुणवचन" इत्यादिना ष्यञ् "नस्तद्धिते" इति टिलोपश्च । लक्ष्मीं बिभर्तु, द्वितीयेनतुरामः सुमित्राया अपत्यं सौमित्रिः तेन । बाह्वादित्वादिञ् । मैथिलसुतयासीतया च सहितः सन् । दण्डकायां चतुर्दशवर्षाणि अत्यन्त संयोगे द्वितीया । तिष्ठतु वसतु ॥ ६६ ॥

आराधने शुश्रूषणे सहाध्यायिनीं तवसहायभूतां प्रजावतीं तव भ्रातृजायां सीतामिति यावत् "प्रजावती भ्रातृजाया" इत्यमरः । **पाणिरिति** । रघुपुंगवेन दशरथेन तवपाणिर्गृहीतः । पुराणः सनातनः देवो विवस्वान् सूर्यः श्वशुरः भर्तुः कुलकूटस्थः तव पिता स्वयंकेकयचक्रवर्ती तवेदं कर्म एतादृशं अतिक्रूरमिति भावः आः पीडायां । किमेतत् संवृत्तमिति शेषः ॥ ६७ ॥

कोप्येषवाङ्मनसयोरतिवृत्तवर्त्मा
भावोहुताशनमयश्च तमोमयश्च ।
भोक्तृत्वमात्रमिह मे पुनरीदृशं मां
हा वत्स राम, कथमुत्सहसे विहातुम् ॥ ६८ ॥

(विमृश्य) हा वत्से जानकि, निशाचराणामातिथेयीभवितुं दशरथगृहंप्रविष्टासि

(इति मूर्च्छति)

**रामः**—तातौ, समाश्वसितं समाश्वासितम् ।

**जनकः**—(आश्वस्य आकाशे लक्ष्यंबध्वा) साधु सखि कैकयि साधु । यदस्या विश्वंभरादुहितुर्मेवत्सायाः पत्यनुवृत्तिरेव प्रसादीकृता (विमृश्य । सव्यथम्)

धनुष्मन्तौ वत्सौ दशमुखभुजैरूष्मलतमाः
प्रदेशास्ते वत्सा शिशुरशिववृत्तावनभुवः ।
प्रियैराजामुक्तैरसुभिरपमार्ष्टि स्वमयश-
श्चरित्रव्यत्यासः सखि कथमयं केकयकुले ॥ ६९ ॥

---

कोपीति । एष भावः कैकेयीवरप्रार्थनारूपः पदार्थः हुताशनमयः अग्निप्रायः दाहकत्वात्, तमोमयश्च आवरणरूपत्वात् । अतएव वाङ्मनसयोः "अचतुर" इत्यादिना समासान्तनिपातनात्साधुः । अतिवृत्तवर्त्मा अविषयइत्यर्थः परस्परप्रतियोगिनोरग्नितमसोरैकात्म्यस्यादृष्टचरत्वादितिभावः अतएव कोपि अनिर्धार्यः संवृत्तइतिशेषः इहपुनःविषये मे भोक्तृत्वमात्रं दुःखानुभवएव नतुतत्प्रतीकारशक्तिः सत्यानियन्त्रितत्वात । वत्स हे राम, ईदृशं एवंदुःखिनं मां विहातुं त्यक्तुं कथमुत्सहसे उत्सुकोऽसि । हा कष्टं ॥ ६८ ॥

आतिथेयीभवितुमिति च्व्यन्तं समस्तं पदं । भक्ष्यतां गन्तुं । धनुष्मन्ताविति वत्सौ रामलक्ष्मणौ धनुष्मन्तौ चापमात्रसहायौ नतुसैन्यादिसंपन्नाविति भावः । ननुतपस्यतोः किमितरपरिग्रहेणेत्यत आह ते प्रदेशाः दण्डकारण्यभागाः दशमुखभुजैः ऊष्मलतमाः अत्यन्तं तेजस्विनः सोपद्रवा इति यावत् । ननु प्रकृते तेन किं तत्राह वत्सा सीता शिशुः राक्षसदर्शनादिना भीतास्यादिति भावः । न केवलमेतावदेव अपितु । वनभुवः अशिववृत्ताः अमंगलचर्याः अशनादीनां ग्राम्यत्वात् द्वन्द्वोपतापाच्चेति भावः । राजा दशरथः प्रियैः प्रेमास्पदैः मुक्तैः परित्यक्तैः असुभिः प्राणैः स्वमयशः असत्यनिमित्तं अपमार्ष्टि शोधयति "मृजेर्वृद्धिः" सखि

कष्टंच। वयमपि कथमनेन जनपदेषु बहुलीमविष्यता भरतयौवराज्यलक्ष्मी-कर्णपूरतमालपल्लवेन कैकेयीदुर्यशसामूर्धानमुन्नमय्य लोकस्य मुखं द्रक्ष्यामः।

**रामः**—(उत्थाय) तात जनक, यथास्वस्थं तातं शृणोमि

(इति निष्क्रान्तः)

**दशरथः**—(आश्वस्योत्थायच।) वत्स रामभद्र, प्रतिपालयामि

(इति जनकेन धार्यमाणो निष्क्रान्तः)

इत्यनर्घराघवे दशरथविषादयोगो नाम चतुर्थोऽङ्कः

---

कैकेयि अयं चरित्रस्य व्यत्यासः वैपरीत्यं केकयकुलेकथं आसीदिति शेषः। अनेन दशरथनिर्याणसीताहरणादिका भाविकथा किंचित्सूचिता ॥ ६९ ॥

शृणोमीति तथाकुर्वित्युक्त्वेतिशेषः निष्क्रान्तः दण्डकारण्याय प्रस्थितः।

इति लक्ष्मणसूरिविरचितायामाकराख्यायामनर्घराघवनाटकव्याख्यायां चतुर्थोऽङ्कः समाप्तः

॥ ओंतत्सत् ॥

# पञ्चमोऽङ्कः ।

( ततः प्रविशतः श्रमणाजांबवन्तौ )

**जांबवान्**— ततस्ततः

**श्रमणा**— ततो मिथिलाया निष्क्रम्य मन्थराकलेबरमवकीर्य मारुतिप्रत्यवेक्षितं स्वशरीरमधिष्ठाय गङ्गायां शृङ्गिबेरपुरं नाम निषादपक्कणमासाद्य शबरीभूतास्मि ।

**जांबवान्**— ततस्ततः

**श्रमणा**— ततश्च ममानुपदमेव तस्मिन् " इमौ रामलक्ष्मणौ इयं सीता " इति सर्वतः शब्दो महानभूत् ।

**जांबवान्**— ( सहर्षं ) ततस्ततः

**श्रमणा**— ततश्च कावेतौ रामलक्ष्मणाविति कर्णधाराधिपतिना गुहेनाहमनुयुक्ता निवेदितवत्यस्मि ।

पुत्रीयता दशरथेन मुनिप्रसादा-
त्प्राप्ताः पुराणपुरुषस्य कलाश्चतस्रः ।
तासामयं गुणमयः प्रथमः कुमारो
धीरोद्धतः पुनरसावपरस्तृतीयः ॥ १ ॥

---

भार्यां गवेषमाणोऽसृक्पेण हतां जटायुषः प्राणैः ।
वालिपदे सुग्रीवं सहायमभिषिच्य जयति रघुवीरः ॥

अथ पञ्चमाङ्के सुग्रीवराज्यप्राप्त्यन्तां कथां वर्णयिष्यंस्तदपेक्षितं विष्कंभमारचयति तत इत्यादिना, तत्र जटायुवधान्तातीतकथा, जटायुश्रमणाकथा प्रकरी अव्यापित्वात्, सुग्रीवकथा पताका व्यापित्वात्, तुर्याङ्कविष्कंभसूचितपात्रप्रवेशमाह श्रमणाजांबवन्ताविति, ततस्ततइति वरद्वयप्रार्थनस्य दशरथगोचरीकरणानन्तरं किमिति प्रश्नः । अवकीर्य त्यक्त्वा । प्रत्यवेक्षितं रक्षितं । पदस्य पश्चादनुपदं पश्चादर्थेऽव्ययीभावः । " कर्णधारस्तु नाविकः " इत्यमरः । पुत्रीयतेति । पुराणपुरुषस्य विष्णोः चतस्रः कलाः अंशाः पुत्रीयता पुत्रमात्मनइच्छता (क्यच्) दशरथेन मुनिप्रसादात् ऋश्यशृङ्गानुग्रहेण प्राप्ताः, तासां कलानां मध्ये गुणमयः प्रचुरगुणः अयं रामः प्रथमः कुमारः, धीरोद्धतः दर्पमात्सर्यादिगुणसंपन्नः असौ पुनः अपरस्तृतीयः लक्ष्मणाख्यस्तृतीयकुमारः ॥ १ ॥

**जांबवान्**— श्रमणे, साधूक्तं, ततस्ततः ।

**श्रमणा**— ततश्चौदकान्तानिवर्त्तितानुयात्रिकबन्धुवर्गः ससंभ्रमोपनतेन गुहेनोपनीतां नावमधिरुह्य,

तीर्त्वा भूतेशमौलिस्रजममरधुनीमात्मनासौ तृतीय-
स्तस्मै सौमित्रिमैत्रीमयमुपकृतवानातरं नाविकाय ।
व्यामग्राह्यस्तनीभिः शबरयुवतिभिः कौतुकोदञ्चदक्षं
कृच्छ्रादन्वीयमानः क्षणमचलमथो चित्रकूटं प्रतस्थे ॥२॥

**जांबवान्**— हन्त महत्करुणम् ।

**श्रमणा**— आर्य, करुणभयादेव तस्मिन्निङ्गुदीतरुमूले कुमारयोर्जटाग्रहणवृत्तान्तमन्तारितवत्यास्मि ।

**जांबवान्**— श्रमणे, सर्वमेतत्कल्याणोदर्कं भविष्यति ।

**श्रमणा**— अहं तु निषादपतिप्रीतये तत्रैवातिष्ठं, अतीते च गणरात्रे सप्रकृतिजानपदः पितुः स्वर्गारोहणवार्त्ताभिधायी द्वितीयो दाशरथिः रामभद्रमयोध्यामुपनेतुं तेनैव पथा चित्रकूटमुपगतः ।

---

आउदकान्तात् ओदकान्तात् गङ्गाकूलपर्यन्तं आङ् मर्यादायां, तीर्त्वेति। असौ रामः भूतेशस्य शिवस्य मौलिस्रजं किरीटमालारूपां अमरधुनीं गंगां आत्मना तृतीयः सीतालक्ष्मणाभ्यां सहितःसन् तीर्त्वा, तस्मै नाविकाय कर्णधाराय (गुहाय) नावा चरतीति नाविकः "नौद्व्यचष्ठन्" सौमित्रेः लक्ष्मणस्य सुमित्राशब्दस्य बाह्वादित्वादिञ् मैत्रीमयं स्नेहरूपं आतरं तरपण्यं उपकृतवान् तरणवेतनत्वेन दत्तवान्, अथो अनन्तरं व्यामेन तिर्यक्प्रसारितबाहुद्वयान्तरेण "व्यामो बाह्वोः सकरयोस्ततयोस्तिर्यगन्तरं" इत्यमरः । ग्राह्यौ अतिपीवरावित्यर्थः स्तनौ यासां ताभिः शबरयुवतिभिः निषादतरुणीभिः कौतुकेन अदृष्टपूर्वाद्भुताकारदर्शननिमित्तेन उदञ्चती उत्फुल्ले अक्षिणी यस्मिन् कर्मणि तथा "बहुव्रीहौ सक्थ्यक्ष्णोः" इत्यादिना षच्, कृच्छ्रात् स्तनभरेण मन्दं क्षणमन्वीयमानः अनुगम्यमानःसन् चित्रकूटमचलं प्रतस्थे प्रस्थितः "समवप्र" इत्यादिनातिष्ठतेस्तङ् । कुवलयानन्दे परिणामालंकार उदाहृतोऽयं श्लोकः ॥ २ ॥

करुणं शोकरसः । अन्तरितवती द्रष्टुमशक्तासती परागतास्मि यद्वा, तद्वृत्तान्तमितरवृत्तान्तेन सह तुभ्यमनुक्त्वैव पिहितवत्यास्मि "उदर्कः फलमुत्तरं" इत्यमरः । गणरात्रे बह्वीषु रात्रिषु "अहःसर्व" इत्यादिना समासान्तोऽच् "बहु-

**जांबवान्**—( साशङ्कं ) ततस्ततः,

**श्रमणा**—ततश्च तस्मिन् 'आर्य, लोके केकयानामाकल्पमनल्पमकीर्त्तिस्तंभं निखनता केनापि छलितस्तातः, तत्संप्रति गृहाण रघूणामाधिराज्यम्' इति पुनः पुनः चिरमनुबंधी रामेण स्वशरीरस्पृष्टिकया प्रत्यादिष्टः कृतजटापरिग्रहो भरतः शरभङ्गमुनिप्रेषितामस्य पादुकां भद्रासनमधिरोप्य प्रजानामाभ्युदयिकमवेक्षमाणस्तदैव नन्दिग्रामं गतवान् ।

**जांबवान्**— (सहर्षम्) हन्त फलितमस्मद्व्यवसायश्रमणापरिश्रमाभ्यां, ततस्ततः

**श्रमणा**—ततश्च शावाशौचमास्थितस्य क्षत्रियस्य प्रतिषिद्धमस्त्रग्रहणमिति छिद्रान्वेषिभिर्जनस्थानवास्तव्यैः खरदूषणप्रभृतिभिस्तत्र विराधो नाम राक्षसस्तीक्ष्णः प्रहितः ।

**जांबवान्**—( विहस्य )धिङ्मूर्खाः, आतिपातिके हि कार्ये राज्ञां सद्यः शुद्धिः, ततस्ततः ।

**श्रमणा**— ततश्च विराधवधाक्षिप्तहृदये दुःसहशोकदीर्घाह्नीमौर्ध्वदेहिकीं

गण" इत्यादिना संख्यासंज्ञा, "संख्यापूर्वरात्रं क्लीबं" इति क्लीबत्वं, तस्मिन्नित्यस्यानुबन्धीत्यनेन संबन्धः, आर्येत्याद्याधिराज्यमित्यन्तं भरतवचनं, छलितः वञ्चितः, अनुबन्धीप्रार्थयमानःसन्, स्वशरीरस्य स्पृष्टिकया शपथेन, प्रत्यादिष्टः निराकृतः आभ्युदयिकं मंगलप्रयोजनं कर्मेतिशेषः, अस्मद्व्यवसायेन सुग्रीवस्य राज्याभिषेचनप्रवृत्त्या श्रमणापरिश्रमेण मन्थराशरीरप्रवेशादिना च फलितं निष्पन्नं "फल निष्पत्तौ" भावे निष्ठा, शावाशौचं पितृमरणनिमित्तामशुचिं अशुचिशब्दात् "इगन्ताच्च लघुपूर्वात्" इत्यणि "नञः शुचीश्वर" इत्यादिना उभयपदवृद्धिः, निषिद्धमिति तदाऽनध्यायकालत्वान्मन्त्रोच्चारणपूर्वकमस्त्रप्रयोगासंभवात्, अतिपातः कालात्ययः तत्र भवः आतिपातिकः तस्मिन् आपद्विषय इति यावत्, सद्यःशुद्धिरिति उक्तं च याज्ञवल्क्येन " दाने विवाहे यज्ञे च संग्रामे देशविप्लवे । आपद्यपि च कष्टायां सद्यः शौचं विधीयते । " इति । दुःसहशोकेन दीर्घाणि अहानि यस्यां तां " अह्नोपोऽनः " इत्यह्नोऽकारस्य लोपः, " अन उपधालोपिनोऽन्यतरस्यां " इति ङीप् । ऊर्ध्वदेहनिमित्तभूतां और्ध्वदेहिकीं क्रियां " तस्य निमित्तं " इत्यादिना संयोगे ठञ्, संयुज्यते अनेनेति संयोगः क्रिया पुत्रीयः क्रतुरितिवत्, यद्वा, देहादूर्ध्वमूर्ध्वदेहः राजदन्तादित्वाद्देह-

पितुः क्रियामतिवाह्य भगवता चतुःसमुद्रमुष्टिंधयेन विन्ध्याचलचापलारंभविस्रंभघातिना वातापिदानवदीर्घयात्रामंगलकलशेन कलशयोनिना सनाथामरण्यवीथीं प्रतिष्ठमाने दाशरथौ पथि धाराधरोनाम वायसः सहसैव वैदेहीमुपाद्रवत् ।

**जांबवान्**—(स्वगतम्) इदं तावदपशकुनं नाम, (प्रकाशम्) ततस्ततः ।

**श्रमणा**—ततश्च,

रक्षोऽभिचारचरुभाण्डमिव स्तनं यो
देव्या विदेहदुहितुर्विददार काकः ।
ऐषीकमस्त्रमधिकृत्य तदा तमक्ष्णा
काणीचकार चतुरो रघुराजपुत्रः ॥ ३ ॥

**जांबवान्**—ततस्ततः,

**श्रमणा**—ततश्च, क्रमेणैव सुतीक्ष्णादीनुपस्थाय महामुनीन् ।
अगस्त्यशासनादास्ते पञ्चवट्यां रघूद्वहः ॥ ४ ॥

**जांबवान्**— (सहर्षम् ।) तर्हि हस्तगतएवास्माकं, कियदन्तरमृश्यमूकजनस्थानयोः ।

**श्रमणा**— आर्य, न खल्वद्यापि श्रोतव्यं शृणोषि,

**जांबवान्**— अवहितोऽस्मि ।

---

शब्दस्य परनिपातः, तत्र भवां अध्यात्मादित्वाठञ् और्ध्वदैहिकीमिति पाठेत्वानुशतिकादित्वं वक्तव्यं अन्त्येष्टिमित्यर्थः, अतिवाह्य निर्वर्त्य । मुष्टिंधयतीति मुष्टिन्धयः "नाडीमुष्टचोश्च" इति खश् । चतुरः समुद्रान् मुष्टिंधयः "तद्धितार्थ" इत्यादिना समासः विन्ध्याचलस्य चापलेन मेरुसाम्यस्पर्धया आरंभविस्रंभस्य औन्नत्येन चन्द्रसूर्यगतिनिरोधप्रयत्नस्य घातिना निग्रहीत्रा, वातापिदानवस्य दीर्घयात्रायाः मरणस्य मंगलकलशेन पूर्णकुंभेन जगतां हितकरत्त्वात्तथारूपणं, अरण्यवीथीं वनसमूहं, अगस्त्यसंबन्धिन्यः कथास्त्वतिप्रसिद्धा एव । रक्ष इति । यः काकः धाराधरः रक्षसां अभिचारचरुभाण्डमिव हिंसार्थं निर्मितहव्यपाकपात्रमिवस्थितं देव्याः विदेहदुहितुः सीतायाः स्तनं विददार नखैस्तुण्डेन च विदारितवान्, चतुरः निपुणः रघुराजपुत्रः रामः, तदा ऐषीकं मुञ्जतृणनिर्मितं अस्त्रं ब्रह्मास्त्रं अधिकृत्य प्रयुज्य तं काकं अक्ष्णा काणीचकार एकाक्षं कृतवान् "येनांगविकारः" इत्यक्षिशब्दस्यतृतीया ॥ ३ ॥

क्रमेणेति । पञ्चानां वटानां समाहारः पञ्चवटी स्पष्टमन्यत् ॥ ४ ॥

**श्रमणा**— तत्र च कामुकी रामभद्रमनुप्रविश्य रसं दास्यामीति संकल्पितवती द्रोहपातकिनी शूर्पणखा लक्ष्मणरोषहुतभुजि कर्णनासोष्ठमयीभिस्तिसृभिराहुतिभिः प्रायश्चित्तयांचक्रे ।

**जांबवान्**— (सातङ्कम्) अहह महाननर्थकन्दः संवृत्तः अथ भगिन्यास्तादृशं विडंबनमवलोक्य खरादिभिः किं प्रतिपन्नम् ।

**श्रमणा**—(विहस्य) आर्य, तत्प्रतिपन्नं, यद्रामभद्रे धृतधन्वनि प्रतिपद्यते ।

**जांबवान्**—(सहर्षहासम्) तत्किं तेऽपि वालिसाहायकोपस्थायिनो विराधयात्राप्रहतमध्वानमनुप्रपन्नाः ।

**श्रमणा**— अथ किं ।

**जांबवान्**— श्रमणे, प्ररूढमिदानीं रामरावणयोर्वैरम् ।

**श्रमणा**—(हसन्ती) आर्य, मन्ये खरदूषणप्रभृतीनामभिभवाभिधाने केवलं क्लेशयिष्यति वाचं, आत्मनः पुनरनक्षरमपि शूर्पणखामुखमावेदयिष्यति दशकन्धरस्य ।

**जांबवान्**—(सस्मितम्) श्रमणे, लघूत्थानमनर्थमुत्प्रेक्ष्य प्रमुग्धोऽस्मि ।

**ऐक्ष्वाकेण पुरापि कौशिकमखादारभ्य लङ्केश्वरो**
**धत्ते शाश्वतिकं विरोधमधुना त्वेते हता बान्धवाः ।**
**उत्साहप्रभुमन्त्रशक्तिभिरलं भूष्णुश्छलज्ञो बली**
**दृप्तःशूर्पणखानिकारमपरं दृष्ट्वा कथं मृष्यते ॥ ५ ॥**

---

कामुकी मैथुनेच्छावती "जानपदकुण्ड" इत्यादिना ङीष् अनुप्रविश्य शृङ्गारप्रदानेन वशीकृत्य, रसं विषं "शृङ्गारादौ विषे वीर्ये गुणे रागे द्रवे रसः" इत्यमरः, द्रोहपातकिनी मारणध्यानरूपपातकवती शूर्पणखेति "नखमुखात्संज्ञायां" इति ङीष्निषेधः, प्रायश्चित्तयांचक्रे प्रायश्चित्तं (पातकनिवर्त्तकं तपः) कृतवती अथेतिप्रश्ने । विडंबनं अवमानं, साहायके सहायकर्मणि "सहायाद्वा" इति वुञ् । प्ररूढं प्रवृद्धं । अनक्षरमित्यादि शूर्पणखामुखवैकृतेनैव ज्ञास्यतीत्यर्थः । लघूत्थानं अप्रयासेनैव शीघ्रमुपस्थितं । ऐक्ष्वाकेणेति । लङ्केश्वरः पुराऽपि कौशिकमखादारभ्य तत्र ताटकादिसंहारात्, ऐक्ष्वाकेण रामेण शाश्वतिकं विरोधं नित्यवैरं "येषां च विरोधः शाश्वतिकः" इति निर्देशाट्टिलोपेन, धत्ते, अधुनाप्येते बान्धवाः खरादयः हताः अमर्षणे हेत्वन्तरमाह उत्साहशक्त्या प्रभुशक्त्या यथायोगं कोशदण्डादिना मन्त्रशक्त्या यथोचितं सन्ध्याद्युपायचिन्तनेन च

शनैःशनैरनयोर्विरोधे संधुक्ष्यमाणे तुल्यव्यसनस्थो दाशरथिरसहायः सूर्यसूनुना संधातुमीषत्करः स्यात् ।

**श्रमणा**—आर्य, किमिदानीमनुष्ठेयमस्ति, मम हि शिष्यपुत्रो निषादचक्रवर्ती गुहो लक्ष्मणमित्रं, अनेनसोपानेन सुखाधिरोहो रघुपतिरस्माकम् ।

**जांबवान्**—(सहर्षस्मितम्) श्रमणे, यद्यसि सुग्रीवपक्षपातिनी, तद्गच्छ, सत्वरमुपस्थापय निषादराजम् । (इति श्रमणा निष्क्रान्ता)

(नेपथ्ये । एकतः)

भो भो लक्ष्मण, वैशेषिककटन्दीपण्डितो जगद्विजयमानः पर्यटामि, क्वासौ रामः तेन सह विवदिष्ये, (अन्यतः), भो भो परिव्राजक, कालसर्पखलीकारखर्जूलता नखलुसुखाकरी वृश्चिकमन्त्रतान्त्रिकस्य ।

**जांबवान्**— कथं लक्ष्मणपरिव्राजकौ संलपतः शृणोमितावत्

(इत्यवधत्ते । नेपथ्ये । पुनरेकतः)

आः लक्ष्मण, सर्वविद्रावणः खल्वहं, कोमया जनितमानभंगो न पराजीयते । (नेपथ्ये पुनरन्यतः) । किं भवान् रावणः

(जांबवान् सविशेषमवदधाति । नेपथ्ये पुनरेकतः)

---

अलमूष्णुः संपन्नः "ग्लाजिस्थश्च ग्स्नुः" छलज्ञः मायावी "छलं स्खलितशाठ्ययोः" इति मेदिनी, बली प्रशस्तबलः दृप्तः गर्वितश्च एवंभूतो रावणः अपरं शूर्पणखायाः निकारं विरूपकरणरूपं विप्रकारं कथं मृष्यते मरणदुःखादपि विरूपणदुःखस्य दुःसहत्वात्तन्मर्षणे च गर्ह्यत्वापत्तेरिति भावः, "विभाषा कथमि लिङ् च" चाल्लट् ॥ ९ ॥

संधुक्ष्यमाणे उद्दीप्यमाने दृढतरंसतीतियावत् । तुल्यव्यसनस्थः सुग्रीववद्राज्यभ्रंशदारापहाररूपविपत्साम्यं गतः । सोपानेन उपायेन । उपस्थापय आनय । नेपथ्य इत्यादिः प्रागपक्रान्त इत्यन्त औत्तराहोऽधिकः पाठः, भो भो इत्यादिः परिव्राजकवेषप्रच्छन्नस्य रावणस्योक्तिः । कटन्दीति व्याख्याग्रन्थविशेष इत्याहुः, भो भो परिव्राजक इत्यादिर्लक्ष्मणोक्तिः एवमुत्तरत्रापि, कालसर्पखलीकारस्य कृष्णसर्पकृतपीडायाः खर्जूलता सहनत्वं । वृश्चिकमन्त्रतान्त्रिकस्य शूककीटविषहारकमन्त्रशास्त्रज्ञस्य, अयं भावः यथा वृश्चिकमन्त्रज्ञानमात्रेण सर्पदंशनपीडा परिहर्तुं न शक्यतेतैवं वैशेषिकतन्त्रपाण्डित्येन परिव्राजकस्य तव किंस्यात्, आत्मज्ञानं

भो भो वाचोयुक्तिज्ञ, सर्वेषां विद्रावणः खल्वहमिति समस्य व्याहृतमन्यथाऽभिसंधाय वाक्छलेन प्रत्यवतिष्ठमानो निगृहितोऽसि तन्मुञ्च मां भिक्षायै । (अन्यतः) किंत्वया किंतरां च रावणेन, अहमप्युत्सुकोऽस्मि, त्वरितंगच्छामि,

**जांबवान्**—कथमेतदस्फुटार्थमेव निर्वहणं, मन्ये पुनरेष परिव्राजकच्छलेन रावण एव कोपादुक्तमप्यपलप्य स्वं नाम द्रागपक्रान्तः । (सर्वतो निरूप्य) अये, पुराणप्रियसुहृदस्माकं दक्षिणस्या दिशः परापतन् जटायुरिव लक्ष्यते तदेनमनुपालयामि तावत्, दूरदृशो हि गृध्राः, कदाचिदेष लङ्काद्वीपवृत्तान्तमप्युपलभेत

(प्रविश्य)

**जटायुः**— प्राप्तैवेयमस्माभिःपञ्चवटी, यदमूर्गोदावरीतरङ्गशीकरासेकसुकुमारमांसलपरिसरारण्यमालिन्यो जनस्थानसीमानः, अपिच ।

दृश्यन्ते मधुमत्तकोकिलवधूनिर्धूतचूताङ्कुर-
प्राग्भारप्रसरत्परागसिकतादुर्गास्तटीभूमयः ।
याःकृच्छ्रादतिलङ्घ्य लुब्धकभयात्तैरेव रेणूत्करै-
र्धारावाहिभिरस्ति लुप्तपदवीनिःशङ्कमेणीकुलम् ॥ ६ ॥

---

विना कालसर्पतुल्यस्य मृत्योरपरिहार्यत्वादिति, इन्द्रादिजेतृत्वाहंकारेण कालसर्पतुल्यस्य रामबाणस्य शरव्यतां मा यासीरिति च ध्वनिः, वाचोयुक्तिज्ञ वाग्मिन् "वाग्दिक्पश्यद्भ्योयुक्तिदण्डहरेषु" इत्यलुक् । अभिप्रायान्तरेण प्रयुक्तस्यार्थान्तरं परिकल्प्य दूषणं छलं । वाचःछलं वाक्छलं, यथा नवकंबलोऽयं देवदत्त इति नूतनतात्पर्येण प्रयुक्तस्य नवत्वसंख्याविशिष्टमर्थान्तरं परिकल्प्य कश्चिद्दूषयति नास्य नवकंबलाः सन्त्यतिदरिद्रत्वादित्यादि, निर्वहणं उपसंहारः, सर्ववित्रावण इत्युपक्रान्तस्य स्वरूपगूहनार्थमन्यथोपसंहार इत्यर्थः । जटायुप्रवेशं वक्तुं सूचनामाह अयमित्यादि, दूरदृशः अतीवासन्निकृष्टमपि द्रष्टुं शक्ताः "आयोजनशतात्साग्राह्यं पश्याम नित्यशः ।" इति वाल्मीकीये संपातिवचनात्, दृश्यन्त इति । मधुना पुष्परसेन मत्ताभिः हृष्टाभिः कोकिलवधूभिः निर्धूतात् पक्षाहतात् चूताङ्कुराणां सहकारमञ्जरीणां प्राग्भारात् समूहात् प्रसरद्भिः पतद्भिः परागैः पुष्परेणुभिरेव सिकताभिः सैकतैः दुर्गाः दुर्गमाः तटीभूमयः गोदावरीतीरप्रदेशाः दृश्यन्ते, एणीकुलं मृगीसमूहः लुब्धकभयात् किरातभीत्या याः तटीभूमीः कृच्छ्रात् श्रमेण अतिलङ्घ्य अतीत्य धारावाहिभिः निरन्तरपातिभिः तैरेव रेणूत्करैः चूतपरागपुञ्जैः लुप्तया आच्छादितया पदव्या गमनमार्गेण निःशङ्कं किरातभयरहितं सत् अस्ति ॥ ६ ॥

**जांबवान्**— ( किंचिदुपसृत्य ) कुतः पुनरियतावेगेन वयस्यो जटायुः ।

**जटायुः**— ( दृष्ट्वा ) कथं जांबवान्, सखे, क्षमस्व, नसभाजयिष्यामि तावद्भवन्तम्, मया हि मलयाचलकुलायादार्यसंपातिपादावभिवाद्य,निवर्त्तमानेनमारीचसहचरः संचरन्निमामरण्यानीमभिलक्षितो राक्षसराजः, तदतिविषममाशङ्कमानं मां वत्सरामभद्रस्नेहस्त्वरयति ।

**जांबवान्**—( स्वगतम् ) वयमप्येतदेव प्रतिपित्सामहे, (प्रकाशम्) सखे, त्वरस्व ( इति निष्क्रान्तः )

**जटायुः**—( परिक्रम्यावलोक्यच ) इयमग्रे पञ्चवटी, ( सवितर्कम् )

**नीतो दूरं कनकहरिणच्छद्मना रामभद्रः**
**पश्चादेनं द्रुतमनुसरत्येष वत्सः कनिष्ठः ।**
**बिभ्यद्भिभ्यत्प्रविशति ततः पर्णशालां च भिक्षु-**
**र्धिक्कष्टं भोः प्रथयति निजामाकृतिं रावणोऽपि ॥ ७ ॥**

अहह, **आर्यपुत्रार्यपुत्रेति रुदन्तीं कुररीमिव ।**
**रथमारोप्य वैदेहीमेष पापः क्व गच्छति ॥ ८ ॥**

( साटोपंपरिक्रामन् ) रे रे रावण,

---

न सभाजयिष्यामि तावत् संभ्रमवशान्नपूजयामि "क्षिप्रवचने लृट्" कुलायः स्थानं "कुलायस्तु पुमान् स्थानमात्रे स्यात्पक्षिवासके" इति मेदिनी । अरण्यानीं महारण्यं । अतिविषमं रामाद्यनिष्टं । प्रतिपित्सामहे प्रतिपत्तुं (ज्ञातुं) इच्छामः "सनि मीमा" इत्यादिना धातोरच इस् अभ्यासलोपश्च । **नीत इति** । रामभद्रः कनकहरिणच्छद्मना मायया स्वर्णमृगतां गतेन मारीचेन दूरं नीतः, एष कनिष्ठो वत्सः लक्ष्मणः एनं रामं पश्चादनुसरति अनुधावति, ततः भिक्षुः परिव्राट् "सनाशंसभिक्ष उः" इत्युक्तं बिभ्यद्भिभ्यत् अतीव भीतःसन् पर्णशालां रामाश्रमं प्रविशति अयं भिक्षुः रावणःसन् निजामाकृतिं प्रथयति प्रकाशयति भोः कष्टं धिक् अत्यर्थमनर्थ आपन्न इत्यर्थः ॥ ७ ॥

**आर्यपुत्रेति** । आर्यपुत्रेति राममुद्दिश्य सीतासंबोधनं "आर्यपुत्रेति संबोध्यः पतिः पत्नीजनेनतु" इति भरतोक्तेः, संभ्रमार्था द्विरुक्तिः कुररीमिव पक्षिविशेषमिव रुदन्तीं आक्रोशन्तीं वैदेहीं रथमारोप्य एष पापः रावणः क्व गच्छति मयि स्थिते सतीति शेषः ॥ ८ ॥

वधूटीमिक्ष्वाकोर्निजकरतलस्पर्शमलिना-
मिमां कुर्वाणस्य स्फुरतिहृदि शोभैव भवतः ।
कुले येषां जातस्त्वमसि गणितास्तेऽपि गुरवो-
न सप्त ब्रह्माणः कथमिव पुलस्त्यप्रभृतयः ॥ ९ ॥

( पुनराकाशे ) अलीकाट्टहासधूमधूसरितदशवक्त्रवल्मीक, किमात्थरेराक्षसापशद, किमात्थ ।

जगद्विलोभि सीताख्यमामिषं हरतो मम ।
अयं किल जरद्गृध्रः करादाच्छिद्य नेष्यति ॥ १० ॥

आः पाप, किमेवमाभिदधासि तिष्ठ तिष्ठ,

भुजाविटपमदेन व्यर्थमन्धंभविष्णु-
र्धिगपसरसि चोरंकारमाक्रुश्यमानः ।
त्वदुरसि विदधातु स्वामपस्कारकेलिं
कुटिलकरजकोटिक्रूरकर्मा जटायुः ॥ ११ ॥

( इति निष्क्रान्तः शुद्धविष्कंभः )

---

साटोपं सगर्वं । वधूटीमिति । रे रे रावण, इमामिक्ष्वाकोर्वधूटीं स्नुषां निजकरतलस्पर्शेन मलिनां दूषितां कुर्वाणस्य भवतःहृदि शोभैव स्फुरति काका निःश्रीकत्वं जातमिति भावः, आस्तामिदं, येषां कुले त्वं जातोऽसि ते पुलस्त्यप्रभृतयः ते गुरवः कुलकूटस्थाः सप्त ब्रह्माणः प्रजापतयोऽपि कथं न गणिताः नापेक्षितास्त्वया ॥ ९ ॥

अलीकाट्टहासः वृथागर्जितमेव धूमः तेन धूसरितानि मलिनानि वक्त्रवल्मीकानि मुखनाकवो यस्य तथाभूत, रावणवचनमनुवदति जगदिति । जगतो विलोभि अभिलाषोत्पादकं सीताख्यमामिषं भोग्यवस्तु "उत्कृष्टेपलले भोगे भोग्यवस्तुनि चामिषं" इति विश्वः हरतो मम करात् अयं जरद्गृध्रः जीर्णः कंकः "जीर्यतेरतृन्" आच्छिद्य बलादपहृत्य नेष्यति किल, परिहासवचनमिदं ॥ १० ॥

भुजेति । भुजाएव विटपाः शाखाः तेषां मदेन गर्वेण व्यर्थं निष्फलं यथा तथा अंधंभविष्णुः अंधीभवन् "कर्तरिभुवः" इत्यादिना अंधोपपदाद्भुवः खिष्णुच् चोरंकारमाक्रुश्यमानः चोरशब्दमुच्चार्य मया निन्द्यमानस्त्वं "कर्मण्याक्रोशे कृञः खमुञ्" अपसरसि अपयासि अतोधिक्त्वां, कुटिलानां करजानां नखानांकोटिभिः अग्रैः क्रूरकर्मा दारुणकृत्यः जटायुः त्वदुरसि स्वामपस्कारकेलिं हर्षेण विदारणक्रियां विदधातु करोतु "अपाच्चतुष्पात्" इत्यादिना किरतेः सुट् ॥ ११ ॥

( ततःप्रविशति लक्ष्मणः )

**लक्ष्मणः** — अहो दुर्निवारदारुणक्रोधशोककलहमहनोऽयमिमोऽयं दशाविवर्तः, यस्मिन्निति कर्तव्यताविधानमप्यनौपयिकमस्माकम् । तथा हि ।

तत्तादृग्दशकण्ठवञ्चनरुषा धूमायमानो गिरं
नार्धोक्तिप्रविलीनवर्णविधुरामार्यः समाप्नोति मे ।
चापे तातजटायुजीवितकथापर्यन्तधूमायित-
क्रोधोत्पीडनिपीतशोकजडिमा दृष्टिस्तु विश्राम्यति ॥ १२

(नेपथ्याभिमुखम्) इत इत आर्य, मारीचमथन, दृश्यन्ताममूरवाचीं ककुभमभि वर्तमाना विन्ध्यवनवीथिभूमयः । (प्रविश्य)

**रामः** — (आकाशे लक्ष्यंबध्वा)

कुले वा शौर्येवा भुजसमुदये वा तपसि वा
बभूवुर्न प्राञ्चस्त्वामिव भवितारो न चरमे ।
अहो धिङ्मोहस्ते कथमतिचिरादेष न खलु
प्रवीराणां पन्था दशवदन येनासि चलितः ॥ १३ ॥

---

इतिकर्तव्यताविधानं प्रयोज्यविधिः, उपायएव औपयिकं न औपयिकं अनौपयिकं विनयादित्वात्स्वार्थे ठक् ह्रस्वश्च, तत्तादृगिति । मे आर्यः रामः तत्तादृशा अत्युत्कटया दशकण्ठवञ्चनरुषा रावणशाठ्यजनितकोपेन धूमायमानः धूमवानिवाचरन् उज्ज्वलन्नित्यर्थः अर्धोक्तौ वाक्यार्धे प्रविलीनवर्णां अन्तर्गताक्षरां अतएव विधुरां असंपूर्णां गिरं वाक्यं न समाप्नोति न पूरयति । तातस्य आर्यस्य जटायोः जीवितकथायाः पर्यन्तेनसमाप्त्या नाशेनेति यावत् धूमायितस्य दीप्तस्य क्रोधस्य उत्पीडेन आधिक्येन निपीतः ग्रस्तः शोकजडिमा दुःखकृतजाड्यं यस्यास्तथाभूता दृष्टिस्तु चापे विश्राम्यति कोपेन पुनःपुनश्चापमवलोकनइतिभावः ॥ १२

मारीचमथनेति संबोधनं तद्वधसूचनार्थं । अवाचीं ककुभमभि दक्षिणदिशं लक्षीकृत्य "अभिरभागे" इति लक्षणार्थे कर्मप्रवचनीयसंज्ञा कुल इति । हे दशवदन, प्राञ्चः प्राचीनाः पुरुषाः कुले वा शौर्ये वा भुजसमुदये बाहुसमूहे वा तपसि व्रताचरणे वा त्वमिव न बभूवुः, चरमे भाविनश्च "प्रथमचरम" इत्यादिना सर्वनामता, न भवितारः लुट् । एवं महाकुलीनत्वादिसंपन्नस्य ते मोहः "न परदारानुपेयात्" इति श्रुतिनिषिद्धाचरणाभिनिवेशः कथं अभूदिति शेषः न केवलं पारदारिकत्वमेवापितुवीरगर्हितं स्तेयमपीत्याह अतिचिरात् एषः स्तेयाचारः न खलु प्रवीराणां पन्थाः येन हेतुना चलितोऽसि धर्माद्वीरसमयाच्च भ्रष्टोऽसि तत् धिक् त्वामिति शेषः, अहो कष्टं महाकुलीनत्वादेर्वैयर्थ्यापादनात् १३

(विमृश्य, सखेदस्मितम्) अहो, पौलस्त्य,

सिद्धश्रोत्रपरंपरापरिगतैरेभिः प्रपौत्रस्य ते
वृत्तैरद्य पुलस्त्यवर्जमभितः स्मेरेषु देवर्षिषु ।
विष्वग्वृत्तिरसंगता नमयितुं दुर्वारलज्जाभर-
म्लानश्रीस्तु चतुर्मुखी भगवतो धातुःकथं वर्तते ॥ १४ ॥

(क्षणमनुध्यायन्) हा प्रिये विदेहराजपुत्रि, (इति संवरणं नाटयति)

**लक्ष्मणः**— (उपसृत्य) आर्य, कोऽयमभिषंगो नाम भवादृशानप्यास्पदीकरोति,

पतति व्यसने दैवाद्दारुणाद्दारुणात्मनि ।
संवर्मयति वज्रेण धैर्येण महतां मनः ॥ १५ ॥

**रामः**— (दीर्घमुष्णंच निश्वस्य) वत्स,

सहजधैर्यवशंवदवृत्तयो
हृदि रुषश्च शुचश्च नियन्त्रिताः।

---

सिद्धेति । हे पौलस्त्य, सिद्धानां श्रोत्रपरंपरया परिगतैः श्रोत्रपथं गतैः प्रपौत्रस्य ते एभिः वृत्तैः अद्य पुलस्त्यवर्जं "अनुदात्तं पदमेकवर्जं" इति निर्देशाद्वृजेर्णमुल् अभितः उभयतः देवर्षिषु स्मेरेषु स्मितं कुर्वाणेषुसत्सु विष्वक् सर्वतः वृत्तिः वर्त्तनं यस्याः सा अत एव नमयितुं लज्जाप्रतीकारत्वेन नतां कर्तुं असंगता अयुक्ता ततश्च दुर्वारेण लज्जायाः भरेण आधिक्येन म्लाना क्लान्ता श्रीः यस्यास्तथाभूता भगवतो धातुः ब्रह्मणः चतुर्मुखी मुखचतुष्टयं समाहारद्विगौ ङीप् अद्यकथं वर्त्तते गर्हेतेति भावः ॥ १४ ॥

संवरणं नाटयति आन्तरदुःखगूहनमभिनयति मुह्यतीति वा, अभिषंगः दुःखकृतकातर्यं, आस्पदीकरोति आश्रयति । पततीति । दारुणात्मनि क्रूरस्वभावे व्यसने विपदि दारुणाद्दैवात् पतति मासिसति, महतां मनः, कर्तृ, धैर्येण वज्रेण (व्यस्तरूपकमिदं) संवर्मयति वर्मणा सन्नह्यति रक्षतीति भावः, "सत्यापपाश" इत्यादिना णिच् ॥ १५ ॥

सहजेति । सहजस्य नैसर्गिकस्य धैर्यस्य वशंवदवृत्तयः स्वाधीनाः "प्रियवशे वदः खच्" इति खच्, रुषः कोपाः शुचः शोकाश्च हृदि नियन्त्रिताः निगृहीताः चकारार्थत्वार्थं रुद्शुचोर्महत्वोक्तिः, अपत्रपा भार्याहरण[illegible]

इह तु किं करवै यदपत्रपा
किमपि मामवजित्य विजृंभते ॥ १६ ॥

**लक्ष्मणः**— (पुरोऽवलोक्य) आर्य, अयमग्रे तातजटायुषोवीरलोकसाधन-सिद्धिक्षेत्रमरण्यसन्निवेशः, पश्य,

भग्नोऽयं कथमत्र रावणरथस्तातेन वज्राङ्कुर-
क्रूरापस्किरमाणभङ्गुरनखत्रोटित्रुटद्बन्धनः ।

**रामः**—(सकरुणास्रम्)

हा सीरध्वजराजपुत्रि स तदा दृष्टस्त्वया धन्यया
पक्षीन्द्रो दशकण्ठकुञ्जरशिरःसंचारिपञ्चाननः ॥ १७ ॥

(इति लक्ष्मणमवष्टभ्य ध्यानं नाटयति)

**लक्ष्मणः**—(स्वगतम्) अहो महादोषः खल्वयमतिप्रसज्यमानोमानसः शोकाख्यो विकारः, तदन्यतः प्रसारयामि, (प्रकाशम्) आर्य, पश्य ।

विंध्यगिरिराजकन्यान्तःपुरमेतास्तरङ्गमालिन्यः ।
वेतस्वतीभिरद्भिस्तौर्यत्रिकगुणनिकां दधते ॥ १८ ॥

---

मामवजित्य अवमत्य किमपि निरङ्कुशं विजृंभते उत्पद्यते इति यत् इह अस्मिन्विषये तु किं करवै किं कुर्यां क्रोधशोकनिग्रहेऽपि लज्जाया दुर्वारत्वादिति भावः॥१६

वीरलोकसाधनस्य वीरस्वर्गप्राप्तेः, सिद्धिक्षेत्रं मरणस्थानमित्यर्थः । भग्न इति । अयं रावणरथः वज्राङ्कुरवत् क्रूरैः तीक्ष्णैः अपस्किरमाणैः हर्षेण विदारयद्भिः "किरतेहर्षजीविका" इत्यादिनात्मनेपदं "अपांच्चतुष्पात्" इत्यादिना तत्सन्नियोगशिष्टः सुट् च भङ्गुरैः कुटिलैः नखैः त्रोट्या चञ्च्वा च "चञ्चुस्त्रोटिरुभे स्त्रियौ" इत्यमरः, त्रुटन्ति शिथिलीभवन्ति बन्धनानि यस्य तथाभूतः सन् अत्र अस्मिन् प्रदेशे तातेन जटायुषा कथं भग्नः छिन्नः किं, सकरुणास्रमिति स्वनिमित्तंजटायुमरणकृतदुःखाश्रुजलेन सह, सीरध्वजराजपुत्रि हे सीते, धन्यया त्वया दशकण्ठकुञ्जरस्य रावणरूपगजस्य शिरःसञ्चारी मस्तके सञ्चरणशीलः पञ्चाननः सिंहः पक्षीन्द्रः जटायुः तदा मिर्याणसमये दृष्टः, आवयोस्त्वन्त्यदशायां तद्दर्शनमपि नासीदिति भावः, हा कष्टम् ॥ १७ ॥

अतिप्रसज्यमानः अतिरिच्यमानः, अन्यतः प्रसारयामि । विंध्येति । विंध्यगिरिराजस्य कन्यान्तःपुरं अन्तःपुरवर्तिन्यः कन्या। तत्रभवत्याऽऽनदीनां

**रामः**— ( उन्मील्यचक्षुषी, दीर्घमुष्णं च निश्वस्य ) वत्स, दर्शनीयमेतत् ।

कुमुदवनविशायजाग्रदंभो-
रुहकृतयामिकविभ्रमा रमन्ते ।
मदकलकरिकर्णतालनृत्य-
न्मुखरमयूरमनोरमास्तटिन्यः ॥ १९ ॥

**लक्ष्मणः**— आर्य, अयमितो गिरिर्माल्यवान्,

इह महिषविषाणव्यस्तपाषाणपीठ-
स्खलनसुलभरोहिद्गर्भिणीभ्रूणहत्याः ।
कुहरविहरमाणप्रौढभल्लूकहिक्का-
भयचकितकिरातस्रस्तशस्त्रा वनान्ताः ॥ २० ॥

**रामः**—( चिरं दृष्ट्वा सकरुणास्रम् )

प्रतिपरिसरं भूयानर्घः शिखण्डभृतांयथा-
मिलितमलिभिः संभुज्यन्ते कदंबविभूतयः ।

---

तत्कन्यात्वं अन्तःपुरशब्दोऽत्रलाक्षणिकः, एतास्तरङ्गमालिन्यः नद्यः वेतस्वतीभिः बहुवेतसाभिः " वेतस्वान् बहुवेतसे " इत्यमरः वेतसशब्दाच्चातुरर्थिको ड्मतुप्, अद्भिः तौर्यत्रिकस्य नृत्तगीतनाट्याख्यवाद्यस्य गुणनिकां अभ्यासंदधते, पश्य १८

कुमुदेति । कुमुदवनस्य कैरवसमूहस्य विशाये पर्यायशयने सति " उपशायो विशायश्च पर्यायशयनार्थकौ " इत्यमरः " व्युपयोः शेतेः पर्याये " इति घञ्, जाग्रद्भिः विनिद्रैः अंभोरुहैः पद्मैः कृतः यामिकानां यामरक्षणकाणां " रक्षति " इति ठक्, विभ्रमो विलासो यासुतथोक्ताः, मदकलानां मत्तानां करिणां गजानां कर्णतालेन कर्णध्वानिना नृत्यद्भिः अत एव मुखरैः शब्दायमानैः मयूरैः मनोरमाः तटिन्यः नद्यः रमन्ते प्रीणयन्ति अन्तर्भावितण्यः भान्तीतिवार्थः १९

इहेति । इह वनान्ताः महिषाणां विषाणैः शृङ्गैः व्यस्तानां पाषाणपीठानां पीठसदृशोपलानां स्खलनेन भ्रंशेन सुलभाः अनायाससाध्याः रोहिद्गर्भिणीनां गर्भिणीनां रोहिदाख्यमृगाणां " चतुष्पादो गर्भिण्या " इति समासः, भ्रूणहत्या गर्भनाशो येषु तथोक्ताः, कुहरेषु गुहासु विहरमाणानां क्रीडतां प्रौढानां दुर्धर्षाणां भल्लूकानां ऋक्षाणां हिक्काभयेन शब्दविशेषजनितभीत्या चकितैः भीतैः किरातैः व्याधैः स्रस्तानि त्यक्तानि शस्त्राणि येषु तथाभूताः भान्तीतिशेषः २०

प्रतिपरिसरमिति । शिखण्डभृतां मयूराणां प्रतिपरिसरं सर्वास्वपि पर्यन्तभूमिषु वीप्सायामव्ययीभावः । भूयान् बहुतरः अर्घः महोत्सवः भवतीति शेषः ।

अभिनवघनव्यूढोरस्कः प्रवर्षति माल्यवान्
विषधरवधूगर्भाधानप्रियंकरणीरपः ॥ २१ ॥

वत्स लक्ष्मण, धारय मां न शक्नोमि स्तंभयितुमात्मानम् ।

इयमविरलश्वासा शुष्यन्मुखी भिदुरस्वरा
तनुरवयवैः श्रान्तिस्रस्तैरुपैति विवर्णताम् ।
स्फुरति जडता बाष्पायेते दृशौ गलति स्मृति-
र्मयिरसतया शोको भावश्चिरेण विपच्यते ॥ २२ ॥

(लक्ष्मणेन धार्यमाणो निमीलिताक्षएव) हा प्रिये दण्डकारण्यविहारसब्रह्मचारिणि,"
(इतिपुनः संवृणुते)

**लक्ष्मणः** (सखेदं । आत्मगतम् ।) केनपुनरेष रसो रसान्तरेणतिरस्क्रियेत ।

(नेपथ्ये)

आः पाप कबंधहतक, न भवसि ।

**रामः** (आकर्ण्य । ससंभ्रमम्) वत्स, दुरात्मना दनुकबंधेन कलहायमानो वयस्यस्ते गुहइव श्रूयते बहूच्छलानि रक्षांसि; तत्त्वरिततरमभ्युपपद्यस्व ।

(इति लक्ष्मणो निष्क्रान्तः)

---

अलिभिः भ्रमरैः । कर्तृभिः । कदंबानां नीपवृक्षाणां विभूतयः मकरन्दरूपैश्वर्याणि यथामिलितं मिलितं मेलनं तदनतिक्रम्य पदार्थानतिवृत्तावव्ययीभावः । संभुज्यन्ते सम्यगनुभूयन्ते । अभिनवैः नूतनैः घनैः मेघैः व्यूढं संहतं उरः मध्यप्रदेशो यस्य तथोक्तः समासान्तःकप् । माल्यवान् पर्वतविशेषः विषधरवधूनां सर्पस्त्रीणां गर्भाधानस्य गर्भग्रहणस्य प्रियंकरणीः प्रीतिहेतुभूताः प्रियं क्रियन्ते आभिरिति करणे ल्युन् ङीप् च । पलितंकरणीशब्दवत् । अपः प्रवर्षति । प्रकर्षेण सिञ्चति । वर्षाकाले सर्पजातेर्गर्भग्रहणं प्रसिद्धमेव (वृ) हारिणी ॥ २१ ॥

धारय अवलंबस्व । स्तंभयितुं वशे कर्तुं । इयमिति । इयं मम तनुः अविरलः अधिकः श्वासः प्रश्वासः यस्यां तथाभूता अतएव शुष्यन्मुखी क्लान्तवदना भिदुरः विकृतः स्वरः यस्याः सा । श्रान्त्या श्रमेण स्रस्तैः शिथिलैः अवयवैः विवर्णतामुपैति वैवर्ण्यं गच्छति । जडता जाड्यं स्फुरति जायते । दृशौ बाष्पायेते बाष्पमुद्वमतः । "बाष्पोष्मभ्यामुद्वमने" इति क्यङ् स्मृतिर्गलति अपस्मारो भवति रसतया करुणरसत्वेन प्रसिद्धः शोको भावः शोकाख्यः स्थायी भावः । मयी व्याप्तौ सप्तमी मां व्याप्येत्यर्थः । चिरेण विपच्यते विपाकं गच्छति । कर्मकर्तरिप्रयोगः । इहपूर्वार्धेन सात्त्विकभावः उत्तरार्धेन व्यभिचारिभावश्च दर्शितः॥२२॥

**रामः** (पार्श्वतोऽवलोक्य। सकरुणालम्) देवि वामशीले सीरध्वजनन्दिनि, इयं ते विश्वविस्रंभवेदिनी निचुलनिकुञ्जरेखा। इहहि।

वपुषि नखरलक्ष्म स्वेनकृत्वा भवत्या
कृतमिति चतुराणां दर्शयिष्ये सखीनाम्।
इति रहसि मया ते भीषितायाः स्मरामि
स्मरपरिमलमुद्राभंगसर्वंसहायाः ॥ २३ ॥

इति धनुरवष्टभ्य लक्ष्मणवृत्तान्तदत्तचेतास्तथैवास्ते।

(ततः प्रविशति लक्ष्मणोगुहश्च)

**गुहः**— जयतु देवः

विनेता दृप्तानामयमभयदुर्गं दिविषदां
कनिष्ठः काकुत्स्थो जयति जगदाश्चर्यचरितः।

---

सब्रह्मचारिणी लक्ष्मणसहायभूता कलहायमानः कलहं कुर्वन् "शब्दवैर" इत्यादिना क्यङ्। बहुच्छलानि कपटभूयिष्ठानि अभ्युपपद्यस्व रक्ष वामशीले मनोज्ञस्वभावे। विश्वेषां विस्रंभाणां विश्वासानां विमर्दस्य व्यतिकरस्य वेदिनी ज्ञात्री निचुलनिकुञ्जस्य वेतसकृतलतागृहस्य रेखा पङ्क्तिः वपुषीति। वपुषि शरीरे नखरलक्ष्म नखक्षतचिह्नं स्वेन कृत्वा स्वयं विधाय चतुराणां सखीनां तत्संनिधौ भवत्या कृतमिति हे सीते दर्शयिष्ये अभिवादिदृशोरात्मनेपदस्योपसंख्यानात् । इति रहसि मया भीषितायाः भयमुत्पादितायाः "भियोहेतुभयेषुक्" अतएव स्मरपरिमलमुद्रायाः मन्मथविमर्दावसरस्य भोगस्येति यावत् । भंगस्य विच्छेदस्य सर्वंसहायाः सर्वं सहनशीलायाः "पूःसर्वयोर्दारिसहोः" इति खच् । ते त्वां "अधीगर्थदयेशां कर्मणि" इति कर्मणि षष्ठी। स्मरामि, नतु प्रत्यक्षेण पश्यामीति भावः ॥ २३ ॥

विनेतेति। दृप्तानां गर्वितानां विनेता निग्राहकः दिविषदां देवानां अभयदुर्गं अभयस्थानं जगति जगतोवा आश्चर्यं अद्भुतं चरितं यस्य तथोक्तः अयं कनिष्ठः काकुत्स्थः लक्ष्मणः जयति सर्वोत्कर्षेण वर्तते, दनुः कबंधः यस्य लक्ष्मणस्य अस्त्रैः बाणैः रजनिचरजन्मनः राक्षसत्वस्य महसूज ग्रहणोत्पादकं। यद्वा रूपकं ...वेशोत्पादकमित्यर्थः। पाप्मानं शापं विजित्य अवधूय स्वान्

यदस्त्रैः पाप्मानं रजनिचरजन्मग्रहमृजं
विजित्य स्वान् लोकानविकलमुपातिष्ठत दनुः ॥ २४ ॥

**रामः**— साधुकृतं । शिवास्तस्य देवयानाः पन्थानः । वत्स गुह, वियति विवर्तमानः कश्चिदचल इव लक्षितः । किमसौ तेनैवयोजनबाहुना प्रहरणीकृतः

**गुहः**—दुन्दुभिं नाम दैत्येन्द्रं निष्पिपेष हरीश्वरः
तस्य कंकालकूटोऽयं कुमारेण विलोलितः ॥ २५ ॥

ततस्तन्निमित्तजन्मा पुनर्वालिनो महानभियोगः संभाव्यते ।

**लक्ष्मणः**— ततः किम् ।

**रामः**—वत्स, मामैवं । माननीयः खल्वसौ पुराणवीरो महेन्द्रसूनुः । ( गुहं प्रति ) कुतः पुनरागच्छतो वत्सस्य योजनबाहुरन्तरायः संवृत्तः ।

**गुहः**—देव, व्योमयानेन सत्वरमतिक्रामति रावणे सीतादेव्याः ।

**रामः**—( साशंकम् । ) किंस्यात् ।

**गुहः**— यदुत्तरीयं पतदुत्प्लुत्य हनुमानग्रहीत् तदेतदेव गुणानुरागिणा कुमार-सुग्रीवेण सभाजयितुमुपस्थितवतो मम हस्ते देवस्य प्राभृतीकृतम् ( इति रामायार्पयति )

**रामः**— ( गृहीत्वा हृदये निधाय, सास्रम् । ) हा देवि विदेहनन्दिनि, कथमु-त्तरीयशेषा दृश्यसे । ( इति निर्मीलिताक्षो लक्ष्मणमवलंबते )

**लक्ष्मणः**— ( निश्वस्य ) सखे निषादराज, अपि कुशलं सुग्रीवस्य ।

**गुहः**— अद्य त्वयि वार्त्तामनुयुञ्जाने ।

**रामः**—( स्वगतं )

---

प्रतिबंधेन वा उपातिष्ठत प्राप्तवान् वाल्मीकीयेतु रामलक्ष्मणाभ्यां कबंधवधइति विशेषः ॥ २४ ॥

देवयानाः पन्थानः अर्चिरादिमार्गाः । इदानीं माविवालिप्रवेशसूचनार्थ-माह वत्सेत्यादि । वियत्याकाशे विवर्त्तमानः परिभ्रमन् । योजनबाहुना कबंधेन प्रहरणीकृतः आयुधत्वेन गृहीतः दुन्दुभिमिति । हरीश्वरः वाली दुन्दुभिं नाम दैत्येन्द्रं असुरं निष्पिपेष निष्पिष्टवान् तस्य दुन्दुभेः अयं कंकालकूटः अस्थिसमूहः कुमारेण लक्ष्मणेन विलोलितः पादांगुष्ठेनोत्क्षिप्तः रामायणे त्वस्य रामकृतत्वमुक्तं२५

अभियोगः युद्धसन्नाहः प्रकृतान्तरमन्वाचिनोति इत्येत्यादिना । व्योमयानेन आकाशमार्गेण विमानेन वा । सभाजयितुं त्वामानन्दयितुं प्राभृतीकृतम् उपायनं

जानन्नेव दशाननोऽपहरते नः प्रेयसीमस्तु वा
　　चन्द्रापीडमुपासितुं स हि शिरोदाम स्वयं कृत्तवान् ।
दण्डोऽन्यो दशकन्धरस्य न पुनः कण्ठाटवीकर्तना-
　　द्धिग्बाणैर्मम चन्द्रहासहतकक्षुण्णोऽयमध्वा वृतः ॥ २६ ॥

**लक्ष्मणः**—आर्य, कथमस्मासु वनौकसोऽपि सौजन्यमनुरुन्धते ।

**रामः**—किमुच्यते; सुग्रीवस्सनाभिरस्माकम् । अस्याहि प्रभवो भगवानैक्ष्वाकस्य राजर्षिवंशस्य प्रसविता सहस्रदीधितिः । (हृदयस्थमुत्तरीयंच दृष्ट्वा) वत्स गुह, स्पृहयामि सुग्रीवहनुमतोर्दर्शनाय तदृश्यमूकगामिनं मार्गमादर्शय ।

**गुहः**—(सहर्षम् । आत्मगतम् ।) कथमचिरादेवफलवती जांबवतो मन्त्रशक्तिः । (प्रकाशम्) इतइतो मतङ्गाश्रमवर्त्मना देवः । (इति सर्वे परिक्रामन्ति)

**गुहः**—देव, पश्य

　　विदधति मुदमक्ष्णोर्नूतनानूपनीप-
　　　　प्रहसनसहचर्यानित्यनृत्यन्मयूराः ।
　　फलपुलकितजंबूकुञ्जकूजत्कपोत-
　　　　प्रियशबरपुरन्ध्रीबन्धवो विन्ध्यरेखाः ॥ २७ ॥

---

प्रेषितमित्यर्थः "प्राभृतं तु प्रदेशनम् ।" इत्यमरः जानन्निति । दशकन्धरः रावणः न इति तन्त्रेण द्वितीयाषष्ठीविभक्तिकः नः मां जानन्नेव दमितजामदग्न्यं विदन्नेव नः प्रेयसीम् सीतां अपहरते नयति । अस्तु वा तर्हि तस्य शिरांसि छिद्यन्तां तत्राह हि यतः सः रावणः चन्द्रापीडं शिवं उपासितुं शिरोदामस्वमूर्धपङ्क्तिं कृत्तवान् स्वयंचिच्छेद । तन्नास्यात्र त्रासः स्यादिति भावः तर्ह्युपायान्तरमन्विष्यतां तत्राह दशकन्धरस्य रावणस्य कण्ठाटव्याः गलारण्यस्य कर्त्तनात् छेदात् अन्यः पुनः दण्डः न विद्यत इति शेषः तर्हि क्रियतां तत्राह चन्द्रहासहतकेन क्षुद्रेण चन्द्रहासाख्येन रावणखड्गेन क्षुण्णः शिवाराधनाय पूर्वमनुष्ठितः अयमध्वा शिरःकर्तनमार्गः मम मार्गणैः बाणैः वृतः अनुष्ठेयत्वेन निश्चितः । तस्मात् धिक् कष्टं । सामान्यानुवर्त्तनस्य विशिष्टानां जुगुप्साकरत्वादिति भावः ॥ २६ ॥

सौजन्यं प्रीतिं, सनाभिः सपिण्डः "ज्योतिर्जनपद" इत्यादिना समानस्य सः । प्रभवः पिता । विदधतीति । नूतनेषु अनूपेषु जलप्रायप्रदेशेषु "जलप्रायमनूपंस्यात्" इत्यमरः । "ऊदनोर्देशे" इत्यकारस्य ऊत् । नीपानां वञ्जुलवृक्षाणां प्रहसनस्य पुष्पविकासस्य सहचर्यया परिचयेन नित्यं नृत्यन्तः मयूराः यासु ताः, फलैः पुलकितानां सञ्जातपुलकानामिवस्थितानां तारकादीतच् जंबूनां

**रामः**— (सर्वतो निरूप्य सखेदम् ।)

समन्तादुन्मीलद्बहललहरीलंघनकला-
बहुप्रेङ्खत्पंपाऽनिलविदलदेलासुरभयः ।
अविद्यावैदेहीशतलिपिकरीणां मम धिया-
ममी हस्तालंबं विपिनविनिवेशा विदधते ॥ २८ ॥

**लक्ष्मणः**— आर्य, इतस्तावत् ।

भयभ्रष्टप्रेयोविरहनिरहंकारहरिणी-
मुखालोकोन्मीलद्गुरुकरुणरुग्णां सहचरीम् ।
विलोक्य म्लेच्छन्तीमलमलमिति प्राक्प्रणिहिता-
च्छरव्याल्लुब्धानां हृदयमपराद्धं नतु शराः ॥ २९ ॥

**रामः**— (सास्रम्) हा देवि,

मारीचमृगयाव्यग्रे मयि मा सैच रावणे ।
आसामिव कुरंगीणां तवोत्पश्यामि चक्षुषी ॥ ३० ॥

---

कुञ्जेषु लतादिपिहितोदरेषु कूजत्सु अव्यक्तं शब्दायमानेषु कपोतेषु पारावतेषु प्रियाणां प्रीतिमतीनां शबरपुरन्ध्रीणां किरातयुवतीनां बन्धवः हिताः विन्ध्यस्य रेखाः प्रदेशाः अक्ष्णोर्मुदं विदधति प्रीतिं जनयन्ति ॥ २७ ॥

समन्तादिति । समन्तात् सर्वतः उन्मीलन्तीनां जृंभमाणानां बहलानां बह्वीनां लहरीणां तरंगाणां लंघनकलया आक्रमणसामर्थ्येन बहु प्रेङ्खता संचरता पंपानिलेन पंपावायुना विदलन्तीभिः विकसिताभिः एलाभिः चन्द्रबालाख्यलताभिः सुरभयः वासिताः अमी विपिनविनिवेशाः वनप्रदेशाः अविद्यया भ्रान्त्या वैदेहीशतस्य लिपिकरीणां लेखनकर्त्रीणां तत्र तत्र सीताकारेण सर्वमुत्प्रेक्षमाणानामित्यर्थः "दिवानिशा" इत्यादिना कृत्स्नाः मम धियां बुद्धिवृत्तीनां हस्तालंबं विदधते एतत्प्रदेशसंदर्शनेन सीताविरहजं दुःखं वर्धत इति भावः ॥ २८ ॥

भयेति । भयेन भ्रष्टानां विद्रुतानां प्रेयसां स्वप्रियाणां हरिणानां विरहेण वियोगेन निरहंकाराणां विगर्वाणां हरिणीनां मृगीणां मुखस्य आलोकेन दर्शनेन उन्मीलता आविर्भवता गुरुणा दुर्भरेण करुणेन करुणरसेन शोकेन रुग्णां भिन्नां व्याकुलामित्यर्थः रुजेरोदित्त्वान्निष्ठातो नः । अतएव अलमलमिति न प्रहर्तव्यमिति म्लेच्छन्तीं संभ्रमेणास्पष्टाक्षरं शब्दायमानां सहचरीं स्त्रियं विलोक्य व्याधानां किरातानां हृदयं प्राक् प्रणिहितात् कृतावधानात् शरव्यात् लक्ष्यात् अपराद्धं च्युतं, शरास्तु नापराद्धाः पूर्वमेव मुक्तत्वादिति भावः ॥ २९ ॥

मारीचेति । मयि मारीचस्य मृगयायां आखेटे मम इत्यर्थः व्यग्रे संभ्रा-

**लक्ष्मणः**— (स्वगतम् ।) कः पुनरुपायो येन विनोद्येत हृदयमार्यस्य ।

(नेपथ्ये)

भो भो वनौकसः कथयन्तु भवन्तः,केनास्मत्कीर्त्तिकामिनीचङ्क्रमणकेलिपर्वतो विवर्त्तितो दनुजकङ्कालकूटः ।

**गुहः**—(दृष्ट्वा । सभयसंभ्रमम् ।)देव, पश्य पश्य, कनकमयसहस्त्रपत्रवैकक्षिक-प्रभामण्डलेन दुन्दुभिकङ्कालव्यतिकरजन्मनारोषरागेण च स्वभावेन च त्रिगुणपिशंगितां तनुमादधानः प्लवगराजोऽयमितएवाभिवर्त्तते ।

पौलस्त्यावयवौघसंकटभुजामूलक्षणोन्मूलित-
द्वैराज्याममरावतीं कृतवते वीराययस्मै हरिः ।
नित्यालोकनकौतुकव्यसनिनीः शङ्के सहस्रंदृशः
पिण्डीकृत्य दलच्छलेन कनकांभोजस्रजं दत्तवान् ॥ ३१ ॥

क्षणं च देवस्य महावीरसंवादगोष्ठीयमृश्यमूकयात्रामन्तरयति । तदहमग्रतो गत्वा दिष्ट्या वर्धयामि सूर्यतनयम् ।

---

न्तेसति रावणे च प्राप्ते त्वां हर्तुमागतेच्च सति आसां कुरंगिणामिव तव चक्षुषी उत्पश्यामि भयेनसंभ्रान्तत्वं प्राप्ते स्यातामिति तर्कयामि ॥ ३० ॥

भो इत्यादि वालिवचनं । चङ्क्रमणं संचारः । विवर्त्तितः स्थानान्तरे क्षिप्तः । कनकमयानि स्वर्णविकारभूतानि सहस्त्रं पत्राणि यस्मिन् तस्य वैकक्षिकस्य तिर्यक्कृतहारस्य "वैकक्षिकं तु तत् । यत्तिर्यक्क्षिप्तमुरसि" इत्यमरः दुन्दुभेः कङ्कालस्य अस्थिकूटस्य व्यतिकरजन्मना विवर्त्तनोत्थेन रोषरागेण कोपजनित-रक्तिम्ना च त्रिगुणं पिशंगितां पिङ्गवर्णां कृतां अत्र वालिदर्शनेन शङ्कात्राससूचना-त्संभ्रमोनाम गर्भसन्ध्यंगमुक्तं भवति "शङ्कात्रासौ च संभ्रमः" इत्युक्तत्वात् । पौलस्त्येति । हरिः इन्द्रः अमरावतीं देवपुरीं पौलस्त्यस्य रावणस्य अवयवौघानां अंगसमूहानां संकटः संबाधः येन तेन "संकटं ना तु संबाधः" इत्यमरः "संप्रोदश्च कटच्" भुजामूलेन कक्षेण क्षणात् शीघ्रं उन्मूलितं उद्धृतं द्वैराज्यं प्रतिपक्ष-राजवत्त्वं यस्याः तथाभूतां कृतवते यस्मै वीराय वालिने । नित्यालोकने कौतुक-व्यसनिनीः उत्कण्ठिताः सहस्त्रं दृशः दशशतान्यक्षीणि दलच्छलेन पत्रव्याजेन पिण्डीकृत्य राशीकृत्य कनकांभोजस्त्रजं स्वर्णतामरसमालां दत्तवान् इति शङ्के तर्कयामि (उत्प्रेक्षाव्याजापह्नुत्यलङ्कारौ) ॥ ३१ ॥

अन्तरयति व्यवधानंकरोति । वर्धयामि उत्साहयामि वाचिकं संदेसवाक्

**रामः**—एवमस्तु ।

**गुहः**—वाचिकं पुनरेतावत् कुमारसुग्रीवस्य "यन्मित्रपर्यायान्तरितं देवस्य दास्यमिच्छामि" इति

**रामः**—(अपवार्य) वत्स लक्ष्मण, एवमाह वयस्यस्ते गुहः । किंच । मन्त्रोत्साहशक्तिसंपन्नानामपि प्रभुशक्तिमपेक्षन्ते सिद्धयः । तदहं वालिस्थाने सुग्रीवमवस्थाप्य तत्कोशदण्डाभ्यां समग्रशक्तिर्वैरपारं गन्तुमिच्छामि

**लक्ष्मणः**—यद्येवम्, उपयुज्यमानमिन्द्रसूनुमुपेक्ष्य सुग्रीवेणोपयोक्ष्यमाणेन सिद्धिरिति वक्रःखल्वयं पन्थाः ।

**रामः**—(सस्मितम्।) वत्स, साध्वेवं ब्रवीषि। किंतु ।

**दृप्यत्पौलस्त्यकण्डूभिदुरभुजभरोष्मायमाणःकपीन्द्रो**
**नायं नः संदधीत क्वचिदपिच विधौ नैष साहाय्यकामः ।**
**सोहं सुग्रीवमेतद्दमनदृढतरं मित्रमिच्छामि पश्चात्**
**पारस्त्रैणेयपुत्रव्ययशिथिलशुचं शक्रमाराधयामः ॥ ३२ ॥**

---

अवस्थाप्य अभिषिच्य। कोशः धनं दण्डः सैन्यं ताभ्यां । "दण्डोदमेमानभेदे लगुडे यमसैन्ययोः ।" इति कोशः । वैरपारं गन्तुं रावणं हन्तुं । यद्येवमिति प्रभुशक्तिसंपत्त्यर्थमाश्रयगुणोऽपेक्ष्यते चेत्तर्हीत्यर्थः । उपयुज्यमानं प्रकृते कोशदण्डोपयोगं कुर्वाणं, उपेक्ष्य अनादृत्य उपयोक्ष्यमाणेन वालिनि हते तदर्हत्वं गमिष्यतासुग्रीवेण द्वारभूतेन कार्यसिद्धिरित्ययं पन्थाः वक्रः खलु अनृजुरेव । दृप्यदिति । दृप्यतः माद्यतः पौलस्त्यस्य रावणस्य कण्डूभिदुरेण खर्जूभेदनशीलेन भुजयोः भरेण वीर्येण ऊष्मायमाणः ऊष्माणमुद्वमन् उज्ज्वलन्नित्यर्थः । "बाष्पोष्मभ्यामुद्वमने" इति क्यङ् अयं कपीन्द्रः वाली नः न संदधीत सन्धानं न कुर्यात् । तत्र हेतुमाह क्वचिदपि विधौ कस्मिंश्चदपि कर्मणि एषः वाली साहाय्यकामो न सहायकर्मापेक्षी न भवति सहायशब्दात् "सहायाच्च" इति पाक्षिकः ष्यञ्, तस्मात् सोऽहं सहायार्थी वालिनिग्रहदक्षश्चाहं एतस्य वालिनो दमनेन निग्रहेण दृढतरं वलवत्तरं मित्रं सुग्रीवं इच्छामि तथाकर्त्तुमभिलषामि ननु वालिवधे तत्पित्रा इन्द्रेण विरोधः स्यादित्याशङ्क्याह पश्चादित्यादि पश्चात् अस्मत्कार्यार्थमनुष्ठितेन रावणवधेन हेतुना पारस्त्रैणेयस्य परस्त्रीपुत्रस्य वालिनः कल्याण्यादित्वादिनङ् ढक् च अनुशतिकादित्वादुभयपदवृद्धिश्च । व्ययेन नाशेन शिथिला अदृढा शुक् शोकः यस्य तथाभूतं इन्द्रं आराधयामः प्रसादयामः । इन्द्रस्यौ-

**लक्ष्मणः**— साधुदर्शिनीबुद्धिरार्यस्य । किंच विधूतशापेनापि दनुना देवभूयां गतिमुपलंभितेन संदिष्टमार्यस्य, यथा "अस्यानिषादाधिपतेर्वचसि देवेन स्थातव्यम् ।" इति ।

**रामः**— तद्द्रुहोऽपिप्रतिदौत्यमर्हति ।

**लक्ष्मणः**— (गुहं प्रति ।) एवमस्मद्गिरा सुग्रीवोवक्तव्यः ।

**पिताऽयंरेतोधास्तवतरणिरस्मत्कुलगुरु-**
**र्मनुर्वैमात्रेयस्तदपि सहजं मित्रमसि नः ।**
**अथापि ज्ञातेयं शिथिलयासि कापेयतरलः**
**शरास्तन्मे वालिक्षतजरसलोलाः प्रतिभुवः ॥ ३३ ॥**

**रामः**—(विहस्य ।) वत्स गुह, एष खलु पौलस्त्यगतेनामर्षेणधूमायमानो यया कयाचिद्वाचा सौमित्रिरभिदधातु नाम ।

**लक्ष्मणः**— सततसमिध्यमानजानकीविरहवैश्वानरेण रामचेतसा पुनरग्निसाक्षिकमेव सुग्रीवो मित्रतामुपगतः ।

**गुहः**—(सहर्षम् ।) परमनुगृहीतो देवेन विकर्त्तनतनयः (सपरिहासस्मितम् ।)

---

रसत्वेऽपि वालिनः क्षेत्रजत्वाभावान्न तथा तद्वधे दुःखित्वं स्यात् । यत्किञ्चिद्दुःखमपि रावणवधरूपानुकूलाचरणेन परिहर्त्तुं शक्यमेवेति भावः ॥ ३२ ॥

देवभूयां गतिं देवत्वं "भुवो भावे" इति क्यप् । दौत्यं दूतकर्म । पितेति । अस्मत्कुलगुरुः अयं तरणिः सूर्यः तव रेतोधाः पिता रेतःसमर्पकोजनकः रेतोधा इत्यत्र "सर्वधातुभ्योऽसुन्" इति धाञोऽसुन् । ततश्च मनुः अस्मत्कुलकूटस्थः तव वैमात्रेयः विमातुः (सपत्नीमातुः) अपत्यं विमातृशब्दस्य शुभ्रादित्वाड्ढक् । भिन्नोदरौभ्रातरौयुवामिति यावत् । तत् तस्माद्धेतोः नः त्वं सहजं मित्रमप्यासि एकपितृकत्वरूपसंबन्धवानसि अपिशब्दात्त्वयाऽस्मान्प्रत्युत्तरीयार्पणेनास्माभिः करिष्यमाणकृत्रिममित्रत्वमपि भवतीतिभावः । तस्मादवश्यमुपकृतवतामस्माकं प्रत्युपकर्त्तव्यं त्वया । अथ एवं स्थितेऽपि कापेयेन कपित्वेन तरलः चञ्चलः सन् ज्ञातेयं बन्धुत्वं "कपिज्ञात्योर्ढक्" इत्युभयत्र भावार्थे ढक् । अपिशिथिलयासि अदृढीकरोषिचेत् अपिःशङ्कायां । सीतान्वेषणे प्रमत्तःस्यायदीति भावः, तत् तर्हि वालिनः क्षतजरसेन रक्तस्वादेन लोलाः पुनरपि तादृशरक्तपानाय सतृष्णाः "लोलश्चलसतृष्णयोः" इत्यमरः मे शराः प्रतिभुवः लग्नकाः त्वामपि वालिनमिव हन्युरिति भावः ॥ ३३ ॥

यदि पक्षपातबहुलं देव त्वदीयं मनः
किं नस्तेन विदांकरोतु भगवानंभोजिनीवल्लभः ।
नव्येनात्मजराज्यलाभरभसोद्भूतेन यस्तेजसा
पूर्वस्मादधिकेन दुःसहतरो लोकेषु वर्त्तिष्यते ॥ ३४ ॥

**लक्ष्मणः**—( विहस्य । ) कथं तपनतनयस्य राज्यमंगीकारिता वयं वयस्येन ।

**रामः**—( सस्मितम् । ) वत्स गुह, नतावत्प्रकाशमेवं प्रतिशुश्रूषति मे हृदयम् ।

**गुहः**—( सप्रश्रयस्मितम् । ) स्वामिन् , इयमेव महतां शैली ।

सन्तो मनसिकृत्यैव प्रवृत्ताः कृत्यवस्तुनि ।
कस्य प्रतिशृणोति स्म कमलेभ्यः श्रियं रविः ॥ ३५ ॥

( नेपथ्ये )

भोः सन्निहिता वनौकसः, कथयन्तु भवन्तः । दुन्दुभिकंकालविक्षेपसंभाव्यमानगंभीरावष्टंभानिर्भरेणकेनास्माकामियं चिरस्य भुजकाण्डकण्डूतिरपनेष्यते ।

---

अमर्षेण रोषेण धूमायमानः धूमवानिवाचरन् उज्ज्वलन्नित्यर्थः । सुग्रीव इति । हे देव, त्वदीयं मनः सुग्रीवपक्षपातेन स्नेहेन बहुलं व्याप्तं यदि तेन भवत्पक्षपातेन नः किं अत्यल्पत्वादस्मदभ्यर्थनस्येति भावः । तर्हिकस्याधिको लाभइत्यत आह भगवान् ऐश्वर्यादिसंपन्नः अंभोजिनीवल्लभः सूर्यः विदांकरोतु जानातु "विदांकुर्वन्त्वित्यन्यतरस्यां" इत्यामादयः । यः सूर्यः नव्येन नूतनेन आत्मजस्य (सुग्रीवस्य) राज्यलाभस्य राजकर्मप्राप्तेः रभसात् हर्षाद्धेतोः "रभसोहर्षवेगयोः" इति विश्वः उद्भूतेन आविर्भूतेन अतएव पूर्वस्मादधिकेन तेजसा लोकेषु दुःसहतरः अत्यन्तदुःसहः वर्त्तिष्यते भविष्यति पुत्राभ्युदयेन पितुरभ्यधिकहर्षस्य दृष्टत्वादित्यर्थः ॥ ३४ ॥

अंगीकारिताः अंगीकारंप्रापिताः । प्रतिशुश्रूषति प्रतिज्ञातुमिच्छति । "ज्ञाश्रु" इत्यादिना प्राप्तस्यात्मनेपदस्य "प्रत्याङ्भ्यां श्रुवः" इतिनिषेधात्परस्मैपदम् । शीलमेव शैली । सन्तइति । सन्तः साधवः मनसिकृत्यैव परोपकारं निश्चित्यैव एवकारेण नतुवाचैवंकरोमीत्युक्त्वा "अनत्याधान उरसिमनसी" इति गतिसंज्ञा कृत्यवस्तुनि कर्तव्यार्थे प्रवृत्ताः उपकारंकृतवन्तः । तत्र दृष्टान्तमाह । रविः सूर्यः कस्य सन्निधाविति शेषः । कमलेभ्यः पद्मेभ्यः "प्रत्याङ्भ्यांश्रुवःपूर्वस्य कर्त्ता" इति चतुर्थी । श्रियं प्रतिशृणोतिस्म प्रतिज्ञातवान् ॥ ३५ ॥

भोइत्यादि पुनर्वालिवचनं दुन्दुभिकङ्कालविक्षेपेण संभाव्यमानः ऊहनीयः यो गंभीरावष्टंभः अधिकगर्वः तेन निर्भरः पूर्णः तेन । भुजकाण्डयोः बाहुदण्डयोः

**रामः**— (स्वगतम्)

**मन्ये दर्पामयाविभ्यां नित्यं दोर्भ्याममर्षणः ।**
**जांबवत्प्रेरणोद्दीप्तः प्राप्तोऽयं प्लवगेश्वरः ॥ ३६ ॥**

तदहमपि वीरयात्रादर्शनसुखं मुहूर्त्तमनुभवामि ।

( प्रविश्य )

**वाली**— (पुरोऽवलोक्य) अये प्रसन्नोज्ज्वलाकृती कावेतौ । नियतमाभ्यामेव कंकालोत्क्षेपनिमित्तेन भवितव्यं । (स्मृतिमभिनीय । सवितर्कम्) संदिष्टमस्मासु प्रियसुहृदा लंकेश्वरेण ।

**प्रक्लृप्तकान्तारकुमारभुक्तिर्दौर्भागिनेयो जनकेन मुक्तः ।**
**मनुष्यसामन्तसुतो निषंगी सहानुजस्तिष्ठति दण्डकायाम् ॥ ३७ ॥**

तौ चास्माकं तत्र विहारिषु निशाचरेषु पाटच्चरवृत्तिमातिष्ठमानौ भवद्भिः प्रतिकर्त्तव्यौ" इति ततः किमयमयंच तौ स्याताम् ।

---

"काण्डोऽस्त्रीदण्डबाणार्ववर्गावसरवारिषु" इत्यमरः । कण्डूतिः खर्जूः । मन्यइति दर्पेण गर्वेण आमयाविभ्यां व्याधिताभ्यां पीडिताभ्यामित्यर्थः । "आमयावी विकृतोव्याधितोऽपटुः" इत्यमरः । "अस्माया" इत्यादिसूत्रे "आमयस्योपसंख्यानं-दीर्घश्च" इति विनिर्दोर्भ्यां भुजाभ्यां नित्यममर्षणः कोपनः अयं प्लवगेश्वरः वाली जांबवतः प्रेरणेन कंकालोद्वर्त्तनसूचनेन दीप्तः अतीवकुपितःसन् प्राप्तइतिमन्ये ॥ ३६

वीरयात्रायाः युद्धस्य आभ्यामिति निर्धारणे पञ्चमी । "पञ्चमी विभक्ते" इति ततश्च अनयोरन्यतरोनिमित्तमितिभावः । प्रक्लृप्तेति । प्रक्लृप्ता दत्ता कान्तारकुमारभुक्तिः वनरूपकुमारभोगार्हग्रामादिः यस्मै तथोक्तः, राजानो हि स्वकुमाराणां भोगार्थं कञ्चिद्भागं कल्पयन्ति सा कुमारभुक्तिरुच्यते तथाचास्मै वनं कुमारभुक्तित्वेन दत्तमिति भावः, अतएव दौर्भागिनेयः दुर्भगायाः (भाग्यहीनायाः) अपत्यं । अन्यथा राज्यार्हस्य कथं वनप्राप्तिरिति भावः दुर्भगाशब्दस्य कल्याण्यादित्वादिनङ् ढक्च "हृद्भग" इत्यादिना उभयपदवृद्धिश्च । ततश्च जनकेन पित्रा दशरथेन मुक्तः निष्कासितः । मनुष्यस्य सामन्तस्य स्वल्पभूपस्य सुतः । अत्र वक्तृश्रोत्रोर्विजातीयत्वेन मनुष्यपदग्रहणं । निषंगी इषुधिमान् सहानुजःसन् अनेन प्रभुशक्तिरहितत्वं सूचितं दण्डकायां वने तिष्ठति वसति ॥ ३७ ॥

पाटच्चराणां चोराणां वृत्तिंव्यापारं "चोरैकागारिकस्तेनपाटच्चरमलिम्लुचाः ।" इत्यमरः । आतिष्ठमानौ अंगीकुर्वाणौ यथा चोरा अप्रकाशं पीडयेयुरेवमिमावपि पीडयत इति भावः । प्रतिकर्तव्यौ निग्राह्यौ । प्रक्लृप्तेत्यारभ्यै-

**रामः**—वत्स लक्ष्मण शृणु किमयं ब्रवीति महावीरः ।

**लक्ष्मणः**—(किंचिदुपसृत्य) इत आवां इतो भवान् ।

**वाली**—भोः । कावेतौ युवाम् ।

**लक्ष्मणः**—महाभाग, राघवौ क्षत्रियावावां ।

**वाली**—आः युष्मदाकारविशेष एव गमयति जातिविशेषं । तद्विशेषं ब्रूहि ।

**लक्ष्मणः**—ननूक्तमेव राघवावावामिति ।

**वाली**—(साभ्यसूयम् ।) आः ।

**वपुरपि विवृणोति क्षत्रतां को विशेषो**
**रघुषु यदभिधत्से राघवावित्यभीक्ष्णम् ।**
**परिकलयितुमिष्टं नाम सांस्कारिकं वा-**
**महह कथमपत्यप्रत्ययान्निश्चिनोमि ॥ ३८ ॥**

**लक्ष्मणः**—(सधैर्यसंरंभम् ।) भोः, आवां तौ रामलक्ष्मणौ ।

**वाली**—(सविमर्शम् । आत्मगतम् ।) कथं ताविति सर्वनामपदेन प्रसिद्धावित्याह । तदनयोः कतरः पिनाकस्य धनुषो दमयिता । सोऽपि रामभद्रः स्यात् । भवत्वेवं तावत् । (प्रकाशम् । विहस्य ।)

**एको वेषपरिग्रहः परिकरः साधारणः कर्मणा-**
**माकृत्योर्मधुरत्वमेवसदृशं तुल्यैव गंभीरता ।**

---

तदन्तं रावणवचनं । साभ्यसूयं आकांक्षितार्थापूरणमात्मनोदोषमविज्ञाय स्वस्मिन्नग्रहणदोषकल्पनाजनितासूयया सह, वपुरिति । वपुरपि शरीरमेव अपिरत्रावधारणे क्षत्रतां क्षत्रियत्वं विवृणोति प्रकाशयति धनुरादिधारणाद्राजन्यलिंगाच्च, नचैतावता जिज्ञासितं निराकांक्षितं, सामान्यज्ञानेन विशेषाकांक्षाया अनुपरमात् ननूक्तं राघवाविति तत्राह रघुषु रघुवंश्येषु राजसु कोविशेषः किमसाधारणं लक्षणमस्ति सास्नेव गवां, येन रघुशब्दोच्चारणेन भवन्तौ विशिष्य प्रतीयां, यत् यतोहेतोः विशेषं पृच्छन्तं मां राघवाविति अभीक्ष्णं पुनःपुनः अभिधत्से ब्रवीषि, तत्तवैवापाण्डित्यंनास्माकमिति भावः, तर्हि किं वक्तव्यं तत्राह वां युवयोः सांस्कारिकं स्मृत्युक्तसंस्कारभवं नाम परिकलयितुं वक्तुं इष्टं उचितं, अन्यथा अपत्यप्रत्ययात् "तस्यापत्यं" इत्याद्यणादिप्रत्ययनेन, यद्वा, अपत्यस्य अपत्यार्थकाणादेः प्रत्ययो विधिः यस्मादित्यतद्गुणसंविज्ञानोबहुव्रीहिः, तस्माद्रघ्वादिशब्दादितियावत्, कथं निश्चिनोमि, व्यावर्त्तकधर्माभावे दुरवगमत्वादितिभावः अहहेतिखेदे ॥ ३८ ॥

दमयिता भञ्जकः, एकइति । वामितिशेषे निर्धारणे च, वां युवयोः वेष-

तं द्रष्टुं चिरमुत्सुकोऽस्मि कतरो वां रामभद्रः पुनः
सर्वक्षत्रवधव्रती भृगुपतिर्येनावकीर्णी कृतः ॥ ३९ ॥

**लक्ष्मणः**—(सविनयमिव।) आर्य संक्रन्दननन्दन, लक्ष्मणस्तावदहम् ।

**वाली**—वत्स, अयमप्यपरो दाशरथिः कौशिकान्तेवासीरामः।

**लक्ष्मणः**—अथ किं ।

**वाली**—(सहर्षोल्लासम्।) किंचिदुच्चैः। भो भो रामभद्र,

एषस्त्रैवर्ण्यमात्रव्यवसितजगतो भार्गवस्यास्त्रगर्भा-
दाकृष्टक्षत्रजातिस्त्वमसि पथिगिरामद्य नःसुप्रभातम् ।
कक्षोष्मस्वेदसद्यःशमितदशमुखास्फोटकण्डूविकारो-
वीर श्राद्धो भुजस्त्वां परिचरतु चिरं चक्षुषी नन्दतां च॥ ४० ॥

---

परिग्रहः जटादिनेपथ्यस्वीकरणं एकः सदृशः कर्मणां दर्शनभाषणादीनां परिकरः आरंभः साधारणः समानः "यत्नारंभौपरिकरौ" इति त्रिकाण्डशेषः, आकृत्योः मधुरत्वं सौष्ठवं सदृशमेव एवकारोऽत्र उत्तरसंबंधी, गंभीरता मनसऔन्नत्यं-तुल्यः सर्वक्षत्रवधएव व्रतं (ब्रह्मचर्याचरणं) अस्यास्तीति सर्वक्षत्रवधव्रती प्रशंसायां मतुप्, भृगुपतिः येन अवकीर्णी क्षतव्रतः कृतः "अवकीर्णीक्षतव्रतः" इत्यमरः अवकीर्णिपदप्रयोगादेव वधव्रतीत्यत्र व्रतशब्दस्य ब्रह्मचर्यमिति व्याख्यातं लुप्तब्रह्मचर्यस्यैवावकीर्णित्वस्मरणात्, सः रामभद्रः पुनः वां कतरः कः तं रामभद्रं द्रष्टुं चिरं उत्सुकोऽस्मि ॥ ३९ ॥

एष इति। हे वीर, एषत्वं त्रयोवर्णास्त्रैवर्ण्यं चतुर्वर्णादित्वात्ष्यञ्। त्रैवर्ण्यमेव त्रैवर्ण्यमात्रं मयूरव्यंसकादित्वात्समासः। तेन (ब्रह्मविट्शूद्राख्यवर्ण-त्रयेण) व्यवसितं निश्चितं जगत् येन तस्य भार्गवस्य अस्त्रगर्भात् आयुधमध्यात् आकृष्टा वहिरुद्धृता क्षत्रजातिः येन तथाभूतोऽसि। अत एव गिरां पथ्यसि स्तुत्योऽसि, यद्वा। श्रुतपूर्वोऽसि। अद्य नः सुप्रभातं सुदिनमासीत्। शोभनं प्रातरस्येति विग्रहे "सुप्रातसुश्व" इत्यादिना अच्प्रत्ययान्तो निपात्यते। कक्षोष्मणः बाहुमूलोष्णस्य स्वेदेन घर्माम्भसा सद्यः तत्क्षणमेव शमितः परिहृतः दशमुखस्य रावणस्य आस्फोटार्थं युद्धार्थं "कलहास्फोटसंयुगाः" इति केशवः, कण्डूविकारः खर्जूविकृतिः येन तथोक्तः, श्राद्धः श्रद्धावान् "प्रज्ञाश्रद्धार्चाभ्योणः" इति मत्वर्थीयोणः, भुजः महाबाहुः त्वां परिचरतु त्वच्छुश्रूषां करोतु, "यक्षानुरूपोहि बलिः" इति न्यायेन प्रतियुद्धंददात्विति भावः, चक्षुषी च नन्दतां त्वद्रूपदर्शनेन त्वद्धस्तलाघवदर्शनेनच प्रीयेतां ॥ ४० ॥

**रामः**—(दृष्ट्वा । सहर्षं) सएष महाबाहुः संक्रन्दनसूनुः ।

येन वीरेण गुप्तायां किष्किन्धायामियं मही ।
रावणाभिभवक्लान्ता शश्वदुच्छ्वासमश्नुते ॥ ४१ ॥

(इति परिक्रामति)

**लक्ष्मणः**—महाभाग, अयमार्यः । इतो भवान् ।

**वाली**—(उपसृत्य) रामभद्र,

सुरासुराणामसुभिर्दीव्यतां सभिको मुनिः ।
अद्य मे नारदस्तुष्टो येनासि भुजगोचरः ॥ ४२ ॥

**रामः**—महावीर, किमुच्यते; मूर्धाभिषिक्तोऽसि समरशौण्डानाम् ।

देवः सत्वामसूत द्विषदुपमृदितस्वर्वधूवेणिबन्ध-
प्रेक्षाधारालवैरप्रसृमरसमरोड्डामरौजा बिडौजाः ।
यो विद्धोत्खातबाणव्रणनिवहनिभं निर्भराभंगुरभ्रू-
भीमं भ्राम्यद्भिरंगैरुदवहत रुषा रज्यदक्ष्णां सहस्रम् ॥ ४३ ॥

---

येनेति । रावणस्य अभिभवेन अवज्ञया क्लान्ता ग्लानिं गता इयं मही येन वीरेण वालिना गुप्तायां रक्षितायां किष्किन्धायां शश्वत् नित्यं उच्छ्वासं श्रमपरिहारं अश्नुतेप्राप्नोति, किष्किन्धायामेववालिभयाद्रावणबाधानास्तीतिभावः ४१

सुरासुराणामिति । येन हेतुना त्वं अद्य मे भुजगोचरः बाहुविषयतां गतोऽसि तत् असुभिः प्राणरूपग्लहैः "पुंसि भूम्न्यसवः प्राणाः" इत्यमरः "दिवः कर्म च" चात्तृतीया । दीव्यतामक्षक्रीडामाचरतां देवासुराणां सभिकः तादृशयुद्धरूपद्यूतप्रवर्तकः "सभिकोद्यूतकारकः" इत्यमरः, अद्य तुष्टः तस्य युद्धप्रियत्वात् ॥ ४२ ॥

समरशौण्डानां युद्धवीराणां मूर्धाभिषिक्तः राजा श्रेष्ठ इत्यर्थः, देव इति । यः विद्धेन ताडितेन ततः उत्खातबाणेन उद्धृतशल्येन व्रणनिवहेन ईर्मसमूहेन निभं तुल्यं निर्भरं अत्यर्थं अभंगुराभिः ऋज्वीभिः भ्रूभिः भीमं भयंकरं रुषा कोपेन रज्यत् रागं प्राप्तवत् अक्ष्णां सहस्रं भ्राम्यद्भिः चञ्चलैः अंगैः उदवहत भृतवान्, सः द्विषद्भिः शत्रुभिः उपमृदितस्य स्पृष्टस्य स्वर्वधूनां वेणिबन्धस्य केशपाशस्य प्रेक्षया दर्शनेन धारालेन तीक्ष्णतरेण धाराशब्दात्सिध्मादिलच्, वैरेण विरोधेन प्रसृमरे प्रवृत्ते "सृघस्यदः क्मरच्" समरे युद्धे उड्डामरं अतिप्रौढं ओजः बलं यस्य तथोक्तः देवो बिडौजाः इन्द्रः त्वां असूत प्रसूतवान्, तस्मात्किमु वक्तव्यं तव वीर्यमिति भावः ॥ ४३ ॥

अपि च ।

बन्दीकृत्य जगद्विजित्वरभुजस्तंभौघदुःसंचरं ।
रक्षोराजमपित्वया विदधता सन्ध्यासमाधिव्रतम् ।
प्रत्यक्षीकृतकार्तवीर्यचरितामुन्मुच्यरेवां समं
सर्वाभिर्महिषीभिरंबुनिधयो विश्वेऽपि विस्मापिताः ॥ ४४ ॥

**वाली—** (विहस्य)

चिराय रात्रिंचरवीरचक्रमारांकवैज्ञानिक पश्यतस्त्वाम् ।
सुधासधर्माणमिमांचवाचं न शृण्वतस्तृप्यति मानसं मे ॥ ४५ ॥

येनाच्छिद्य समस्तपार्थिवगणप्राणान्तकं कार्मुकं
रामः संप्रति लंभितो भृगुभुवामुत्सर्गसिद्धां स्रुचम् ।
द्रष्टुं वीर चिरस्य धाम भवतस्तद्भूर्भुवःस्वस्त्रयी-
हृन्मर्मव्रणरोपणौषधमिमौ बाहू बहूत्ताम्यतः ॥ ४६ ॥

---

**बन्दीकृत्येति** । जगतः विजित्वरैः विजयशीलैः भुजस्तंभौघैः स्तंभसदृशबाहुसमूहैः दुःसंचरं दुराधर्षं रक्षोराजमपि रावणमपि बन्दीकृत्य वाले निबध्य सन्ध्यासमाधिव्रतं सन्ध्यावन्दनं विदधता कुर्वता त्वया कर्त्रा, विश्वेप्यंबुनिधयः सर्वे समुद्राश्च प्रत्यक्षीकृतं साक्षाद्दृष्टं कार्तवीर्यचरितं यया तां रेवां नर्मदां उन्मुच्य विहाय कार्त्तवीर्यकर्तृकरावणपराजयस्य रेवायां वृत्तत्वेन तत्र तस्या विस्मयाभावात् सर्वाभिर्महिषीभिः सह पत्नीभूताभिः नदीभिः सह विस्मापिताः विस्मयं प्रापिताः ॥ ४४ ॥

**चिरायेति** । रात्रिंचरवीराणां राक्षसभटानां चक्रस्य समूहस्य मारांके मारणलक्षणे युद्धे वैज्ञानिक कुशल हे राम "वैज्ञानिकः कृतमुखः कृती कुशलइत्यपि" इत्यमरः । त्वां पश्यतः तथा सुधासधर्माणं अमृततुल्यां "धर्मादनिच्केवलात्" समानो धर्मोऽस्येति विग्रहे "समानस्यच्छन्दसि" इत्यादिसूत्रे 'समानस्य' इति योगविभागात्समानस्य सादेशः, सहस्य सादेश इति केचित् । इमां वाचं शृण्वतश्च मे मानसं चिराय न तृप्यति तृप्तिं न याति ॥ ४५ ॥

**येनेति** । हे वीर, येन तव धाम्ना रामः जामदग्न्यः समस्तपार्थिवगणस्य सर्वराजसमूहस्य प्राणान्तकं मृत्युप्रदं कार्मुकं धनुः आच्छिद्य गृहीत्वा भृगुभुवां भार्गवाणां उत्सर्गसिद्धां जातिसामान्यतःप्राप्तां स्रुचं होमपात्रं संप्रति लंभितः प्रापितः,

**रामः**— (सस्मितम् ।)

> **नन्वेतदधिमौर्वीकं युद्धसर्वस्वदक्षिणम्**
> **सज्यमस्त्येव मे रक्षोलक्ष्मीमूलहरं धनुः ॥ ४७ ॥**

तन्महाभागोऽपिशस्त्रमादत्ताम् ।

**वाली**—(विहस्य) साधु भोमहाक्षत्रिय, साधु । यथाधर्ममभिदधासि । किं पुनः ।

> **नयो हि सांग्रामिक एष दोष्मतां**
> **यदात्मजातिप्रतिरूपमायुधम् ।**
> **अयःकुशीभिः कपयो न शस्त्रिण-**
> **स्तलानि मुष्टिश्च नखाश्च सन्ति नः ॥ ४८ ॥**

**लक्ष्मणः**— आर्ये, साधूक्तं महाभागेन, नित्योपनतस्वांगशस्त्रैव तिरश्चां जातिः ।

**रामः**—(विहस्य धनुरास्फालयन्) अहह ।

> **सर्वौघप्रसरेण रावणिरसौ यद्वंशोभागिनं**
> **चक्रे गौतमशापयन्त्रितभुजस्थेमानमाखण्डलम् ।**

---

तत् भूर्भुवस्वःस्त्रय्याः भूम्यन्तरिक्षस्वर्गाख्यलोकत्रयस्य द्वन्मर्मणः हृदयसन्धेः व्रणरोपणौषधं व्रणसमाधानभेषजं भवतः धाम द्रष्टुं इमौ बाहू चिरस्य परशुरामवृत्तश्रवणादारभ्य बहु उत्साम्यतः कांक्षतः, अतो द्वन्द्वयुद्धेनैव मे प्रियं कुर्विति भावः ४६

नन्विति । अधिज्यमौर्वीके आरोपितज्यं युद्धमेव सर्वस्वदक्षिणः क्रतुविशेषः यस्य तत् रक्षसां लक्ष्म्याः मूलहरं सर्वंकषं इदं मे धनुः सज्यमेवास्ति सन्नद्धमेव वर्तते । ननुरामन्त्रणे ॥ ४७ ॥

आदत्तां गृह्णातु । "आङो दोऽनास्यविहरणे" इत्यात्मनेपदम् । यथाधर्मं धर्ममनतिक्रम्य । पदार्थानतिवृत्तावव्ययीभावः । नयइति । आत्मजातेः प्रतिरूपं योग्यं आयुधं प्रहरणं इति यत् एष हि अयमेव हिरवधारणे । दोष्मतां बाहुबलिनां सांग्रामिकः संग्रामे (युद्धे) साधुः गुडादित्वाट्ठञ् नयः न्यायः, कपयो वयं अयःकुशीभिः अयोविकारैरायुधविशेषैः "जानपद" इत्यादिना कुशशब्दान्ङीष् । शस्त्रिणो न प्रहरणवन्तो न भवामः । तलानि चपेटाः मुष्टिश्च नखाश्च नः सन्ति आयुधत्वेन वर्तन्ते । तस्मादहमपि सज्ज एवेति भावः ॥ ४८ ॥

नित्योपनतानि नित्यसिद्धानि, आस्फालयन् ज्याघोषं कुर्वन्, सर्वौघेति ।

कक्षागर्त्तकुलीरतां गमयता वीर त्वया रावणं
तत्सम्मृष्टमहो विशल्यकरणी जागर्त्ति सत्पुत्रता ॥ ४९ ॥

सोऽपि त्वमस्माकमधुना दैवेन शरव्यं कृतोऽसि

**वाली**—(सरोषं।) आः काकुत्स्थ,

अस्मद्दोर्मूलकूलंकषाविषमभुजग्रन्थिभंगप्रसंग-
क्रोशल्लंकेशदत्तत्रिभुवनविजयख्यातिसर्वस्वदायः।
यः कश्चिद्विक्रमोऽयं सखलु खलचुरीक्षत्रसाधारणत्वा-
दन्तर्मन्दायमानो विजितभृगुपतिं त्वामजित्वा दुनोति ॥ ५० ॥

तदेहि विमर्दक्षमां भूमिमवतरावः

(इति निष्क्रान्तौ)

---

हे वीर, असौ रावणिः इन्द्रजित् "अतइञ्" सर्वौघप्रसरेण सर्वसन्नाहवता प्रयत्नेन "सर्वाभिसारः सर्वौघःसर्वसन्नहनार्थकः" इत्यमरः। गौतमशापेन (अहल्यानिमित्तेन) यन्त्रितः स्तब्धः भुजयोः स्थेमा स्थैर्यं यस्य तं स्थिरशब्दादिमनिचि रूपं स्थेमेति। आखण्डलं इन्द्रं दुर्यशोभागिनं युद्धे पराजितत्वरूपाकीर्तिभाजं चक्रे, इति यत्तदिदंदुर्यशः, कर्म। रावणं कक्षागर्त्तस्य बाहुमूलावटस्य कुलीरतां कर्कटकत्वं गमयता प्रापयता त्वया कर्त्रा। सम्मृष्टं सम्यक् परिहृतं स्वपितृनिग्राहकस्य मेघनादस्य पितुः रावणस्य इन्द्रपुत्रेण त्वया निगृहीतत्वात्। सत्पुत्रता विशल्यकरणी जागर्त्ति क्षतादिविरोपणसमर्थौषधिवन्निरुपद्रवत्वसाधनभूता जयति विशल्यं क्रियतेऽनयेति करणेल्युट् टित्वान्ङीप् च। अहो आश्चर्यम् ॥ ४९ ॥

अस्मदिति। अस्माकं दोर्मूलस्य कक्षस्य कूलंकषाणां मूलहराणां "सर्वकूलाभ्रकरीषेषुकषः" इति खच्, मुम् च विषमभुजग्रन्थीनां विकटबाहुपर्वणां भंगप्रसंगेन आमर्दनारंभेण हेतुना क्रोशता आक्रन्दता लंकेशेन दत्तः त्रिभुवनविजयख्यातिरेव सर्वस्वदायः सर्वस्वदानं यस्मै सः तादृशो यः कश्चिदयं विक्रमः सः खलचुरीक्षत्रस्य कार्त्तवीर्यस्य साधारणत्वात् तेनापि रावणनिग्रहस्य कृतत्वात्साधारणत्वं, कार्तवीर्यकुलस्य संकेतनाम "खलचुरी" इति अन्तर्मन्दायमानः मन्दीभवन् सन् भृशादित्वान्मन्दशब्दात्क्यङ्, विजितभृगुपतिं दमितपरशुरामं त्वामजित्वादुनोति दूयते, नहि विशिष्टानामितरसाधारणाचरणेन तृप्तिः स्यात्तस्माद्रावणनिग्रहप्रसंगे तन्निग्राहकस्य कार्त्तवीर्यस्यापि निग्रहीतुः जामदग्न्यस्य दमनं त्वां निगृह्यैव प्रीतः स्यामिति भावः ॥ ५० ॥

विमर्दक्षमां युद्धयोग्यां, पार्ष्णिग्राहमिव पृष्ठभागगतशत्रुवत् "पार्ष्णिग्रा-

**गुहः**—दिष्ट्या फलितमस्माकं मनोरथेन

**लक्ष्मणः**—(नेपथ्याभिमुखमवलोक्य) इदमन्यतो वानरद्वयमार्यस्य पार्ष्णि-ग्राहमिव संभ्रमादनुवर्त्तते, तदहमपि धनुरारोपयामि ।

**गुहः**—(दृष्ट्वा सहर्षम्) कुमार लक्ष्मण, अलमलमावेगेन; नन्वयं सुग्रीवो राम-देवगुणानुरागेण वालिमत्सरेण च द्विगुणीकृतोत्साहः समरसीमानमापतति ।

**लक्ष्मणः**—एष वैकर्त्तनिः । अथापरः कः ?

**गुहः**—अयमपि किष्किन्धेश्वरस्कन्धावारैकवीरो भगवतः प्रभञ्जनस्य पारस्त्रै-णेयः पुत्रो हनुमान् ।

**लक्ष्मणः**—(सहर्षम्) कथमसावाञ्जनेयः । अयं हि ।

ब्रह्मशापपरामृष्टस्ववीर्यज्ञानयन्त्रितः ।
अन्यैरपि भुवं वीरः कीर्यमाणामुपेक्षते ॥ ५१ ॥

नियतमनेनास्माकं हृदयशल्यमुद्धरिष्यते । इदंतु वर्तमानमेकतुलाद्यूतमार्यस्य । ज-यलक्ष्मीपरिग्रहयौतके यशसि वयमयं वा सुग्रीवो न केचिदंशाधिकारिणः ।

**गुहः**—(ससंभ्रमम्) कुमार, पश्य पश्य ।

---

हस्तुपृष्ठतः" इत्यमरः, योयुध्यमानस्य पृष्ठभागे शत्रुत्वेन वर्त्तते स पार्ष्णिग्राहः, वैकर्त्तनिः सुग्रीवः, स्कन्धावारे सेनायां, एकवीरः प्रधानभटः, प्रभञ्जनस्य वायोः, पारस्त्रैणेयः परस्त्रियाः (अञ्जनायाः) अपत्यं **ब्रह्मशापेति** । अयं हनुमान् ब्रह्मशापेन (त्वद्वीर्यज्ञानं परबोधनादृतेस्वतोन भात्वित्येवंरूपेण) परामृष्टं प्रति-बद्धं स्ववीर्यज्ञानं यस्य सः अत एव नियन्त्रितः अस्वातान्त्र्यं नीतः सन् अन्यैः साधारणवीरैः कीर्यमाणामपि व्याप्तामपि भुवं युद्धभूमिं उपेक्षते अशक्तवत्परित्यजति, पुरा किल हनुमान् ब्रह्मादिभिर्दत्तवरः सन् ब्रह्मर्षिकुलं पीडयामास, ततश्च तैः "बाध-से यत्समाश्रित्य बलमस्मान् प्लवंगम । तद्दीर्घकालं वेत्तासि नास्माकं शापमोहितः । यदातेस्मार्यते कीर्त्तिस्तदा ते वर्धते बलम्" इत्युत्तररामायणे (३९, ३४-३९) ॥ ५१

शल्यमिव शल्यं दुःखं उद्धरिष्यते उद्धृतंकरिष्यते, वर्त्तमानं सन्निहितं आर्यस्य रामस्य इदंयुद्धंतु एकतुलया द्वयोरपि वीर्यसाम्येन द्यूतं जिगीषितं, यद्वा, एकयोः असहाययोः (रामवालिनोः) तुलया शौर्यसाम्येन द्यूतं तद्वदानिर्धारि-तविजयमित्यर्थः, यद्वा एकतुलया सकृत्सायकप्रयोगेणैव द्यूतं क्रीडया जेतुं शक्यं, ततश्च तज्जयलक्ष्म्याः परिग्रहे स्वीकारविषये यौतके सुदाये "यौतकादितुयद्देयं सु-

सप्तसालानयं भित्त्वा वालिप्रहरणीकृतान् ।
हत्वाच वालिनं बाणो रामतूणीमुपागतः ॥ ५२ ॥

अहह,

प्राणैः समं कनकपुष्करकण्ठमाला-
सूत्रेण दाशरथये विहितातिथेयः ।
दिक्कूलमुद्वहयशःसरिदादिशैलः
शेते स वीरशयने कपिचक्रवर्त्ती ॥ ५३ ॥

**लक्ष्मणः**—( सखेदम् ) हा देव संक्रन्दन क्व पुनरीदृशं महावीरप्रकाण्डमात्मजं सहस्रेणापि लोचनैरवलोकयिष्यसि । ( नेपथ्ये दुन्दुभिध्वनिर्मंगलगीतिश्च )

**गुहः**— ( सहर्षम् ) कथमयमार्यजांबवदादीभिराभिमन्त्रितैःशातकुंभकलशैर्नीलः कुमारसुग्रीवमभिषिञ्चति । स्वयंचास्यदेवोदाशरथिः कार्त्तस्वरपुण्डरीकमालया कण्ठमलंकरोति ।

**लक्ष्मणः**—प्रियंनः प्रियंनः ।

भो भो वानराच्छभल्लगोलांगूलयूथपतयः, सर्वानेषवो महाराजः सुग्रीव आज्ञापयति, सज्जयन्तु भवन्तः सर्वाणि यौवराज्योपकरणानि, अयमहं सीतादेव्याः प्रवृत्तिमन्वेष्टुं प्रहित्य हनूमन्तमूर्ध्वमौहूर्त्तिके लग्ने कुमारमंगदमभिषेक्ष्यामि.

---

दायोहरणं च तत् । " इत्यमरः । युतकयोः संगतयोः स्त्रीपुंसयोः इदं यौतकं विवाहसमये दंपत्योर्देयमौपचारिकं वस्तुजातमित्यर्थः वयं अहं वा अयं सुग्रीवोवा अंशहारिणः भागिनः स्त्रीधनस्यानन्यगामित्ववत् रामकर्तृकविजयस्यानन्यगामित्वं स्वतःसिद्धंतस्मात्तत्रनास्मदपेक्षेतिभावः । सप्तेति । स्पष्टम् ॥ ५२ ॥

प्राणैरिति । दिशां कूलमुद्वहानां तटमुद्वहन्तीनां "उदिकूलेरुजिवहोः" इत्युत्पूर्वस्य वहेःकूलशब्दे उपपदे खश् यशःसरितां आदिशैलः प्रभवपर्वतः सकपिचक्रवर्ती वाली कनकपुष्करकण्ठमालासूत्रेण स्वर्णपद्ममयवैकक्षिकमालादाम्ना प्राणैः समं दाशरथये विहितं विधिवत्कृतं आतिथेयं अतिथिसत्कारो येन तथाभूतःसन् "पथ्यतिथि" इत्यादिना साध्वर्थे अतिथेर्ढञ् । वीरशयने युद्धभूमौ शेते । अहह कष्टम् । अद्भुतमितिवा ॥ ५३ ॥

प्रकाण्डं श्रेष्ठं । कार्त्तस्वरपुडरीकमालया वालिना अन्त्यकाले रामायार्पितया स्वर्णतामरसवैकक्षिकमालया । भो भो इत्यारभ्याभिषेक्ष्यामीत्यन्तं सुग्रीववचनं ।

**लक्ष्मणः—**

उत्सवः सोऽयमस्माकं सर्वदा हृदयंगमः ।
किंतु वालीविलीनोऽयं व्यथयिष्यति वासवम् ५४ ॥

(अन्तरिक्षे पुष्पवृष्टिः । अनन्तरम् । ) जयजयजगत्पते रामभद्र,

लक्ष्म्या वालिनिबर्हणप्रशमितद्वैराज्यवैराग्यया
किष्किन्धायतनैकदैवतमयं तारापतिर्दीप्यते ।
नप्तारं युवराजमंगदमपि श्रुत्वाऽतिहर्षादभू-
दस्रांभःपृषतौघमौक्तिकमयोद्गुंभः सहस्रेक्षणः ॥ ५५ ॥

**लक्ष्मणः**—प्रियात्प्रियतरं नः वयस्य, तदेह्यावामपि महोत्सवभागिनौ भवावः ।

( इति निष्क्रान्ताः सर्वे )

॥ इति सुग्रीवाभिषेको नाम पञ्चमोऽङ्कः ॥

---

सज्जयन्तु सन्नद्धानि कुर्वन्तु । प्रहित्य प्रस्थाप्य । मुहूर्त्तादूर्ध्वं ऊर्ध्वमौहूर्त्तिकं "लिङ्चोर्ध्वमौहूर्तिके" इतिनिपातनात्साधुः । उत्सवइति । अयमुत्सवः अंगदस्य यौवराज्याभिषेकः सर्वदा सर्वस्मिन्नपि काले हृदयंगमः हृद्यः खच्प्रकरणे गमेः सुप्युपसंख्यानाद्धृदयंगमइतिरूपसिद्धिः किंतु अयं वाली विलीनः मृतः सन् वासवं इन्द्रं व्यथयिष्यति पुत्रशोकस्य दुःसहत्वादितिभावः ॥ ५४ ॥

जयजयेत्यादीन्द्रवचनं । लक्ष्म्येति । किष्किन्धायतनस्य किष्किन्धाराज्यस्य एकदैवतं एकराजः अयं तारापतिः सुग्रीवः एतेन वालिभार्यायास्ताराया: सुग्रीवपरिग्रहोप्यनुमोदित इन्द्रेण ताच्छील्यात्तेषामिति गम्यते । वालिनः निबर्हणेन वधेन प्रशमितं निवर्त्तितं द्वैराज्यवैराग्यं राजद्वयवत्वनिमित्तको निर्वेदः यस्यास्तथाभूतया लक्ष्म्या दीप्यते ज्वलति । सहस्रेक्षणोऽपि इन्द्रोऽहमपि नप्तारं पौत्रमंगदं युवराजं श्रुत्वा अतिहर्षात् अस्रांभसां आनन्दबाष्पजलानां पृषतौघः बिन्दुसमूहएव मौक्तिकमयोद्गुंभः मुक्ताहारः यस्य तथाभूतः अभूत् आत्मं पौत्रस्य राज्यप्राप्त्याऽधिकतरं तुष्ट इत्यर्थः ॥ ५५ ॥

इति लक्ष्मणसूरिविरचितायामाकराख्यायामनर्घराघव-
नाटकव्याख्यायां पञ्चमोऽङ्कः ।

॥ श्रीरस्तु ॥

## षष्ठोऽङ्कः ।

( ततःप्रविशति माल्यवान् )

**माल्यवान्**— (सर्वतोऽवलोक्य सखेदम् । ) अहह ।

**दग्धाःप्रदीप्तपावकपरिचयपिण्डस्थहेमवेश्मानः ।**
**क्षणमुत्पुच्छयमाने हनुमति लङ्कापुरोद्देशाः ॥ १ ॥**

अपिच ।

**निजकिरणौघप्रमुषितनिम्नोन्नतरूपकर्मभेदेषु ।**
**मणिभवनेषु कृशानुज्वालाः फलतोऽनुमीयन्ते ॥ २ ॥**

( विमृश्य । ) अहो दुर्निवारता भवितव्यतायाः ।

---

तीर्त्वोदधिं दशास्यं हत्वा समरे सपुत्रबलवर्गम् ।
अभिषिच्य तस्य राज्ये विभीषणं वीरराघवो जयति ॥

अथ षष्ठेऽङ्के सेतुबन्धनरावणादिसंहारविभीषणाभिषेचनान्तकथां विमर्शसंधिकथनद्वारा वर्णयिष्यंस्तदुचितं विष्कम्भमारचयति **तत इत्यादिना** । तत्र हनूमता लङ्कादाहः, रावणनिष्कासितस्य विभीषणस्य रामेण लङ्काराज्याभिषेचनप्रतिज्ञा सेतुबन्धनसुवेलप्राप्त्यादिश्चातीतकथा, कुम्भकर्णेन्द्रजितोर्वधो वर्त्तमानकथा, रावणवधादिभाविकथा च सूच्यते । अहहेति खेदे । **दग्धा इति** । हनुमति क्षणमृत्पुच्छयमाने पुच्छमुदस्यमाने सति 'पुच्छभाण्डचीवराण्णिङ्' इति पुच्छशब्दाण्णिङ् 'पुच्छादुदसने व्यसने पर्यसने च' इत्युदसने वृत्तिः, लङ्कापुरस्योद्देशाः प्रदेशाः प्रदीप्तस्य प्रज्वलतः पावकस्याग्नेः परिचयेन संबन्धेन पिण्डस्थानि पिण्डाकारं गतानि हेमवेश्मानि स्वर्णमयानि गृहाणि येषां तथाभूता दग्धाः प्रदीप्तेत्यत्र प्रोपसृष्टात् 'दीपी दीप्तौ' इति धातोः 'ञीतः क्तः' इति वर्त्तमाने क्तः ॥ १ ॥

**निजेति**—निजेन किरणौघेन मणिप्रभापुञ्जेन प्रमुषितः दुर्विवेचतां नीतः निम्नोन्नतरूपो विकटस्वभावः कर्मणः शिल्पिकौशलस्य भेदो येषां तेषु मणिभवनेषु मणिमयेषु गृहेषु कृशानोरग्नेर्ज्वालाः फलतः कार्येणोष्णस्पर्शेन धूमेन वा अनुमीयन्तेऽनुमिता भवन्ति ॥ २ ॥

दोःसंदोहवशंवदत्रिभुवनश्रीगर्वसर्वंकषः
कैलासोद्धरणप्रचण्डचरितो वीरः कुबेरानुजः ।
यत्रायं स्वयमस्ति सेयममरावत्यापि तुल्या पुरी
नीता मर्कटकेन कामपि दशां धिग्दैवमावश्यकम् ॥ ३ ॥

तन्न किंचिदेतद्रावणस्य दुर्नयेन । (पुनःसखेदमाकाशे । )

आः पौलस्त्य,

विद्याश्चतुर्दश चतुर्षु निजाननेषु संबाधदुःस्थितवतीरवलोक्य वेधाः ।
ताभ्योऽपराणि नियतं दश ते मुखानिस्वस्य प्रणप्तुरकरोत्स कथं जडोऽसि।

---

भवितव्यताया दिष्टफलस्य। दोः संदोहेति—दोःसंदोहस्य भुजसमूहस्य वशंवदायाः स्वाधीनायाः ('प्रियवशे वदः खच्') त्रिभुवनश्रियस्त्रैलोक्यैश्वर्यस्य गर्वसर्वंकषः स्वाच्छन्द्यनिमित्तौद्धत्यभञ्जकः 'सर्वकूलाभ्रकरीषेषु कषः' इति खच् (एतेनाप्रतिभटत्वं दर्शितम्) कैलासस्य उद्धरणेन प्रचण्डं प्रख्यातं चरितं यस्य सः (एतेनेश्वरप्रसादैकान्त्यं दर्शितम्, तदा हि तस्य स्तुतिभिस्तुष्टो महेश्वरस्तस्मै वराण्यदादिति कथा) कुबेरानुजः (एतेनातिप्रसिद्धादिक्पालकल्पत्वमस्य दर्शितम्) अयं वीरो रावणो यत्र यस्यां पुर्यां स्वयमस्ति राजत्वेन वर्त्तते, अमरावत्या देवेन्द्रपुर्यापि अमराः सन्त्यस्यामिति मतुपि 'मतौ बह्वचोऽनाजिरादीनाम्' इति दीर्घः, तुल्या सदृशी किमुतान्याभिरित्यपेरर्थः, सेयं पुरी लङ्का मर्कटकेन अल्पेन कुत्सितेन वा वानरेण हनूमता कामपि दशां शोच्यतया दुर्वचामवस्थां नीता प्रापिता, अतो धिक् सर्वं निष्फलमित्यर्थः, कुतस्तत्राह दैवं नियतिः आवश्यकमवश्यंभावि 'ओरावश्यके' इति निपातनात्साधुः, यद्वा मनोज्ञादित्वादवश्यंभाव आवश्यकं अव्ययानां भमात्रे टिलोपः ततोऽर्शआद्यच्, यद्वा दैवं देवसंबन्धि आवश्यकमवश्यतां स्वातन्त्र्यमित्यर्थः धिक्, वशं गत इति वश्यः न वश्योऽवश्यस्तस्य भावे आवश्यकं योपधत्वाद्वुञ्. 'दैवमेव परं मन्ये पुरुषार्थो निरर्थकः ।' इति न्यायेन दैवाधीनैव सिद्धिरित्यत्रायमेव दृष्टान्त इति भावः॥३॥

तत् दैवाधीनत्वात् । विद्या इति । वेधा ब्रह्मा चतुर्दश चतुरधिकदशसंख्याविशिष्टाः विद्याः 'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या एताश्चतुर्दश' इत्युक्ताः चतुर्षु निजाननेषु स्वमुखेषु संबाधेन संकटेन 'संबाधः संकटे भगे' इति विश्वः दुस्थितवतीर्दुःखेन स्थिताः विलोक्य पर्यालोच्य, ताभ्यस्तासां संबाधदौस्थ्यपरिहारार्थं अपराणि स्वमुखचतुष्टयतोऽ

(क्षणं च ध्यात्वा ।) कथमेवं विशीर्यते कुलम् ।

**खरादीनवधीद्रामो वत्समक्षं च मारुतिः ।**
**स्वयं निष्क्रामयामास दशास्यश्च विभीषणम् ॥ ५ ॥**

अलं वा दुर्विधिनीतमतीतमुपालभ्य । संप्रति सिन्धोरुदीचि तीरे निवेशितस्कन्धावारो दाशरथिः किमारभत इति कथं प्रतीमः । (पुरो दृष्ट्वा ।) कथं राघवचरितानि चरितुं प्रहितयोः शुकसारणयोः सारणः । (प्रविश्य ।)

**सारणः**—जयतु जयतु कनिष्ठमातामहः ।

**माल्यवान्**—(अभिनन्द्य समीपमुपवेश्य च ।) वत्स सारण, अमुनैव पदेन सुग्रीवकटकादागतोऽसि ।

**सारणः**—अथ किम् ।

**माल्यवान्**—तद्यथानुभवमभिधीयताम् ।

**सारणः**—सारसंख्ये वनौकसामस्मन्मुखेनैव शतशः प्रतीते मातामहेन । अधुना तु सेतुग्रथनाय मिलितेषु सैनिकेषु वानरमूर्त्तिधरोऽप्यहं महाराजविभीषणेन (इत्यर्धोक्ते सभयम् ।) आर्य, चिरसंवासेन रामराजधानीप्रवादो मामनुबध्नाति ।

**माल्यवान्**—(साकूतम् ।) किमभिषिक्तः कनिष्ठवत्सो राघवेण ।

**सारणः**— अथ किम् ।

**माल्यवान्**— (स्तब्ध इव क्षणं स्थित्वा निश्वस्य ।) वत्स, निःशङ्कमभिधीयताम् ।

---

न्यानि स्वस्य प्रणप्तुः पौत्रपुत्रस्य ते दश मुखानि अकरोदवशिष्टान्यावासार्थं सृष्टवान् नियतं ध्रुवं, स तादृशः सर्वविद्यापारीण इत्यर्थः त्वं कथं जडोऽसि कार्याकार्यविवेकशून्योऽसि ॥ ४ ॥

विशीर्यते विनश्यति । **खरादीनिति** । रामः खरादीन् खरदूषणत्रिशिरसः अवधीज्जनस्थाने निहतवान् 'हनो वध लुङि' मारुतिर्हनुमान् वत्समक्षं रावणकुमारं चादन्यांश्च कांश्चन राक्षसानवधीत, दशास्यो रावणः स्वयं च विभीषणं निष्क्रामयामास नगरादपसारयामास, एवं बहुधा कुलविनाश आरब्ध इत्यर्थः॥५

उपालभ्य निन्दित्वा । 'स्कन्धावारः स्यात्कटकः' इति त्रिकाण्डशेषः । किमारभत इति कीदृशव्यापारवान् वर्तत इति । चरितुं ज्ञातुं गत्यर्थानां ज्ञानार्थत्वात् । अमुनैव पदेनेति लोकोक्तिरियं, अनेनैव मार्गेणेत्यर्थः सुग्रीवस्य कटकात्सेनायाः 'कटकस्त्वद्रिनितम्बे बाहुभूषणे । सेनायां राजधान्यां च' इति हैमः ।

**सारणः**— कुमारविभीषणेन ज्ञात्वा संयम्य चाहं रामस्य दर्शितः ।

**माल्यवान्**— (साशङ्कम् ।) ततस्ततः ।

**सारणः**— ततश्च राघवेण निजसचिवैर्निर्विशेषमुपगृह्य पुरस्कृत्य च प्रहितोऽस्मि ।

**माल्यवान्**— (सहर्षम् ।) किमुच्यते, यावद्द्रव्यभावी हि गुणो विजिगीषूणामुदात्तता । विशेषेण पुनरयं रामभद्रः ।

**अभेदेनोपास्ते कुमुदमुदरे वा स्थितवतो**
**विपक्षादम्भोजादुपगतवतो वा मधुलिहः ।**
**अपर्याप्तः कोऽपि स्वपरपरिचर्यापरिचय-**
**प्रबन्धः साधूनामयमनभिसंधानमधुरः ॥ ६ ॥**

अथ शुकः किमासीत् ।

**सारणः**— अहमपि न जानामि ।

**माल्यवान्**— (विमृश्य ।) वत्स, विभीषणस्य रामोपश्लेषेण स्वकुलव्यसनमिति संप्रति मुग्धोऽस्मि ।

---

सेतुग्रथनाय सेतुबन्धनार्थम् । चिरसंवासेन चिरकालावस्थानेन । प्रवादो व्यवहार अनुबध्नात्यन्तःकरणव्यापारमनपेक्ष्यैव विभीषणे महाराजपदप्रयोगं कारयतीत्यर्थः संयम्य बद्ध्वा विजिगीषूणां विजेतुमिच्छूनां 'सन्लिटोर्जेः' इत्यभ्यासात्परस्य कुत्वम् । उदात्तता अविकृतस्वभावत्वं महाशयत्वं वा 'महत्यपि विकारस्य हेतौ सत्यपि यन्मनः । विकारं नावगाहेत तदुदात्तं विदुर्बुधाः ।' इति 'आशयस्य विभूतेर्वा यन्महत्त्वमनुत्तमम् । उदात्तं नाम तत्प्राहुरनेकगुणसंश्रयम् ।' इति चोक्तेः, यावद्द्रव्यभावी यावद्द्रव्यं भवितुं शीलमस्येति तथाभूतः यत्पदार्थाश्रितस्तत्सत्तामभिव्याप्य वर्तमान इत्यर्थः गुणो हि । उक्तमर्थं कैमुतिकन्यायेन दर्शयन्नाह विशेषेणेत्यादि । अभेदेनेति—कुमुदं कैरवं कर्तृ उदरे स्वस्य मिलनावस्थायामपि स्वजठरे स्थितवतः, एतेन 'आपत्सु मित्रं जानीयात्' इति न्यायेन तेषां मित्रत्वं दर्शितम् विपक्षात् उदयकालेन परिग्रहेण च विरुद्धस्वभावात् अम्भोजात्पद्मात् उपगतवत आगतान् वा मधुलिहो भ्रमरान् अभेदेन स्वपरतारतम्यं विनैव उपास्ते प्रीणयति 'स्त्रियमुपास्ते' इतिवत् उपास्तिरत्र प्रीणनम्, हिरध्याहार्यः हि यतः अनभिसंधानेन क्वचित्पक्षपाताभावेन मधुरो रम्यः कोऽपि निरतिशयः साधूनां स्वपरयोरात्मीयानात्मीययोः परिचर्यायास्तारतम्यं विनैव सम-

**सारणः**— आर्य, तथाधर्मदृष्टिरार्यसंतानश्च कुमारः कथं ज्यायांसं भ्रातरमवधूय प्रतिपक्षवृत्तिः संवृत्तः।

**माल्यवान्**— वत्स, दशग्रीवं पृच्छ। (निश्वस्य।) अथवा दैवं पृच्छ.

**सारणः**— यदि श्रवणार्होऽस्मि तदावेदय।

**माल्यवान्**— वत्स, केसरिसंभवेन प्रभञ्जनसूनुना विलुण्ठितामशोकवनिकामवलोक्य राजा तवायं विभीषणमवोचत। 'वत्स पश्य मनुष्यपोतद्वयावष्टब्धेन दुरात्मना कपिकीटेन कथं विजृम्भितम्।' इति।

**सारणः**— ततस्ततः।

**माल्यवान्**— ततो विभीषणः प्रणम्य व्यजिज्ञपत्—

**'जातिं मानय मानुषीमभिमुखे दृष्टस्त्वया हैहयः**
**स्मृत्वा वालिभुजौ न सांप्रतमवज्ञातुं च ते वानरान्।**
**तत्पौलस्त्य महाग्निहोत्रिणमहं त्वामेवमभ्यर्थये**
**सीतामर्पय मुञ्च च क्रतुभुजः कारागृहस्वीकृतान्' ॥७॥**

**सारणः**— (सबहुमानाश्चर्यम्।) अहह 'वालिभुजौ' इति ब्रुवता मातामहेन स्मारितोऽस्मि। आर्य,

---

मुपचरणस्य परिचयप्रबन्धोऽभ्याससातत्यं अपर्याप्तोऽपरिच्छिन्न इत्यर्थः, तस्माद्युक्तमेव रामभद्रस्य स्वजनवद्विरोधिभृत्येऽपि त्वयि प्रीतिकरणमिति भावः, अर्थान्तरन्यासालंकारः ॥ ६ ॥

उपश्लेषेण संधानेन। व्यसनं विपत्। तथाधर्मदृष्टिरतीव धार्मिकः। आर्यस्य पूज्यस्य पुलस्त्यस्य विश्रवसो वा संतानः संततिः। अवधूय त्यक्त्वा। प्रतिपक्षे शत्रौ वृत्तिर्वर्त्तनं यस्य तथाभूतः। यद्वा प्रतिपक्षवृत्तिर्विरुद्धस्वभावः। विलुण्ठितां नाशितां। अवष्टब्धेन गर्वितेन। विजृम्भितं विक्रान्तम्. जातिमिति— हे पौलस्त्य मानुषीं जातिं मानय स्वतोऽपकृष्टत्वबुद्धित्यागपूर्वकं बहु मन्यस्व, कुतस्तत्राह अभिमुखे संमुखमेव त्वया हैहयः कार्त्तवीर्यः दृष्टः त्वन्निग्रहणेन त्वत्त उत्कृष्ट इति ज्ञातः, तस्मात् 'मनुष्यपोतद्वयावष्टब्धेन' इति नावमन्यस्वेति भावः, तथा वालिभुजौ च स्मृत्वा स्वस्य तत्कक्षान्तरस्थितिपीडां चिन्तयित्वा वानरांश्चावज्ञातुमभिभवितुं ते न सांप्रतं न युक्तम्। तत्तस्मात् महाग्निहोत्रिणं त्वामेवं वक्ष्यमाणेन प्रकारेण अभ्यर्थये प्रार्थये किंतत्तदाह सीतामर्पय रामसमीपं प्रापय, कारागृहे बन्धनालये स्वीकृतान्निरुद्धानित्यर्थः क्रतुभुजो देवांश्च मुञ्च विसृज, एतदेव ममाभ्यर्थनमित्यर्थः ॥ ७ ॥

किमाचक्षे सेतुक्षितिधरशिरःश्रेणिकषणैः
प्रकोष्ठे नीरोम्णः कपिभटभुजस्तम्भनिवहान् ।
सुमेरोर्मात्सर्यादनतिचिरसंरूढमृदुभिः
शिरोभिर्विन्ध्यो यद्भरमपि न सोढुं परिबृढः ॥ ८ ॥

(साशङ्कम् ।) ततस्ततः ।

**माल्यवान्**—ततश्च रोषान्धतामिस्रे मज्जता राक्षसराजेन तथा चेष्टितं यथा विपक्षमप्याश्रितः कुमारः ।

**सारणः**—(सखेदमाकाशे ।) हा देव पुलस्त्यनन्दन, कष्टम् । भवतैव वैधर्म्यदृष्टान्तेनानुमानितो मूलच्छेदनिमित्तात्कर्मणो निवर्तिष्यते लोकः। (साम्पर्थनम्।)

अरिषड्वर्ग एवायमस्यास्तात पदानि षट् ।
तेषामेकमपि च्छिन्दन् खञ्जय भ्रमरीं श्रियम् ॥ ९ ॥

---

किमिति—सेतुक्षितिधरशिरःश्रेणीनां सेतुबन्धनार्थमाहृतानां पर्वतशिखरपङ्क्तीनां कषणैः कर्षणैः प्रकोष्ठे कूर्परस्याधोभागे नीरोम्णो रोमरहितान् कपिभटानां वानरयोधानां भुजस्तम्भनिवहान् स्तम्भसदृशबाहुसमूहान् किमाचक्षे किं ब्रवीमि अत्याश्चर्यतया वर्णयितुं न पारयामीत्यर्थः, विन्ध्योऽपि सुमेरोर्महामेरुपर्वतस्य मात्सर्यादौन्नत्यासहनद्वेषेण अनतिचिरं सद्य एव संरूढैः प्रवृद्धैरत एव मृदुभिरनतिकर्कशैः शिरोभिः शिखरैः करणभूतैः येषां भुजस्तम्भनिवहानां भरमुद्धरणार्थमाक्रमणभारं सोढुं न परिबृढः शक्तो न बभूव तान् किमाचक्ष इति संबन्धः ॥८॥

रोषः कोप एव अन्धतामिस्रं निबिडान्धकारो नरकभेदो वा तस्मिन् । लोको जनः वैधर्म्यदृष्टान्तेन व्यतिरेकोदाहरणेन भवतैव अनुमानितः कृतानुमानः सन् मूलच्छेदनिमित्तात्सर्वोच्छित्तिहेतुभूतात् कर्मणः पारदारिकत्वपापाचरणात् निवर्तिष्यते निवृत्तो भविष्यति, यथा—यो यः सर्वनाशमनिच्छुः स स पारदारिको न स्याद्यथा रावणः' इति त्वां प्रत्युदाहरणीकृत्य ततो व्यावर्त्ततेत्यर्थः । अरीति—तात हे वत्स रावण, अयं प्रत्यक्षेण सर्वत्र विद्यमानः अरीणामान्तरशत्रूणां षड्वर्गः कामक्रोधलोभमोहमदमानरूपषट्कमेव अस्या श्रियः षट् पदानि गतिकरणानि, तेषां कामादीनां मध्ये एकमपि प्रधानभूतं काममात्रं वा छिन्दन् भञ्जन् व्यपोहयन्निति यावत् श्रियं भ्रमरीमिति व्यस्तरूपकम्, लक्ष्मीरूपां भृङ्गीं, यद्वा, भ्रमरीं कामुकस्वभावां श्रियं 'भ्रमरः कामुके भृङ्गे' इति मेदिनी, खञ्जय खञ्जां (मति-

(मन्त्रिणं प्रति ।) आर्य, सत्यं रामेण व्यूढां वानरवरूथिनीमुत्प्रेक्ष्य शङ्के–विभीषण एवायमस्माकं कुलतन्तुरवशिष्यते ॥

**माल्यवान्**––(निश्वस्य ।) वत्स, उभयोरपि कटकयोस्तत्वज्ञोऽसि । तत्किमिदानीमुचितम् ।

**सारणः**––आर्य, नन्वेवं ब्रवीमि––राजपुत्रोऽङ्गदोऽसौ बालो नवबुद्धिरामामिव पात्रं यद्याधीयते तत्तदाचूषति ।

**माल्यवान्**––ततः किम् ।

**सारणः**––ततश्च भवतः पितृवैरिणौ रामसुग्रीवौ व्यापाद्य किष्किन्धायां भवन्तमभिषिच्य वालिसौहृदस्यानृण्यमात्मन इच्छामीति गढप्रणिधिमुखेन दशकंधरादेशमभिधाय सुग्रीवशिबिरादपवाह्यः । तस्मिन्नपक्रान्ते च स्वगृहमहिभयोपजापजर्जरमवेक्षमाणो वानरपतिः शिथिलितरामप्रयोजनः स्यात् ।

**माल्यवान्**––(सस्मितम् ।) वत्स, साधु समर्थयसे । किं पुनः स्वजनगतो गर्भरूपोऽयमभिनवोज्ज्वलयौवराज्यसुखोपलालितो दुरवगाह एव । येचास्य मातापितृबान्धवास्ते सुग्रीवस्यैव संबन्धिनः कथमेनमुत्तिष्ठमानमनुजानीयुः ।

**सारणः**––यथा दृष्टमार्येण । किं च कालापेक्षी दण्डनीतिप्रयोगः । तथा महोत्साहैः कपिभिः सेतुकर्मणि प्रवृत्तं यथैतावता कालेन संतीर्णमहार्णवो रामः सुवेलशैलोपत्यकामध्यास्ते ।

**माल्यवान्**––(सविमर्शाद्भुतम् ।) अहह ।

---

विकलां) कुरु । यथा हि भृङ्गी पदषट्केन गच्छत्येवं कामादिदूषितात्पुरुषाच्छ्रीरपसरति, तेषां च काममूलत्वात्प्रधानभूतस्य कामस्य परिहारेण श्रियं स्वस्मिन्नेव स्थिरां कुरु, एवं च सीतापरित्याग एव तव राज्यादिसिद्धिरन्यथा सर्वनाशः स्यादित्यर्थः ॥ ९ ॥

व्यूढां कृतविन्यासाम् । कुलस्य तन्तुरिव तन्तुः कुलवृद्धिकर इत्यर्थः 'साधुप्रजायास्तन्तुं तन्वानः' इत्यादिश्रुतेः । कटकयोः सैन्ययोः । आमपात्रमपक्वं मृद्भाण्डम् । आचूषति पिबति शोषयतीत्यर्थः । 'चूष पाने' व्यापाद्य हत्वा । आनृण्यं सुहृन्मारणप्रतिकर्त्तव्यभूततन्मारकमारणर्णविमुक्तत्वम् । शिबिरात्सेनानिवेशात् । अपवाह्योऽपक्रमणं कार्यः । अहिभयोपजापेन स्वपक्षप्रभवभयरूपभेदेन कुटुम्बच्छिद्रेणेत्यर्थः जर्जरमाकुलम् । गर्भरूपोऽतीव बालः अभिनवेन उज्ज्वलेन

अहो मनुष्यमात्रेण लङ्घितो यदि सागरः ।
प्रतापो दशकण्ठस्य भुवनैरपि लङ्घितः ॥ १० ॥

(सखेदं च ।)

पौलस्त्यस्य सुरासुरेन्द्रशिरसां निर्माल्यमङ्घ्रिद्वयं
कुर्वाणेन रघूद्वहेन घटिते सेतौ निधावम्भसाम् ।
अद्योन्निद्रयति स्वहस्तविधृतं राजीवमिद्धो रविः
प्रत्यावृत्तिरसस्य चामृतभुजामिन्दोः स्वदन्ते कलाः ॥ ११ ॥

(विमृश्य ।) वत्स सारण, वालिवधविशुद्धपार्ष्णेरनेकवानरानीकनायकेन साक्षादुपकृतेन सख्या सुग्रीवेण महापक्षस्य हनुमच्चरितज्ञातास्मदीयप्रवृत्तेरयमेव सुविदितसकलाभियास्यत्कर्मणस्तस्याभियोगसमयः ।

---

च यौवराज्यसुखेन उपलालितो वर्धितः । दुरवगाह एव भेदोपायेनापसारयितुमशक्य एव । सुग्रीवस्यैव संबन्धिन इत्यत्र एवकारः परसंबन्धी संबन्धिन एवेति । उत्तिष्ठमानं प्रतिकूलाचरणाय प्रयतमानम् । दण्डनीतेरर्थशास्त्रस्यसामाद्युपायस्येति यावत् प्रयोगः । उपत्यकामासन्नां भुवम् 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' अहो इति—मनष्यमात्रेण मनुष्येणैव सागरो लङ्घितस्तीर्णो यदि तर्हि दशकण्ठस्य प्रतापोऽपि अपिरत्र भिन्नक्रमः भुवनैर्लक्षणया तत्स्थैः लङ्घितः पराभूत एवेत्यर्थः अहो, लोके हि समुद्रो रावणप्रतापश्चेत्येतद्द्वयं दुरतिक्रमं, तयोरन्यतरस्य पराजये प्राकृतेन संभूते इतरस्यापि तथात्वमुक्तप्रायमेव, ततश्च रावणो जितप्राय एवेति भावः ॥ १० ॥

एवं रावणपराजयं सिद्धवत्कृत्याह पौलस्त्यस्येति— पौलस्त्यस्य रावणस्याङ्घ्रिद्वयं पादयुगलं सुरासुरेन्द्राणां शिरसां मूर्ध्नां निर्माल्यं भुक्तत्यक्तद्रव्यं कुर्वाणेन रचयता तत्रानादरमुत्पादयतेत्यर्थः, रघूद्वहेन रामेण अम्भसां निधौ समुद्रे सेतौ घटिते निर्मिते सति, रविः सूर्यः इद्धो दीप्तः सन् स्वहस्ते स्वकरे विधृतं राजीवं पद्मं अद्य उन्निद्रयति विकासयति इतः पूर्वं रावणभयात्स्वहस्तगतपद्मविकासाहातपवानपि नासीदितः परं स्वैरता तस्य जातेत्यर्थः, तथा प्रत्यावृत्त्या पुनः स्वरूपापत्त्या रसो यस्य तस्येति व्यधिकरणबहुव्रीहिः, इन्दोश्चन्द्रस्य कलाश्च अमृतभुजां स्वदन्ते आस्वाद्या भवन्ति अविवक्षणात् 'रुच्यर्थानां' इति चतुर्थीन, इतः पूर्वं चन्द्रो रावणभयेन तस्य कामोद्दीपनसाधनद्रव्यकोटिप्रविष्टतया प्रतिपदादिक्रमेण देवैरनास्वाद्यकलोऽभूदिदानीं तदपि गतमित्यर्थः, एतदुपलक्षणं एवं सर्वमपि जगन्निर्भयं स्वैराचारं च जातमिति भावः॥११॥

**सारणः**—आर्य, अयमेवात्मद्रव्यप्रकृतिसंपन्नो नयस्याधिष्ठानं विजिगीषुरित्यत्र प्रथमोदाहरणं दाशरथिः ।

**माल्यवान्**—(स्तम्भं नाटयित्वा ।)

यत्तस्मिन्निहतेऽपि वालिनि वयं क्षुद्रास्तथैवास्महे
तद्व्यक्तं भुजयोर्बलादपि बलं दुर्गस्य दुर्निग्रहम् ।
मर्त्येनापि जगद्विलक्षणगुणग्रामेण रामेण तु
द्वे गव्यूतिशते हि नाम कियती तीर्णोऽयमर्णोनिधिः ॥ १२ ॥

(दीर्घमुष्णं च निश्वस्य । आकाशे ।)

तर्षार्तिव्यतिलेलिहानरसनारम्यैर्मुखैरष्टभिः
क्रन्दन्ती क्रमशः पपौ दशमुखी वत्सस्य यस्यास्तनौ ॥

---

वालिवधेत्यादिविशेषणत्रयेणोत्साहप्रभुमन्त्रशक्तिसंपन्नत्वं दर्शितम् । तद्वत एव हि अभियोगव्यवसायार्हत्वस्य दण्डनीतिषु दर्शनात् । वालिवधेन विशुद्धा निरातङ्का पार्ष्णिः सैन्यस्य पृष्ठभागो यस्य तस्य 'पार्ष्णिः स्यादुन्मदस्त्रियाम् । स्त्रियां द्वयोः सैन्यपृष्ठे पादग्रन्थ्यधरेऽपि च' इति विश्वः । महान् पक्षः सहायो यस्य तस्य 'पक्षः सहायेऽपि' इत्यमरः । सुविदितं सम्यग्ज्ञातं सकलमभियास्यतां युद्धोद्यतानां स्वपरबलानां कर्म बलादेरियत्ता येन तस्य यद्वा अभियास्यत्कर्म बलविन्यासादिसंप्रदायो येन तस्य । तत्र वृद्धसंमतिमाहायमेवात्यादि । आत्मसंपन्न उत्साहशक्तिसंपन्नः द्रव्यसंपन्नः प्रभुशक्तिसंपन्नः प्रकृतिसंपन्नः मन्त्रशक्तिसाधनभूतमन्त्र्यादिसंपन्नः नयस्याधिष्ठानं स्वयं च नीतिज्ञोऽयमेवंभूत एव विजिगीषुः शत्रून् प्रत्यभियास्यन् स्यादित्यत्रास्मिन् विषये दाशरथिः प्रथमोदाहरणं तद्वतामग्र्य इत्यर्थः । **यदिति**—तस्मिन्नसमत्तोऽपि बलीयसि वालिनि निहतेऽपि क्षुद्रास्ततोऽल्पसारा वयं तथैवास्महे पूर्ववदप्रयतमाना एव वर्त्तामहे इति यत्तत् भुजयोर्बलादपि बलं बलवत्तरमत एव दुर्निग्रहं दुर्धर्षं दुर्गस्य जलदुर्गभूतस्य समुद्रस्य बलं बलशब्द उभयसंबन्धी व्यक्तं स्फुटम् । वालिनिग्रहेणैवास्मन्निग्रहस्य सिद्धत्वेऽपि समुद्रस्य दुस्तरत्वधियेतःप्रागुदासितमिदानीं तु तदाशापि गतेत्याह हि यतः द्वे गव्यूतिशते नाम कियती किंपरिमाणविशिष्टे नामेति संभावनायाम् । अयमेवं योजनशतायामवत्त्वेन दुस्तरभूत एषोऽर्णोनिधिः समुद्रः कर्म जगद्विलक्षणो लोकातीतो गुणग्रामो वीर्यगाम्भीर्यादिगुणसमूहो यस्य तेन मर्त्येन मनुष्यमात्रेणापि रामेण तु कर्त्रा तीर्णः पारितः ॥ १२ ॥

**तर्षेति** । वत्सस्य स्तनन्धयावस्थां गतस्य रावणस्य दशमुखी मुख-

वत्से केकसि विश्ववीरजननीसीमन्तमुक्तामणिः
सा तादृग्भवती कथं गुणवतः पुत्रस्य किं द्रक्ष्यति ॥ १३ ॥

**सारणः**— (सातङ्कम् ।) शान्तं पापं शान्तंपापम् । प्रतिहतममङ्गलम् । अनर्थाशङ्कीनि बन्धुहृदयानि भवन्ति । किं च ।

भुजनिवहविहङ्गिकावलम्बी निबिडगुणौघधृतोऽपि राज्यभारः ।
स्वयमपि दशकंधरे धुरीणे स्खलति यदि स्खलितं तदास्य रूपम् ॥ १४ ॥

**माल्यवान्**— (अश्रूणि स्तम्भयन् ।) वत्स,

विदन्नपावृत्तमिव स्वभाग्यं न तावदात्मानमहं ब्रवीमि ।
महामुनेर्विश्रवसस्तपोभिर्निचापबीजं यदि नः कुले स्यात् ॥ १५ ॥

---

दशकं तर्षार्त्या पिपासाजन्यपीडया व्यतिलेलिहानाभिर्मिथो लिहतीभिः रसनाभिर्जिह्वाभिः रम्यै मनोज्ञैः (यङ्लुगन्ताल्लिहेः कर्मव्यतिहारे रूपं व्यतिलेलिहानेति ।) अष्टभिः पानासक्तद्वयातिरिक्तैर्मुखैः क्रन्दन्ती पानावकाशाभावेन क्रोशन्ती सती यस्यास्तव स्तनौ लक्षणया स्तन्यं पयः क्रमशः यथाक्रमं पपौ पीतवती, वत्से हे केकसि विश्वासां वीरजननीनां वीरप्रसूनां सीमन्तस्य केशवेशस्य मुक्तामणिः श्रेष्ठभूतेत्यर्थः सा तादृक् भवती अनुभूतपुत्रलालनक्लेशाधिक्या त्वं कथं, गुणवतः प्रशस्तशौर्यगाम्भीर्यादिगुणस्य पुत्रस्य किं द्रक्ष्यति अश्लीलत्वेन दुर्वचत्वान्नाशोक्तेः 'किं द्रक्ष्यति' इत्युक्तं पुत्रवधं कथं पश्यसीत्यर्थः ॥ १३ ॥

भुजेति । राज्यभारः राजकर्मरूपं काष्ठादिभरणीयद्रव्यजातं भुजनिवहेष्वेव विहङ्गिकायामाधारयष्टौ अवलम्बी स्थितः सन् 'विहङ्गिकाधारयष्टौ विहगे च निगद्यते ।' इति वैजयन्ती, निबिडानां गम्भीराणामविरलानां च गुणानां शौर्यादीनां रज्जूनां च ओघेन समूहेन अवधृतः सन्नपि, तथा दशकंधरे स्वयमात्मना धुरीणे भारवहे च सति 'खः सर्वधुरात्' इत्यत्र ख इति योगविभागाद्रूपसिद्धिः । स्खलति भ्रश्यति चेत्तदा तर्हि स्खलितं च्युतिरेकत्रानवस्थानमिति यावत् अस्य राज्यभारस्य रूपं स्वभावः स्यात् एककंधराधृतोऽपि हि भारोऽस्खलन् दृश्यते सत्येवं तद्दशकेन धृतः सन्नपि स्खलेच्चेत्तर्हि वह्नेरुष्णवत्स्वभावभूतोऽस्य भ्रंश इति गम्यते स्वभावस्य चापरिहार्यत्वात्तत्र विषादोऽनर्थक एवेति भावः ॥ १४ ॥

विदन्निति । अहं स्वभाग्यमात्मन इह मोघादृष्टं अपावृत्तमिवानि

(प्रविश्य पटाक्षेपेण संभ्रान्तः शुकः ।)

**शुकः**—

**प्रहस्तधूम्राक्षमहोदरादीन्व्यापाद्य सेनाधिपतीनमात्यान् ।**
**स एष लङ्कामुपरुध्य रामः शाखामृगैकार्णवमातनोति ॥ १६ ॥**

**माल्यवान्**—(सविषादम् ।) पुरस्तादेव दृष्टमस्माभिरिदम् ।

**सारणः**—देशकालव्यवहितस्यापि प्रमेयग्रामस्य यथामुखीनमादर्शतलं हि स्थविरबुद्धिः ।

**माल्यवान्**—(विमृश्य । आकाशे ।) साधु रामभद्र, साधु विजिगीषोरदीर्घसूत्रता हि कार्यसिद्धेरवश्यंभावः ।

**सारणः**— सखे शुक, किंविधानो यातुधानेश्वरः ।

**शुकः**— (सखेदस्मितम् ।) सखे, किं तस्य विधानम् ।

**श्रुत्वा दाशरथिं सुवेलकटके साटोपमर्धे धनु-**
**ष्टंकारैः परिपूरयन्ति ककुभः प्रोञ्छन्ति कौक्षेयकान् ।**

---

ष्टपरपराप्राप्त्या नष्टप्रायं विदन् जानन्नपि आत्मानं तावत् साकल्येन न ब्रवीमि भाग्यहीनमिति शेषः, तत्र हेतुमाह महामुनेर्विश्रवसो रावणादिपितुः तपोभिः नः कुले निवापबीजं जलाञ्जलिहेतुःस्याद्यदि पिण्डदः सन्ततिकृच्च कश्चिदवशिष्येत चेदित्यर्थः तर्हि न ब्रवीमीति संबन्धः, ऐहलौकिकभोगाशा प्रायेण नष्टैव पारलौकिकपिण्डाशैव केवलमवशिष्यते तत्सिद्धावपि कृतार्था इव वयमिति भावः ॥ १५ ॥

प्रहस्तेति—स एषः रामः प्रहस्तः धूम्राक्षः, महोदरश्च आदौ येषां तान् सेनाधिपतीन् सैन्यनियन्तॄन् अमात्यान् सचिवान् व्यापाद्य निहत्य, लङ्कामुपरुध्य सर्वतो व्याप्य शाखामृगैर्वानरैरेकार्णवमेकसमुद्रमातनोति विस्तारयति निबिडयतीत्यर्थः ॥ १६ ॥

पुरस्तादेव दर्शने हेतुमाह हि यतः स्थविरबुद्धिर्वृद्धबुद्धिः देशकालव्यवहितस्याप्यप्रत्यक्षस्यापीत्यर्थः प्रमेयग्रामस्य ज्ञेयार्थसमूहस्य यथामुखीनं प्रतिबिम्बमुखदर्शनं आदर्शतलं दर्पणप्रदेशो भवति मुखस्य सदृशं यथामुखं प्रतिबिम्बम् निपातनात्साहश्येऽव्ययीभावः यथामुखं दर्शनं यथामुखीनम् 'यथामुखसंमुखस्य दर्शनः खः' इति खः । अदीर्घसूत्रता कर्तव्येषु विलम्बनराहित्यं क्षिप्रकारित्वमिति यावत् । किं विधानमनुष्ठानं यस्य स किंविधानः । श्रुत्वेति—दाशरथिं रामं

अभ्यस्यन्ति तथैव चित्रफलके लङ्कापतेस्तत्पुन-
वैदेहीकुचकुम्भपत्ररचनाचातुर्यमर्धे कराः ॥ १७॥

**माल्यवान्**— (निश्वस्य।) हा वत्स रावण, कथमद्यापि सैव हृदयपरिस्पन्दमुद्रा। (शुकं प्रति।) वत्स, गोपुरगौल्मिकबलाध्यक्षेण वत्सनरान्तकेन किं प्रतिपन्नम्।

**शुकः**— (निश्वस्य।) आर्य, कृतैव कुमारेण द्वारमर्यादा। परमङ्गदेन सोऽपि। (इत्यर्धोक्ते सास्रमधोमुखास्तिष्ठति।)

**माल्यवान्**— हा वत्स दशग्रीवनन्दन, कथमिदं द्रष्टुमेतावन्तं कालमस्माकमायुः।

(नेपथ्ये)

भो भो महापार्श्वप्रभृतयः सैनिकाः

व्यावर्तध्वमुपाध्वमुद्धुरशरज्वालामुखीं मातरं
देवीमस्त्रमयीं प्लवङ्गपशवः पश्यन्ति पृष्ठानि वः।
चेतः शक्रजितोऽपि लक्ष्मणवधे बद्धोद्यमं मध्यमः
पौलस्त्यः स्वयमायुधं च धृतवानद्यापि रामाद्भयम् ॥ १८॥

---

सुवेलस्य पर्वतविशेषस्य कटके नितम्बे साटोपं युद्धसंन्नाहविशिष्टं श्रुत्वा लङ्कापते रावणस्य अर्धे कतिपये 'प्रथमचरम' इत्यादिना जसः कार्येऽर्धशब्दस्य सर्वनामताविकल्पः तेन शीभावः। कराः धनुष्टंकारैर्ज्याघोषणैः ककुभो दिशः परिपूरयन्ति मुखरयन्तीत्यर्थः तथा कौक्षेयकान् खड्गान् कुक्षौ भव इत्यर्थे 'कुलकुक्षिग्रीवाभ्यः श्वास्यलंकारेषु' इति ढकञ् प्रोञ्छन्ति मार्जन्ति, तथैवार्धे कराः पुनः चित्रफलके चित्रलेखनार्हे फलके तत् वैदेह्याः कुचकुम्भयोः पत्ररचनायाः मकर्यादिरचनाविशेषस्य चातुर्यं पाण्डित्यं अभ्यस्यन्ति शिक्षन्ते ॥ १७ ॥

परिस्पन्दमुद्रा आग्रहः। गुल्मे सेनारक्षणे नियुक्तं बलं (सैन्यं) गौल्मिकबलं 'तत्र नियुक्तः' इति ठक् 'गुल्मः स्तम्बे प्लीह्नि घट्टसैन्ययोः सैन्यरक्षणे।' इति विश्वः गोपुरस्य पुरद्वारस्य गौल्मिकबलं तस्याध्यक्ष इति समासः शौल्किकेति पाठे शुल्कादागतं शौल्किकं 'ठगायस्थानेभ्यः' इति ठक्। व्यावर्त्तध्वमिति—हे सैनिकाः सेनायां समवेताः व्यावर्त्तध्वं पलायनव्यवसायान्निवर्त्तध्वं उद्धुराणामुग्राणां शराणां ज्वालेव मुखं यस्यास्तां अस्त्रमयीमस्त्ररूपां स्वरूपार्थे मयट् देवीं मातरमुपाध्वं भजध्वं (ज्वालामुखीनाम जयदुर्गेति प्रसिद्धं मन्त्रशास्त्रे

**सारणः**—(श्रुत्वा । सहर्षम् । ) आर्य, जातमस्मद्बलानामवलम्बनम् । यदयं प्रतिबुद्धः कुमारः कुम्भकर्णो मेघनादं पुरस्कृत्याभ्यमित्रीणः संवृत्तः ।

**माल्यवान्**—(निश्वस्य । ) स्वस्ति विजयेतां रामलक्ष्मणौ कुम्भकर्णमेघनादौ ।

**शुकः**—(सविषादम् । आत्मगतम् । ) कथमविशिष्टकर्तृकर्मभावमुभयत्र द्विवचनं प्रयुक्तमार्येण ।

**माल्यवान्**—वत्सौ शुकसारणौ, अद्य खल्वियं राक्षसलक्ष्मीः सर्वथा कुम्भकर्णमवष्टभ्य वर्तते । इदं तु न विद्मः ।

अग्रजं वा दशग्रीवमनुजं वा विभीषणम् ।
अन्वयव्यतिरेकाभ्यां वीरः कमभिषेक्ष्यति ॥ १९ ॥

(नेपथ्ये)

मा भैष्टं कमठेन्द्रपन्नगपती कश्चिन्न वैशेषिको
भूमेरद्य भरः पतिः पलभुजामाज्ञापयत्येष वाम् ।

---

तां च जयार्थमुपाध्वमिति ध्वनिः ) प्लवङ्गपशवोऽतितुच्छा वानराः वः पृष्ठानि पश्यन्ति भवतां पलायनादित्यर्थः, तिर्यग्भ्योऽपि भयेन युद्धात्पलायनमनुचितमतो व्यावृत्त्य युद्धार्थमायुधान्यादध्वमिति भावः, तत्र सहायसंपत्तिरपि नेदिष्ठेत्याह शक्रजितो मेघनादस्य चेतः कर्तृ लक्ष्मणवधे विषये बद्धोत्सवमुत्सुकमित्यर्थः, तथा मध्यमः पौलस्त्यः कुम्भकर्णश्च स्वमायुधं धृतवान् युद्धोद्यत इत्यर्थः सत्येवं अद्यापि रामाद्भयं काका कथं स्यादित्यर्थः अत्र 'लक्ष्मणवधे' इत्यनेन लक्ष्मणकर्तृकवधे 'रामाद्भयं धृतवान्' इति च ध्वनिः ॥ १८ ॥

अमित्रं शत्रुं लक्षीकृत्याभ्यमित्रं 'लक्षणेनाभिप्रती आभिमुख्ये' इत्यव्ययीभावः अभ्यमित्रमलंगाम्यभ्यमित्रीणः स्वसामर्थ्येन युद्धार्थं शत्रूणामभिमुखं गच्छन्नित्यर्थः 'अभ्यमित्राच्छ च' चात्खः । अग्रजमिति—वीरः कुम्भकर्णः अन्वयव्यतिरेकाभ्यां स्वस्य भावाभावाभ्यां यथाक्रमं अग्रजं दशग्रीवं वा उतानुजं विभीषणं वा कं कतरमभिषेक्ष्यति इति न विद्म इति संबन्धः, अयं भावः यद्यस्य युद्धोद्यतस्य कुम्भकर्णस्य जयः स्यात्तर्हि रावणस्य जयश्रीः सिद्धैव, यदि तस्य मरणं स्यात्तर्हि सरावणकं सर्वमपि राक्षसबलं हतप्रायमेव ॥ १९ ॥

मा भैष्टमिति—कमठेन्द्रपन्नगपती हे कूर्मराजशेषौ, मा भैष्टं भयं मा कुरुतं पलभुजां एष पतिः राक्षसेन्द्रः वामाज्ञापयति किं तत्तदाह अद्य भूमेः कश्चिद्वैशेषिको विशेषे भवोऽपूर्व इत्यर्थः अध्यात्मादित्वाट्ठञ् भरो न भवतीति शेषः कुतः प्रसक्तिः कुतो वा तद्व्यावृत्तिरित्याशङ्क्य कुम्भकर्णशरीरपतनात्प्रसक्तस्य

**शुकः**—(सहर्षम् ।) नूनमस्मदीयैर्विशेषेण किमपि विक्रान्तम् ।

(माल्यवानवधत्ते ।)

(पुनर्नेपथ्ये ।)

**दोःशैलौ हरता पृथक्पृथगधो मूर्धानमुत्क्षिप्नुना ।**
**रामेणापि लघूकृतं पतति यत्तत्कौम्भकर्णं वपुः ॥ २० ॥**

**माल्यवान्**—हा वत्स, (इति मूर्च्छितः पतति ।)

**शुकसारणौ**—(सास्रम् ।) आर्य, समाश्वसिहि समाश्वसिहि ।

**माल्यवान्**—(समाश्वस्य ।) वत्स, जीवतो रामस्य मैथिलीहरणादेतदस्माभिरान्तरेण चक्षुषा विषयीकृतमेव किमिदानीमाश्वसितव्यमस्ति ।

**सारणः**—धिक्कष्टम् । 'कौम्भकर्णं वपुः पतति' इत्येतदपि देवेनाज्ञापयितव्यम् ।

**माल्यवान्**—नेयं रावणाज्ञा । नूनमन्येषां वैहासिकाः कपयो दशकण्ठमुल्लुण्ठयन्ति ।

**सारणः**—आः क्षुद्राः ।

**यद्यस्ति वीर्यमस्त्येव कर्मैव कथयिष्यति ।**
**मेघनादमजित्वैव धिक्प्रहासविभीषिकाम् ॥ २१ ॥**

---

व्यावृत्तौ हेतुमाह यद्यतो हेतोःतदतिदुर्भरं कौम्भकर्णं कुम्भकर्णसंबन्धि वपुः शरीरं कर्तृ दोःशैलौ पर्वतकल्पौ भुजौ पृथक्पृथक् प्रत्येकं अधो हरता पातयता तथा मूर्धानं शिरः उत्क्षिप्नुना उत्कृत्य बाणैर्मुहुर्मुहुरुन्नयता 'त्रसिगृधिधृषिक्षिपेः क्नुः' रामेणापि अपिरेवार्थे लघूकृतं अलघु लघुत्वेन संपद्यमानं कृतं सत् व्यपनीतगौरवमित्यर्थः 'च्वौ च' इति दीर्घः पतति, दृष्टचरमेव हि लोके वेगेन पततो वस्तुनो गौरवं तद्वेगभङ्गे लाघवं चातो मा भैष्टमित्यर्थः ॥ २० ॥

आन्तरेण चक्षुषा बुद्ध्या। वैहासिकाः परिहासकारिणः। उल्लुण्ठयन्त्युपहसन्ति। यदीति—हे क्षुद्रा अल्पाः वीर्यं पौरुषं यद्यस्ति युष्माकं विद्यते चेत्तर्हि अस्त्येव सिद्धत्वात्तस्य तेनान्यपरिहसनमयुक्तमित्यर्थः ननु तत्सत्ताप्रकाशनार्थमिति चेत्तस्य नायमुपायोऽपितु तदनुष्ठानमेवेत्याह कर्म विक्रमणमेव कथयिष्यति वीरत्वं ख्यापयिष्यति, ननु दर्शितं तच्च कुम्भकर्णे इत्याशङ्क्य नायं प्रधानभूतोऽपितिन्द्राजिदेवेत्याह मेघनादमिन्द्रजितं अजित्वैव प्रहासविभीषिकां परिहसनरूपभयोत्पादनं धिक् निन्द्यमित्यर्थः ॥ २१ ॥

(नेपथ्ये ।)

भो भो यूथपतयः, विलुम्पन्तु भवन्तो लङ्कापुरगोपुरप्राकारतोरणानि ।

सन्नद्धेन्द्रायुधमविरलारम्भगीर्वाणबाण-
श्रेणीवर्षं तदवजगृहे येन दुष्टग्रहेण ।

**माल्यवान्**— (सोद्वेगम् ।) किमनेन श्रावयितव्योऽस्मि । (इति कर्णौ पिदधाति ।)

(पुनर्नेपथ्ये ।)

इष्ट्वा कांचित्प्रहरणमयीं वीरयज्वानमिष्टिं
दिष्ट्या सोऽयं समुपशमितः शक्रजिल्लक्ष्मणेन ॥ २२ ॥

**माल्यवान्**— सत्योऽयम् 'अतिदुःखो निर्दुःखः' इति लोकप्रवादः । यथा— एतस्मिन्नपि समूलघातं निघ्नति दैवव्यतिकरे तथैवाश्वसिमः ।

**शुकः**— [ऊर्ध्वमवलोक्य ।] यथा समन्तादमूरम्बरचरविमानवीथयः ककुभां मुखानि पर्यवष्टभ्नुवन्ति । तथा शङ्के दुर्वारदारुणक्रोधवडवानलपीयमानशोकसमुद्रो दाशरथिविजयाय संनह्यते देवः ।

**माल्यवान्**—(उत्थाय ।) तस्मादस्माभिरपि जरसा दूषितस्यात्मनः प्रक्षालनाय प्राप्तं शस्त्रधारातीर्थम् । (इति सशुकसारणो निष्क्रान्तः ।)

(शुद्धविष्कम्भः ।)

---

संनद्धेति— येन दुष्टग्रहेण अङ्गारकधूमकेत्वादिना वर्षप्रतिबन्धकेन क्रूरखेचरेण दुराग्रहेण येन राक्षसेन च कर्त्रा संनद्धं सज्जं इन्द्रायुधमिन्द्रधनुर्यस्मिंस्तत् तदतिप्रसिद्धं अविरलारम्भाणां निबिडमुद्यतानां गीर्वाणानां देवानां बाणश्रेणीनां वर्षं वर्षणं कर्म अवजगृहे प्रतिबद्धमभूत् सोऽयं शक्रजिदिन्द्रजित् वर्षणोद्युक्तेन्द्रव्यापारप्रतिबन्धकृत्क्रूरग्रहश्च कर्म प्रहरणमयीमायुधरूपां कारीरीरूपां च वीरो यज्वा यस्यां तां 'अनो बहुव्रीहेः' इति ङीप्निषेधः, कांचिदिष्टिमिष्ट्वा 'कारीर्या यजेत वृष्टिकामः' इति श्रुतेस्तादृशीमिष्टिं कृत्वेत्यर्थः, लक्ष्मणेन कर्त्रा यजमानेनेत्यर्थः दिष्ट्या तदवग्रहशोषिणां जीवानामदृष्टवशात् समुपशमितः अवग्रहणकर्मणो व्यावर्त्तितो मारितश्च ॥ २२ ॥

समूलघातं निघ्नति मूलेन सह नाशयति 'समूलाकृतजीवेषु हन्कृञ्ग्रहः' इति णमुल् । दैवव्यतिकरे कर्मदुर्विपाके । एवं वधादिवर्णनाद्विद्रवाख्यं विमर्शसन्ध्यङ्गमुक्तं 'विद्रवो वधबन्धादि' इति तल्लक्षणात् । पर्यवष्टभ्नुवन्ति सर्वतो व्याप्रियन्ते । जरसेत्यादि अतीव दीर्घायुषामत एव

(ततः प्रविशत्याकाशयानेन विद्याधरद्वयम्)

एकः—अहो, बहोः कालादनया गगनवीथ्या निरातङ्कमिव संचरावहे ।
(अधोऽवलोक्य च ।)

देवेन्द्रोपनिवेद्यनन्दनवनस्रक्तोरणश्लाघिनी
लङ्केयं दशकण्ठविक्रमसखी यस्यां समन्तादिमाः ।
युद्धालोकनकौतुकोन्मुखवधूसंकीर्णकर्णीरथा
रथ्याः किं कथयामि मान्ति यदमी न व्योम्नि वैमानिकाः ॥२३॥

(सखेदाद्भुतं च ।) सखे हेमाङ्गद,

एताः पश्य पलाशपत्तनभुवः सौत्रामणीनां दृशा-
मस्राम्भोभिरदेवमातृकगृहारामाभिरामश्रियः ।

---

बहुविधं दुःखमनुभवतामस्माकं युद्धे प्रहरणपातोपायं विना मरणस्योपायान्तरं नास्ति दुःखितजीवनान्मरणं वरमिति न्यायेनाहमपि युद्धाय यतिष्य इत्यर्थः । युद्धस्य नाटके प्रत्यक्षनिर्देशस्य प्रतिषेधाद्विद्याधरद्वारा तत्कथयितुमाह तत इत्यादि । आकाशयानेन विमानेन । गगनवीथ्या आकाशमार्गेण । संचरामह इति । 'समस्तृतीयायुक्तात्' इत्यात्मनेपदम् । देवेन्द्रेति—देवेन्द्रेण उपनिवेद्यानां भोक्तुं योग्यानां यद्वा उपनिवेद्यानां स्वयमेवाहृत्योपदाकृतानां ('कृत्यल्युटो बहुलम्' इति कर्मणि कृत्यः) नन्दनवनस्य स्रजां माल्यानां तोरणेन वितानेन श्लाघिनी श्लाघावती अत एव दशकण्ठविक्रमस्य इन्द्रादिविजयनिमित्तस्य रावणपौरुषस्य सखी साक्षिभूतेत्यर्थः, इयं लङ्का दृश्यत इति शेषः, यस्यां लङ्कायां इमा रथ्याः राजवीथ्यः समन्तात्सर्वतः युद्धस्य रामरावणीयस्यालोकने दर्शने कौतुकेनौत्सुक्येन उन्मुखीभिरभिमुखमागच्छन्तीभिः वधूभिः राक्षसीभिः संकीर्णा निबिडाः कर्णीरथाः पुरुषस्कन्धवाह्या डोलाख्ययानविशेषा यासु ताः 'कर्णीरथः प्रवहणं डयनं च समं त्रयम् ।' इत्यमरः किं कथयामि न मान्तीति कथं वर्णयामि, तत्र कैमुतिकन्यायमाह यद्यस्मात् युद्धालोकनकौतुकोन्मुखा इत्यनुवर्तते एवंभूता वैमानिका देवाः विमानशब्दाच्चरतीति ठक् व्योम्नि अतिविस्तीर्णे आकाशेऽपि न मान्ति अवस्थातुमप्यवकाशं न लभन्त इत्यर्थः तस्मात्किमु वक्तव्यं परिच्छिन्नावकाशा लङ्कापुरवीथ्यो न मान्तीति भावः ॥ २३ ॥

एता इति—सौत्रामणीनामिन्द्रसंबन्धिनीनां दृशामक्ष्णां अस्राम्भोभिर-

एतासु प्रतिजाति विक्रमकथोपालम्भवैतण्डिकैः
कॢप्तेन्द्रध्वजिनीजयानुकृतिभिर्डिम्भैरपि क्रीडितम् ॥ २४ ॥

हेमाङ्गदः—सखे रत्नचूड, किमुच्यते ॥

रक्षांसीति पुरापि संशृणुमहे वीरस्तु कस्तादृशो
जागर्ति स्म जगत्त्रयीविपदलंकर्मीणदोर्विक्रमः।
शश्वद्द्वारभुवि प्रशस्तिरचनावर्ण्यमानेक्षण-
श्रेणीसंभृतगोत्रभिन्मयजयस्तम्भो यथा रावणः ॥ २५ ॥

---

श्रुजलैः अदेवमातृकाः देवमातृकभिन्ना नदीजलपुष्टा इत्यर्थः, तैर्गृहारामैर्निष्कुटैर-भिरामा रम्या श्रीः शोभा यासां ताः 'गृहारामस्तु निष्कुटः' इत्यमरः एताः पलाशपत्तनभुवो राक्षसनगरीप्रदेशान् पश्य, प्रतिजाति जातौ जातौ वीप्सायामव्ययीभावः उभयपक्षसमाने दोषे एकतरेणान्यतरं प्रति चोदनं जातिनामा दोषो नैयायिकसमयदृष्टः तस्याश्च साधर्म्यादिचतुर्विंशतिभेदभिन्नत्वात्तासु सर्वास्वपीत्यर्थः विक्रमकथायाः पौरुषरूपस्य नानावक्तृकवादादिदक्षवाक्यसंदर्भस्य उपालम्भे निग्रहे वैतण्डिकैः परपक्षनिराकरणमात्रकुशलैः तत्रसाध्वधिकारे वितण्डाशब्दात्कथादिठक् यथा जातित्वेन चोदयन्वादी वितण्डयैव निगृह्यते न तु तत्र स्वपक्षस्थापनापेक्ष्यत एवं स्वरक्षणासमर्थेष्विन्द्रादिषु स्वपौरुषं प्रकटयन्ति नतूभयत्रशक्तेषु वालिहैहयादिष्विति भावः, अत एव कॢप्ता रचिता इन्द्रध्वजिनीजयस्य मेघनादादिकर्तृकस्येन्द्रसैन्यकर्मकस्यपराजयस्यानुकृतिर्बालक्रीडासु तद्वदाचरणं यैस्तैर्डिम्भैर्बालैरपि एतासु पत्तनभूषु क्रीडितं विहृतम् ॥ २४ ॥

रक्षांसीति—रक्षांसि राक्षसाः सन्तीति शेषः पुरापि पूर्वस्मिन्नपि काले संशृणुमहे वयं श्रुतवन्तः 'रक्षाँसि ह वा पुरोऽनुवाके' इत्यादिश्रुतिवाक्येभ्य इति शेषः समोगम्यृच्छिभ्यामिति सूत्रे 'अर्त्तिश्रुदृशिभ्यश्च' इत्युपसंख्यानात्समुपसृष्टाच्छृणोतेस्तङ् ननूक्तसूत्रस्याकर्मकाधिकारकत्वात्प्रकृते च 'रक्षांसीति' इत्यन्तस्य वाक्यस्य च कर्मत्वात्कथं रूपसिद्धिरिति चेदित्यन्तस्य वाक्यस्य श्रुतिवाक्यं प्रत्येव कर्मत्वमिति वदन्नचइति न तु शृणोतिक्रियां प्रतीत्यतो न दोषः, अत एव हि 'अध्याहारो वा इति कथयन्नग्रः' इति सिद्धान्तकौमुद्यां समाहितम्। 'पुरि लुङ्चास्मे' इति स्वाकूते लट्। जगत्त्रय्याः लोकत्रयस्य विपदि बाधायां विषये अलंकर्मीणः समर्थ इत्यर्थः दोर्विक्रमो बाहुबलं यस्य सः 'अषडक्षाशितंगु' इत्यादिना अलंकर्मशब्दात्स्वार्थिकः खः तादृशः को वीरो

**रत्नचूडः**—सखे, पश्य पश्य, पौलस्त्यपत्तनप्रतोलीषु दीर्यमाणे संनाहपटहे ।

दिग्दन्तावलदन्तमौक्तिकमयद्वास्तोरणस्रग्विणो
गीर्वाणाधिपतिप्रतीष्टनिगलोन्मृष्टान्यबन्दीशुचः ।
वीरश्रीसहपांसुकेलिसुहृदो मन्दोदरीबन्धुता-
शौण्डीरासुरसुन्दरीसुरभयः क्षुभ्यन्ति रक्षोगृहाः ॥ २६ ॥

**हेमाङ्गदः**—[ विहस्य । ] नूनमिदानीमत्र ।

दृष्ट्वा राघवमेकराक्षसवनस्वच्छन्ददावानलं
जानक्यां निजवल्लभस्य परमप्रेमाणमालोक्य च ।

---

जागर्ति स्म राक्षसेषु मध्येऽप्रतिभटत्वेनावर्त्तत, यथा येन प्रकारेण रावणः शश्वन्नित्यं द्वारभुवि स्वगृहद्वारप्रदेशे प्रशस्तिरचनावर्णायमानया स्वख्यातिविन्यासाक्षरवदाचरन्त्या ईक्षणश्रेण्या नेत्रपङ्क्त्या संभृतः संपादितः गोत्राभिन्मय इन्द्ररूपो जयस्तम्भो यस्य तथाभूतः सन् यादृशो जागर्त्ति द्वारदेशैकशरणीकृतेन्द्रः कोवाऽवर्तिष्ठेति संबन्धः ॥ २५ ॥

प्रतोलीषु रथ्यासु । दिगिति—दिग्दन्तावलानां दिग्गजानाम् 'दन्तशिखात्संज्ञायाम्' इति दन्तशब्दान्मत्वर्थीयो वलच् 'वले' इति दन्तशब्दस्य दीर्घः दन्तानां मौक्तिकमयैर्मुक्ताफलरूपैः द्वास्तोरणैर्द्वारवितानैः स्रग्विणो माल्यवन्तोऽलंकृता इत्यर्थः, 'अस्मायामेधास्रजो विनिः' इति स्रक्शब्दान्मत्वर्थीयो विनिः, गीर्वाणाधिपतिनेन्द्रेण प्रतीष्टेनाङ्गीकृतेन निगलेन शृङ्खलया उन्मृष्टा त्याजिता अन्यासां बन्दीनां बद्धानाममरीणां शुक् बन्धननिमित्तं दुःखं येषु ते वीरश्रियो विजयलक्ष्म्याः सहपांसुकेल्यां संहत्य पांसुक्रीडायां सुहृदो मित्राणि नित्यविजयसंपन्ना इत्यर्थः, मन्दोदर्याः बन्धुतया बन्धुत्वेन हेतुना शौण्डीराभिर्गर्विताभिरसुरसुन्दरीभिरसुरस्त्रीभिः सुरभयो वासिताः शोभमाना इत्यर्थः रावणमहिष्या मन्दोदर्या मयासुरपुत्रीत्वेन तत्संबन्धादसुरस्त्रियोऽप्यावसन्तीत्यर्थः एवंभूता रक्षोगृहाः रावणान्तःपुरं क्षुभ्यन्ति संनाहवाद्यघोषश्रवणेन विलोडिता भवन्ति ।२६।

दृष्ट्वेति—मन्दोदरी एकराक्षसवनस्य राक्षसजातिरूपारण्यस्येत्यर्थः स्वच्छन्ददावानलं वाय्वादिसहायान्तरनिरपेक्षारण्याग्निभूतं सर्वराक्षससंहरणदक्षमित्यर्थः दृष्ट्वा कुम्भकर्णादिवधेन प्रत्यक्षतो ज्ञात्वा, तथा निजवल्लभस्य रावणस्य जानक्यां परमं पुत्रादिनाशेऽप्यपरिक्षीणं प्रेमाणं प्रियं चालोक्यात एव मुग्धा उभयत्र स्वानिष्टदर्शनेन मोहं गता सती ततश्च आत्मपक्षस्य विजयं भङ्गं च

काङ्क्षन्ती मुहुरात्मपक्षविजयं भङ्गं च मुग्धा मुहु-
र्धावन्ती मुहुरन्तरालपतिता मन्दोदरी वर्तते ॥ २७ ॥

**रत्नचूडः**— (सकरुणास्मितम् ।) विबुधराजविजयविक्रमक्रीतचेतसा वृद्धपितामहेन स्वयं परमेष्ठिना प्रतिष्ठितेन्द्रजिन्नामधेयस्य तादृशस्तनुजन्मनः शुचा विचेष्टमानामरातिगृहिणीमपि नैवमुपक्षेप्तुमर्हसि । (पुरोऽवलोक्य च ।) हस्तं दक्षिणेन कथमयं द्विधा विभज्यते महाजनः । (निरूप्य । सकौतुकम् ।) सखे, पश्य पश्य ।

न्यञ्चन्न्यञ्चद्धरित्रीधृतचरणभरश्चन्द्रहासैकचित्त-
व्यावल्गद्यौगपद्योद्धृतसकलभुजाक्रान्तदिक्चक्रवालः ।
क्रोधक्रूराक्षिरक्तोत्पलरचितवियत्तोरणस्रञ्जि बिभ्र-
द्वक्त्राणि प्रत्यनीकप्रसरसरभसो निर्जिहीते दशास्यः ॥ २८ ॥

**हेमाङ्गदः**— (निर्वर्ण्य ।)

अहो दृष्टचरमप्यस्य सांग्रामिकमोजायितमयातयाममिव विभीषयते । सखे रत्नचूड,

मरुत्वद्दम्भोलिक्षणघटितघोरश्वयथुना
निसर्गोदग्रेण प्रसभमुरसा पीतगगनः ।

---

मुहुर्मुहुः काङ्क्षन्ती आत्मनो वैधव्यापत्तिशङ्कया सापत्न्यापत्तिशङ्कया च रावणकर्तृकं रावणकर्मकं च विजयं पदेपदे प्रार्थयमाना सती मुहुर्धावन्ती तादर्थ्येनेतश्चेतश्च गच्छन्ती सती अन्तरालपतिता वर्तते जयापजययोरुदासीना भवतीत्यर्थः २७

उपक्षेप्तुं निन्दितुं परिहसितुं वा । हस्तं दक्षिणेनेतिलोकोक्तिः **न्यञ्चदिति**— दशास्यो रावणः न्यञ्चन्त्यातीव भुग्नतां व्रजन्त्या (वीप्सायां द्विरुक्तिः) धरित्र्या भुवा धृतः कथंचिदूढः चरणानां भरो यस्य सः चन्द्रहासे खड्गविशेषे एकचित्ताभिस्तद्ग्रहणैकव्यग्राभिरित्यर्थः अतश्च व्यावल्गन्तीभिस्त्वरमाणाभिः यौगपद्येन समकालमुद्धताभिर्व्याप्रियमाणाभिः सकलभुजाभिर्विंशत्या बाहुभिः आक्रान्तं व्याप्तं दिशां चक्रवालं मण्डलं येन तथाभूतः सन् वक्त्राणि मुखानि क्रोधेन स्वपुत्रभ्रात्रादिवधजनितकोपेन क्रूरैः रौद्रैरक्षिभिश्चक्षुर्भिर्विंशत्यैव रचिताः वियत आकाशस्य तोरणस्रजो यैस्तथाभूतानि बिभ्रद्दधानः सन् प्रत्यनीकस्य शत्रुसैन्यस्य प्रसरे गमने सरभसः ससंभ्रमः सन् निर्जिहीते युद्धार्थं निर्गच्छति ॥ २८ ॥

सांग्रामिकं युद्धक्षमम् 'तस्मै प्रभवति' इत्यादिना ठक् अयातयाममपर्युषितमपूर्वमित्यर्थः । **मरुत्वदिति** । मरुत्वत इन्द्रस्य (मरुतः प्रसिद्धा

श्रियं देवद्रीचीं निजभुजवनोद्दामकरिणी-
मयं कुर्वन् वीरः स्मरसि कथमासीद्दशमुखः ॥ २९ ॥

**रत्नचूडः**— सखे, किमुच्यते । महतामप्युपरि किमप्ययं रावणः ।

एनं कल्पतरूद्भवैरसुकरव्याजैः सदा भूषणै-
राराध्नोति सुराधिपः किमपरं दीनो नदीनां पतिः ।
दण्डाधिक्यभयात्कथं कथमपि स्कन्धोपनेयान्मणी-
नप्यस्मै परिशोधयत्यपदिशन्निःसंपदः स्वाकरान् ॥ ३० ॥

**हेमाङ्गदः**— कथमयं परावर्त्तित एव समरहर्षहेषमाणवनायुजवाजिनिवह-
वितीर्णकीनाशकासरकर्णज्वरेण मजविना रथेन कार्मुकपाणिर्महावीरः ।

---

वस्वादिदेवाः सप्तमरुतो वा सन्त्यस्येति मतुपि 'झयः' इति मो वे 'त सौ मत्वर्थे' इति भत्वान्नजश्त्वम् ) दम्भोलिना वज्रेण क्षणं क्षणमात्रं घटितः संयोजितः घोरः भयंकरः श्वयथुः शोभो यस्य तेन 'टु ओ श्वि गतिवृद्धयोः' इति धातोः 'ट्वितोऽथुच्' 'समरविजयी हेतिदलितः' इति न्यायेन सोऽन्द्रवज्र-प्रहारेणेत्यर्थः निसर्गेण स्वभावत एव उदग्रेण कर्कशेन उरसा वक्षसा पीतगग-नोऽतिविशालवक्षा इत्यर्थः, अयं वीरो दशमुखः देवद्रीचीं देवसंबन्धिनीं देवान-ञ्चतीति विग्रहे 'विष्वग्देवयोश्च' इत्यादिना टेरद्र्यादेशः श्रियं निजभुजानामेव वनस्य उद्दामकरिणीं मदहस्तिनीं तत्रैव नित्यविहारामित्यर्थः कुर्वन् सन् किमा-सीद्युद्धे कथमवर्तत स्मरसि ॥ २९ ॥

**एनमिति**— सुराधिपः इन्द्रः कल्पतरुभ्यः सन्तानादिकल्पवृक्षेभ्य उद्भव उत्पत्तिर्येषां तैः अत एवासुकरव्याजैर्दुर्लभ्यप्रसिद्धिविशिष्टैः दुर्लभानीमानि प्रयत्नार्जितानीतीन्द्रेण व्यपदिष्टैर्वा भूषणैः सदा सर्वस्मिन्नपि काले एनं रावणं आराध्नोति प्रसादयति किमपरं वक्तव्यमिति शेषः, नदीनांपतिः समुद्रोऽपि दण्ड-स्य निग्रहस्याधिक्यभयात्स्वस्मिन्नतितरां पातशङ्कया दीनः खिन्नः सन् अत एव स्वाकरान् स्वकीयानि रत्नोत्पत्तिस्थानानि निःसंपदः रत्नरहितान् अपदिशन् व्या-जीकुर्वन् सन् कथं कथमप्यतिप्रयत्नेन स्कन्धेन उपनेयानाहर्तुं योग्यानतिस्थूला-मित्यर्थः मणीन्मूलधनभूतानि रत्नान्यपि अस्मै रावणाय परिशोधयत्यात्मनीतोऽ-न्यन्न किंचिदप्यस्तीति शोधनपूर्वकमर्पयति ॥ ३० ॥ परावर्त्तित आगतः । समरह-र्षेण युद्धसंतोषेण हेषमाणानां शब्दायमानानां वनायुजानां देशविशेषोत्पन्नानां वाजिनामश्वानां निवहेन समूहेन वितीर्णो दत्तः कीनाशकासरस्य यममहिषस्य

**रत्नचूडः**— ( सभयाद्भुतम् ।)

कल्पान्तक्रूरसूरोत्करविकटमुखो मानुषद्वन्द्वयुद्ध-
क्रीडाकण्डूयदूर्जस्वलसकलभुजालोकभूयोविलक्षः ।
संभूयोत्तिष्ठमानस्वपरबलमहाशस्त्रसंपातभीमा-
मुर्वीं गीर्वाणगोष्ठीगुरुमदनिकषो नैकशेषां विधत्ते ॥ ३१ ॥

**हेमाङ्गदः**— ( सकौतुकम् । ) सखे, दक्षिणतः पश्य तावत् ।

अगस्त्याज्ञासद्यःशमितविकलोच्छ्रायविषमा-
नुदस्यन्तः सेतोरगलितवतो विन्ध्यशिखरान् ।
शिरःसंख्यासत्यापितदशमुखालोकरभसा-
दपेत्याभित्रस्ताश्चपलमपसर्पन्ति कपयः ॥ ३२ ॥

---

कर्णज्वरः कर्णव्यथा यस्य तेन युद्धभूमौ रावणरथालोकनेन तच्छत्रुवधं सिद्धप्रायं मत्वा तदानयनार्थं मृत्युर्महिषारूढ आयाति स महिषो स्वविरोधिनां रावणरथ्याश्वानां शब्देन व्याकुलीभवतीत्यर्थः एवं महाबली रावण इति तात्पर्यार्थः । 'कृतान्ते पुंसि कीनाशः क्षुद्रकर्षकयोस्त्रिषु ।' इत्यमरः । कल्पान्तेति—गीर्वाणगोष्ठ्या देवसमूहस्य गुरोराधिकस्य मदस्य गर्वस्य निकषः शाणभूतो निर्धारक इत्यर्थः रावणः कल्पान्ते प्रलयावसरे क्रूरस्यातितीक्ष्णस्य सूरस्य सूर्यस्य उत्करवत्समूहवद्द्वादशादित्यवदित्यर्थः, विकटानि भीषणानि मुखानि यस्य तथाभूतःसन् मानुषस्य मनुष्यस्य द्वन्द्वयुद्धक्रीडायां कण्डूयतां कण्डूविशिष्टानां ऊर्जस्वलानां प्रशस्तबलानां सकलभुजानां विंशतेर्बाहूनां आलोकेन दर्शनेन भूयो बहूतरं विलक्षो लज्जितः सन् स्वाहारभूतनरकर्तृकस्वजनवधेनैव पूर्वं लज्जित इदानीं तु स्वभुजानामपि तद्युद्धौत्सुक्येनातितरां लज्जित इत्यर्थः संभूयैकीभूय उत्तिष्ठमानानां युद्धार्थं प्रयतमानानां स्वपरबलानां स्वसैन्यानां शत्रुसैन्यानां च महता शस्त्रसंपातेन प्रहरणसंमर्देन भीमां भयानकामुर्वीं भुवं नैकशेषां विधत्ते स्वप्रहरणसंपातैः सर्वतो व्याकीर्णां करोतीत्यर्थः ॥ ३१ ॥

**अगस्त्येति**—कपयो वानराः अगस्त्यस्य आज्ञया 'पुनर्मदागमनपर्यन्तमनुच्छ्रूत एव वर्तस्व' इत्यादेशेन सद्यस्तत्क्षणमेव शमितानौद्धत्यशान्तिं नीतान् अत एव विकलोच्छ्रायानौन्नत्यरहितान् ततश्च विषमान्निम्नोन्नतान् अगलितवतो नलहस्तवैभवेन सामुद्रे जलेऽमग्नान् विन्ध्यस्य शिखरान् शृङ्गाणि ( अर्धर्चादित्वाच्छिखरशब्दस्य पुंस्त्वमपि ) सेतोः सेतुबन्धनात् उदस्यन्तः प्रहरणार्थमुद्धरन्तः सन्तः शिरसां संख्यया दशकेन सत्यापितस्य निश्चितस्येत्यर्थः दशमुखस्य राव-

**रत्नचूडः**— ( सहर्षम् । )

शस्त्रीकृतान् कपिभिरापततो मुदैव विक्रम्य चन्दनतरून्दधते पलादाः ।
तत्सङ्गिनस्तु भुजगाः क्षणपाशबन्धदुःखासिकामवयवेषु दिशन्त्यमीषाम् ३३

**हेमाङ्गदः**— इतोऽपि तावत् ।

रक्षःस्वयंवरविडम्बपराङ्मुखीभिः पुष्पोत्करे सुरवधूभिरनुज्झितेऽपि ।
शस्त्रीकृतेन तरुणा हरिणा हतोऽसौ नक्तंचरः स्वपिति तत्कुसुमावकीर्णः ॥

**रत्नचूडः**— ( चिरं विहस्य । ) सखे हेमाङ्गद,

स्वतनुरुचिभिर्दीर्घाह्नीं द्यामितः सृजतां निजै-
रथ विदधतः कायाभोगैरकाण्डतमस्विनीम् ।

---

णस्य आलोकरभसाद्दर्शनकुतूहलेन 'रभसो वेगहर्षयोः' इति विश्वः सत्यंकरोत्याचष्टेवेत्यर्थे 'सत्यापपाश' इत्यादिना सत्यशब्दात्सापुङ्णिः सत्याकृतेति पाठेप्ययमेवार्थः 'सत्यादशपथे' इति डाच् उपेत्य रावणसमीपं प्राप्य अभित्रस्तास्तद्दर्शनेनैवातीव भीताः सन्तः चपलं त्वरया 'सत्वरं चपलं तूर्णम्' इत्यमरः अपसर्पन्ति दूरमपक्रामन्ति ॥ ३२ ॥

शस्त्रीकृतानिति—पलं मांसमदन्तीति पलादा राक्षसाः 'कर्मण्यण्' कपिभिर्वानरैः शस्त्रीकृतान् प्रहरणत्वेनोपयुक्तान् आपततोऽभिमुखं पततश्च चन्दनतरून् चन्दनवृक्षान् मुदा कुतूहलेनैव नतु भिया विक्रम्योत्प्लुत्य दधते हस्तेन गृह्णन्ति, तत्सङ्गिनश्चन्दनवृक्षस्थाः भुजगा सर्पास्तु अमीषां राक्षसानामवयवेष्वङ्गेषु क्षणं क्षणमात्रं पाशबन्धेन रज्जुवद्वेष्टनेन दुःखासिकां दौरवस्थ्यं 'धात्वर्थनिर्देशे ण्वुल्वक्तव्यः' इत्यासेर्ण्वुल् । दिशन्ति ददति वानरप्रयुक्तवृक्षाणामकिंचित्करत्वेऽपि तद्गतसर्पै राक्षसानां क्षणं पीडा जायत इति भावः ॥ ३३ ॥

रक्ष इति—रक्षसो राक्षसस्य स्वयंवरे, आत्मनो नायकत्वेन वरणे विडम्बेन जुगुप्सया पराङ्मुखीभिः पुष्पवर्षमकुर्वाणाभिः सुरवधूभिरप्सरोभिः पुष्पोत्करे वरणार्थपुष्पसमूहे अनुज्झितेऽमुक्तेऽपि असौ नक्तंचरो राक्षसः हरिणा वानरेण ( कर्त्रा ) शस्त्रीकृतेन प्रहरणीकृतेन तरुणा वृक्षेण ( करणेन ) हतस्ताडितः सन् तस्य शस्त्रीकृतवृक्षस्य कुसुमैः पुष्पैः अवकीर्णो विक्षिप्तः सन् स्वपिति युद्धभूमौ शेते 'रुदादिभ्यः सार्वधातुके' इतीट् ॥ ३४ ॥

स्वेति—अमी रजनीचराः राक्षसाः इतोऽस्मिन् भागे द्यामाकाशं स्वतनूनां स्वशरीराणां रुचिभिः कान्तिभिः दीर्घाह्नीमायतदिवसां सृजतां विदधतां

दधति नितरामुद्दीप्राणामधश्छिदुरश्रियो
हरिहुतभुजां धूमच्छायाममी रजनीचराः ॥ ३५ ॥

**हेमाङ्गदः**— ( सस्मितम्। ) सखे,

किमपि कपयः कर्माश्चर्यं महातरुशस्त्रिणो
विदधति तथा दिक्कूलेभ्यो यथापसरन्त्यमूः।
ध्रुवमवपतद्रक्षःश्रेणीविमुक्तनभोऽन्तर-
प्रतिभरणिकानिःस्थामानो दशाननकीर्तयः ॥ ३६ ॥

स्वदेहच्छाययाऽऽकाशं प्रकाशयतां वानराणामित्यर्थः एतेन सूर्यत्वेन रूपणं ध्वनितम्, दीर्घान्यहान्यस्यामिति विग्रहे 'अल्लोपोऽनः' इत्यल्लोपो नान्तलक्षणो ङीप् च निजैः कायस्य शरीरस्याभोगैः पूर्णतया 'आभोगोवरुणच्छत्रे पूर्णताय-त्नयोरपि।' इति विश्वः अकाण्डेऽनवसरे तमस्विनीं निविडतमोविशिष्टां अथ साकल्येन विदधतः कुर्वाणाः सन्तः माषवर्णत्वात्तत्कायस्य तद्व्याप्त्या तमोऽन्या-मिवाकाशं कुर्वाणाः सन्त इत्यर्थः तथा अधः पृथ्व्यां नितरामुद्दीप्राणामतितरां शोभमानानां हरिहुतभुजां वानररूपाग्नीनां छिदुरश्रियो छेदनशीलकान्तय आ-वरणस्वभावाः कुटिलाकारा वा सन्तः 'विदिभिदिच्छिदेः कुरच्' धूमस्य छायां शोभां दधति बिभ्रति भूमिष्ठानां दीप्यमानानां वानराणामूर्ध्वं पारिप्लवानां नील-वर्णानां राक्षसानां चाग्निधूमवद्भानात्तथा रूपणम्। एवं च यथादित्याग्न्योर्लोका-नर्थहेतुकतमोधूमविरुद्धस्वभावत्वेन लोकोपकारार्थत्वमेवमनर्थास्पदराक्षसनिग्रहान्म-हार्थसाधकत्वं वानराणामिति फलितार्थः ॥ ३५ ॥

**किमिति**—कपयो वानराः महातरुशस्त्रिणो महतो वृक्षान् प्रहरणीकुर्व-न्तः सन्तः तथा तेन प्रकारेण किमप्याश्चर्यमतीवाश्चर्यभूतं कर्म विदधति कुर्वन्ति, यथा येन प्रकारेण अमूर्दशाननस्य रावणस्य कीर्तयः ध्रुवं निश्चयेन अवपततां वानरकर्तृकवृक्षप्रहारेण भुवि निपततां रक्षसां राक्षसानां श्रेण्या पङ्क्त्या विमुक्ता नभोन्तरस्याकाशमध्यस्य प्रतिभरणिका स्वव्यापरणयोग्यापूरणक्रिया यासां तथाभूताः सत्यः अत एव निःस्थामानो दुर्बला उत्तानस्थानेषु स्थातुमशक्नुवत्यः सत्य इत्यर्थः दिक्कूलेभ्यो दिक्तटेभ्योऽपसरन्ति, निम्नभूतं मध्यस्थानमागच्छन्ति संकुचिता भवन्तीत्यर्थः यथा हि सर्वतोव्यापि तडाकस्थं जलं निम्नस्थानस्थजल-शोषारम्भे उत्तानतो मध्यप्रदेशं प्राप्य संकुचितो भवत्येवं सर्वतोदिक्का रावणकी-र्तिस्तद्धेतुभूतसर्वराक्षसंहारे संकुचिताभवतीत्यर्थः ॥ ३६ ॥

**रत्नचूडः**— (ससम्भ्रमम् ।) अहह दारुणमुपस्थितम् ।
रक्षोनिघृष्टकपिमुक्तमहीध्रचूर्णपूर्णान्तराभिरिषुवृष्टिभिरुज्जिहानः ।
रोषाट्टहासदहनप्रसरैस्तडित्वान् लङ्काधिपः किमपि संतमसं तनोति ॥ ३७ ॥
**हेमाङ्गदः**— (क्षणं निर्वर्ण्य ।) अहो क्षुद्रैरपि संभूय भूयोभिरेको महानदुष्करः कदर्थयितुम् । यतः ।

दृप्यद्दिक्पालदन्तावलबहुलमदावग्रहोग्राभिरक्ष्णां
तारभिर्दीप्यमानं दिशि विदिशि दशग्रीवमुद्ग्रीवयन्तः ।
एते निःशेषसेतुग्रथनसमधिकैः शस्त्रिणः शैलवर्गै-
रुद्दामानः कपीन्द्रा रजनिचरपुरीमुत्तरेण प्लवन्ते ॥ ३८ ॥

**रत्नचूडः**— (सविषादम् ।) हन्त महद्विषममिव पश्यामि, यदमी निष्कृपकृपाणयष्टिपात्यमानप्रतिभटोरःकवाटकण्टकितकपोलभित्तयः संतानपातिनीभिरनीकरुधिरधाराभिः प्रवृत्तवीरपाणमहोत्सवाः समन्तादभिद्रवन्ति यातुधानाः प्लवङ्गमपुङ्गवान् ।

---

रक्ष इति—लङ्काधिपो रावणः रक्षोनिघृष्टानां राक्षसनिष्पिष्टानां कपिमुक्तानां महीध्राणां पर्वतानां चूर्णैः शकलैः पूर्णमन्तरं यासां ताभिः वृष्टीनामपि करकोपलविशिष्टत्वदर्शनात्, इषुवृष्टिभिर्बाणवर्षैः सह उज्जिहान आगच्छन्नुद्गच्छंश्च रोषाट्टहासदहनस्य सर्वस्वजननाशनिमित्तककोपोदितोच्चैर्हासरूपाग्नेः प्रसरैर्व्याप्तिभिः तडित्वान् सविद्युत्सन् किमपि संतमसमतिशयितमन्धकारमार्तिं च तनोति विस्तारयति ॥ ३७ ॥

क्षुद्रैरल्पसारैरपि भूयोभिर्बहुतरैः संभूय संहत्य महानतिबलयप्येकः कदर्थयितुमवमन्तुं क्लेशयितुं वा अदुष्करोऽतीव सुकर इत्यर्थः तदेवाह दृप्यादिति—एते कपीन्द्राः दृप्यतां हृप्यतां दिक्पालदन्तावलानां दिग्गजानां बहलस्याधिकस्य मदस्य दानजलस्य अवग्रहेण प्रतिबन्धनेन उग्राभिः क्रूराभिः अक्ष्णां नेत्राणां ताराभिः कनीनिकाभिरङ्गारकादिक्रूरग्रहैश्च दीप्यमानं ज्वलन्तं दशग्रीवं रावणं दिशि विदिशि सर्वत्र चेत्यर्थः उद्ग्रीवयन्त उद्गतग्रीवं कुर्वन्तः सन्तः निःशेषे समग्रे सेतुग्रथने सेतुबन्धे समधिकैरवशिष्टैः शैलवर्गैः पर्वतसमूहैः शस्त्रिणः प्रहरणवन्तः सन्तोऽत एवोद्दामानोऽप्रतिबन्धाः सन्तः रजनिचरपुरीमुत्तरेण लङ्काया उत्तरदिग्भागसमीपे प्लवन्ते उत्प्लुत्याकाशे संचरन्ति ॥ ३८ ॥

विषमं विपरीतम् । निष्कृपं निर्दयं यथा तथा कृपाणयष्टिभिः यष्टि-

**हेमाङ्गदः**— सखे, कृतं विषादेन, यदेषः।

दशमुखशरपीडितापयानोद्यतपरिपुच्छयमानवानराणि
सरभसमभिसान्त्वयन् बलानि द्विषमभियोधयति प्लवङ्गराजः ॥ ३९ ॥

**रत्नचूडः**— (दृष्ट्वा सखेदाद्भुतम्।) अहहं।

अस्त्राणि प्लवगाधिपेन विहिताः पौलस्त्यवक्षस्तटी-
संघट्टानलदत्तदावविपदः सीदन्ति भूमीरुहाः।
उत्पाट्य प्रहितश्च शैलशिखरो लङ्केन्द्रहस्तावली-
पिष्टोऽयं निजकुञ्जनिर्झरजलैर्जम्बालपिण्डायते ॥ ४० ॥

तुलैः खड्गैः पाट्यमानं भिद्यमानं प्रतिभटानां शत्रुयोधानां वानराणां उरः-कवाटं कवाटवद्विस्तीर्णमतिदृढं च वक्षो यैस्तथाभूतास्ततश्च कण्टकिता संजातकण्टका हृषितेति यावत् कपोलभित्तिर्गण्डप्रदेशो येषां ते। सन्तानेनाविच्छेदेन पातिनीभिः पतनशीलाभिः अनीकस्य वानरसैन्यस्य रुधिरधाराभिः रक्तासारैः प्रवृत्तोऽनुष्ठितो वीरपाणस्य समरार्थमद्यपानस्य महोत्सवो यैस्तथाभूताः सन्तः वीराणां पानं वीरपाणम् 'वाभावकरणयोः' इति णत्वम् 'युद्धे यत्क्रियते पानं वीरपाणं तदुच्यते।' इति हारावली। **दशमुखेति**। प्लवङ्गराजः सुग्रीवः दशमुखशरैः रावणबाणैः पीडिता अर्दिता अत एवापयानोद्यताः पलायनाय प्रवृत्ताः ततश्च परिपुच्छयमानाः सर्वतः पुच्छमुदस्यन्तश्च वानरा येषु तानि 'पुच्छभाण्डचीवराण्णिङ्' इति पुच्छशब्दाण्णिङ् 'पुच्छादुदसनेव्यसने पर्यसने च' इति पर्यसने वृत्तिः बलानि सेनाः सरभसं ससंभ्रमं अभिसांत्वयन्नाश्वासयन् सन् द्विषमभियोधयति शत्रुमात्मना युद्धार्थमाभिमुख्येन प्रेरयति 'बुध युध' इत्यादिना परस्मैपदम्। वृत्तं पुष्पिताग्रा ॥ ३९ ॥

**अस्त्राणीति**—भूमीरुहा वृक्षाः (भूमिशब्दात् 'कृदिकारादक्तिनः' इति वा ङीष्) प्लवगाधिपेन सुग्रीवेण अस्त्राणि विहिताः प्रहरणीकृताः सन्तः पौलस्त्यस्य रावणस्य वक्षस्तट्या उरःप्रदेशस्य संघट्टेन संघर्षेण योऽनलोऽग्निस्तेन दत्ता दावविपद्दारण्याग्निकृतविपत्तिर्येभ्यस्तथाभूताः सन्तः 'टुदु उपतापे' इति धातोः 'टुन्योरनुपसर्गे' इति कर्त्तरिणः यद्वा भावे घञ् दत्ता दावविपद्दहनक्रियारूपापद्येभ्यस्तथाभूताः भस्मीकृताः सन्त इत्यर्थः सीदन्ति विशीर्यन्ते अनन्तरमयं शैलशिखरः पर्वतशृङ्गं उत्पाट्य भूमेरुद्धृत्य प्रहितः सुग्रीवेण क्षिप्तः सन् लङ्केन्द्रस्य रावणस्य हस्तावल्या भुजसमूहेन पिष्टश्चूर्णीकृतः सन् निजानां कुञ्जानां

हेमाङ्गदः—(विहस्य सखेदम् ।) दशकंधरमधिकृत्य न किंचिदेतत् ।

तथैतेनोद्धृत्य स्फटिकशिखरी सोऽपि विदधे
समन्तादामूलत्रुटितवसुधाबन्धविधुरः ।
अमुं येनाद्यापि त्रिपुरहरनृत्तव्यतिकरः
पुरस्तादन्येषामपि शिखरिणामुल्लुलयति ॥४१॥

किंचित्तर्कयामि

शस्त्रीकृतस्तरुवरो हरिपुङ्गवेन लङ्केन्द्रवक्षसि मृणालमृदुः पपात ।
तत्र स्थितैस्तु कुसुमैः कुसुमेषुरेनं सीतावियोगविधुरं दृढमाजघान ४२

रत्नचूडः—(विहस्य ।) सखे, किमुच्यते महासत्वतायां रावणः खल्वसौ ।
तथाहि ।

स्वेषूत्कृत्य हुतेषु मूर्धसु जवादग्नेः स्फुटित्वा बहि-
र्व्याकीर्णेष्वलिकेषु देवलिपिभिर्दृष्टापि रामाद्भयम् ।

---

लतादिपिहितोदरप्रदेशानां निर्झराणां झराणां जलैः जम्बालपिण्डायते कर्दमपिण्डवदाचरति ॥ ४० ॥

अधिकृत्य विषयीकृत्य । न किंचिदेतन्नेदमद्भुतम् । तथेति—एतेन रावणेन कर्त्रा स स्फटिकशिखरी कैलासोऽपि समन्तात्सर्वतः आमूलं मूलपर्यन्तं त्रुटितो विशीर्णो वसुधाबन्धो भूसंबन्धकृतो दृढिमा यस्य तथाभूतोऽत एव विधुरः कम्पितः सन् उद्धृत्योत्पाट्य तथा तेन प्रकारेण विदधे कृतः नर्तित इत्यर्थः धाञः कर्मणि लिट्, येन विधानेनाद्यापि दीर्घकाले व्यतीतेऽपीत्यर्थः, त्रिपुरहरस्य शम्भोर्नृत्तव्यतिकरः स्वाश्रयस्य पर्वतस्य चलननिमित्तः स्वगात्रचलनारम्भः अन्येषां शिखरिणां पुरस्तादपि इतरपर्वतेषु पश्यत्स्वपि (स्वजनसमवाये स्वपरिभवस्यातीव व्यथाकरत्वात्तादृशसंदर्भेऽपीत्यर्थः) अमुं कैलासमुल्लुलयति चलयति तथा विदध इति पूर्वेण संबन्धः ॥ ४१ ॥

शस्त्रीकृत इति—हरिपुङ्गवेन सुग्रीवेण शस्त्रीकृतः प्रहरणीकृतस्तरुवरो वृक्षश्रेष्ठः लङ्केन्द्रवक्षसि रावणोरसि मृणालवद्बिसवन्मृदुः सन् पपात व्यथाकरं नासीदित्यर्थः कुसुमेषुर्मन्मथः तत्र शस्त्रीकृतवृक्षे स्थितैः कुसुमैः पुष्पैः सीतायाः वियोगेनाप्राप्तिदुःखेन विधुरं व्याकुलमेनं रावणं दृढमाजघानातीव व्यथयामास ४२

स्वेष्विति—यो रावणः स्वेषु मूर्धसु शिरःसु उत्कृत्य छित्वा हुतेष्वग्नौ प्रक्षिप्तेषु सत्सु जवाच्छीघ्रं अग्नेः स्फुटित्वा विशीर्य बहिर्व्याकीर्णेषु बहिर्दाहेन

चित्तेनास्खलितेन यस्तदधिकं ब्रह्माणमप्रीणय-
त्तस्मै कः प्रथमाय मानिषु महावीराय वैरायते ॥ ४३ ॥

सखे, पश्य पश्य, भयानकमद्भुतं च वर्त्तते ।

विशिखौघविकीर्णगण्डशैले तरुसंचूर्णितशक्तितोमरे च ।
कपिराक्षसराजयोरजस्रं तुमुले भाति तलातलिप्रपञ्चः ॥ ४४ ॥

नूनमिदानीम् ।

श्वासोर्मिप्रतिबन्धतुन्दिलगलप्रच्छिन्नहारावली-
रत्नैरापतयालुभिः कृतफणप्राग्भारभङ्गभ्रमः ।

---

विविधं विक्षिप्तेषु अलिकेषु ललाटेषु 'ललाटमलिकं गोधिः' इत्यमरः देवस्य ब्रह्मणो लिपिभिः स्वायरादिव्यञ्जकवर्णावलिभिः रामाद्भयं मृत्युमिति यावत् दृष्ट्वाऽपि स्वयं वाचयित्वापि अस्खलितेन अचञ्चलेन चित्तेन सह ब्रह्माणं तदधिकं तादृशलिपिदर्शनप्रागवस्थातोऽप्यधिकं यथा तथा अप्रीणयत्संतोषयामास मानिषु निर्धारणे सप्तमी मानवतां मध्ये प्रथमायाग्र्याय तस्मै महावीराय रावणाय कः पुमान् वैरायते वैरं करोति 'शब्दवैर' इत्यादिना क्यङ् ॥ ४३ ॥

**विशिखेति**— विशिखौघैर्बाणसमूहैः विकीर्णाः विक्षिप्ताश्चूर्णिता इत्यर्थः गण्डशैलाः सुग्रीवनन्नाः च्युताः पर्वतस्य स्थूलोपला यस्मिंस्तादृशे 'गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ।' इत्यमरः तरुभिः सुग्रीवप्रयुक्तवृक्षैः संचूर्णितानि शक्तितोमराणि रावणप्रयुक्तायुधविशेषाणि च यस्मिंस्तादृशे तुमुले रोमहर्षणे युद्धे कपिराक्षसराजयोः सुग्रीवरावणयोः अजस्रं निरन्तरं तलातलिप्रपञ्चश्चपेटप्रहारविस्तारः भाति तलैश्च तलैश्च प्रहृत्येदं युद्धं प्रवृत्तमिति तलातलि 'तत्र तेनेदमिति सरूपे' इति समासः 'इच्कर्मव्यतिहारे' इतीच् 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः तिष्ठद्गुप्रभृतिष्विचः पाठादव्ययीभावोऽव्ययत्वं च । अस्यैव व्याख्यान्तरम्, कपिराक्षसराजयोः सुग्रीवे रावणे च यथाक्रमं विशिखौघविकीर्णगण्डशैले, तरुसंचूर्णितशक्तितोमरे च सतीति समानमन्यत् ॥ ४४ ॥

**श्वासेति**— भुजङ्गाधिपः शेषः वानरवीरस्य सुग्रीवस्य विक्रमभरेणाक्रमणभरेण आभुग्न ईषत्कुटिलितग्रीवः सन् अत एव श्वासोर्मीणां श्वासवायुपरंपराणां प्रतिबन्धेन स्वैरसंचारनिरोधेन तुन्दिलाद्वायुपूर्णादित्यर्थः गलाद्ग्रीवातः प्रच्छिन्नानां त्रुटितानां हारावलीनां रत्नैर्मणिभिः अत एवापातयालुभिः शनैः शनैः पतद्भिश्च तैः कृतो दर्शितः फणप्राग्भारस्य फटसहस्रस्य भङ्गभ्रमश्छेदभ्रान्तिर्येन तथाभूतः

श्रोत्राभावनिरन्तरालमिलितैः स्तब्धैः शिरोभिर्भुवं
धत्ते वानरवीरविक्रमभराभुग्नो भुजङ्गाधिपः ॥ ४५ ॥

**हेमाङ्गदः**— ( सविषादम् । ) अहह, बाहुयन्त्रेणावपीड्य किमाह दशग्रीवः।

अस्मद्भुजवनान्दोलसुलभं फलमाप्नुवन् ।
नियुद्धलाघवाक्रान्त शाखामृग सुखीभव ॥ ४६ ॥

**रत्नचूडः**— ( सहर्षम् । ) सखे करणकौशलविमोचितात्मा विपक्षदुर्वचनमुह्यमानहृदयो हृदयंगममभिदधाति वानरेन्द्रः ।

विंशत्या युगपत्क्षमैरपि भुजैराकर्षणच्छेदयो-
रच्छिन्दन् दशमं शिरः कथयसि च्छिन्नानि यानि क्रमात् ।
तान्याराद्धमहेश्वराणि भवतः शीर्षाणि तुल्यं दश
च्छिन्दानो दशभिर्नखैर्यदि पुनः शाखामृगेन्द्रः सुखी ॥४७॥

---

सन् श्रोत्राभावेन चक्षुश्रवस्त्वात्सर्पाणां नैरन्तर्यावच्छेदककर्णशष्कुल्याख्यावयवाभावेन निरन्तरालं नीरन्ध्रं यथा तथा मिलितैर्व्याप्तैः स्तब्धैर्निश्चलैश्च शिरोभिः (करणैः) भुवं महीं धत्ते कथंचिद्धारयत इत्यर्थः ॥ ४५ ॥

अस्मदिति—नियुद्धे बाहुयुद्धे लाघवेनाप्रयत्नेन आक्रान्त गृहीत शाखामृग हे वानर सुग्रीव अस्मद्भुजानामेव वनानामान्दोलेन कम्पनेन सुलभं सुखेन लब्धुं योग्यं फलमाम्रादिरूपमनर्थरूपं चाप्नुवन्ननुभवन् सन् सुखीभव परिहासोक्तिरियम् ॥ ४६ ॥

करणस्य शरीरस्य कौशलेन सामर्थ्येन विमोचितः रावणशरीरत उद्धृत आत्माशरीरं येन सः 'करणं कारणे काये साधनेन्द्रियकर्मसु । कायस्थे व्रतबन्धे च नाट्यगीतप्रभेदयोः । पुमान् शूद्राविशोः पुत्रे वानरादौ च कीर्त्यते ।' इत्यजयः । विपक्षस्य शत्रोरावणस्य दुर्वचनेन 'शाखामृग' इत्यादिपरिहासरूपदुष्टवाक्येन मुह्यमानं मोहं प्राप्नुवत् (ताच्छील्ये चानश्) हृदयं यस्य तथाभूतः सन् हृदयंगमं मनोज्ञम् । विंशत्येति—युगपदेकस्मिन्नेव काले आकर्षणच्छेदयोः शिरोदशकस्य कर्त्तनार्थमेकैकस्यपृथक्पृथगाकर्षणे द्वैधीकरणे च विषये क्षमैः सदशसंख्यावत्त्वाद्योग्यैरपि विंशत्या भुजैः दशमं शिरोऽच्छिन्दन् होमार्थमकृन्तन् सन् यानि नव शिरांसि क्रमादेकैकशः छिन्नानि कथयसि ब्रूषे तानि कृत्ताकृत्तानि, यद्यपि तच्छब्देन यच्छब्दोपात्तशिरोनवकस्यैव ग्रहणं न्याय्यं तथापि तच्च तानि च तानीत्येकशेषाश्रयणाद्दशमस्यापि भवति आराद्धमहेश्वराणि

अपि च रे रे राक्षस,

दशमुखवधनाट्यसूत्रधारो रघुपतिरस्य च पारिपार्श्विकोऽहम् ।
प्रकरणफलबीजभावुकानाममृतभुजां समुपास्महे समाजम् ॥४८॥

इत्यभिधानेनोत्प्लुत्य निर्दयं शिरसि ताडितो रथध्वजदण्डावलम्बी कथंचिदाश्वसिति रावणः ।

**हेमाङ्गदः**—(सर्वतोऽवलोक्य सहर्षम् ।) सखे, पश्य पश्य ।

यन्माल्यग्रथनावशेषविकलैः सांतानिकैर्नाकिनां
भर्त्रे गर्भकमेव दाम निभृतं स्वर्मालिकैर्गुम्भितम् ।
तस्मिन्नद्य दशास्यमूर्धनि नवप्रस्तावनामापदां
पश्यन्तो रभसौघभीतिसितभियः क्रोशन्ति नः स्यन्दनाः ॥४९॥

---

प्रसादितशंकराणि छत्रिन्यायेन दशमस्य तथात्वम् भवतो दशशीर्षाणि कर्म शाखामृगेन्द्रोऽहं तुल्यं यौगपद्येन दशाभिर्नखैः छेदनानुरूपसंख्याविशिष्टैर्मम नखैः पुनःच्छिन्दानो यदि छिद्यां चेत्तर्हि सुखी स्यामिति शेषः ॥ ४७ ॥

दशमुखेति—रे रे राक्षस रघुपतिः रामः दशमुखस्य तव वधनाट्यस्य सूत्रधारः प्रधाननटः नाट्यस्य सूत्रधारवत्तद्वधनिर्वाहकः तर्ह्यत्र तव किं कार्यमित्यत आह अहं च अस्य त्वद्वधनाट्यस्य पारिपार्श्विकः 'सूत्रधारगुणैरेव किंचिदूनैः समन्वितः । मध्यमप्रकृतिस्तज्ज्ञैर्विज्ञेयः पारिपार्श्विकः ।' इत्युक्तलक्षणो नटोऽस्मि यथा पारिपार्श्विकः सूत्रधारानुरोधेन तत्कार्यं निर्वाहयत्येवं रामकर्तृकत्वद्वधस्य सहायोऽस्मीति भावः ननु सभ्यानामाराराधयिषया हि नाट्योपक्रमः केऽत्रसभ्याः कीदृशं वाराधनमित्यत आह प्रकरणस्य प्रकृतस्य त्वद्वधस्य फलबीजयोः जगत्स्वास्थ्यसीतापहारयोः भावुकानां प्रेक्षकाणामित्यर्थः 'लघुपत' इत्यादिना भुव उकञ् यद्वा प्रकरणफलार्थं बीजभावुकानां सीतापहारं काङ्क्षितवतां अमृतभुजां देवानां रसिकानां च समाजं सभामुपास्महे आराधयामः ॥४८

इत्यभिधानेनेत्यादिना रावणावमानस्य कथनाच्छलनाख्यंविमर्शसंध्यङ्गमुक्तम् 'छलनं चावमाननम् ।' इति तल्लक्षणात् । यदिति—यस्य रावणमूर्ध्नः माल्यग्रथनस्य मूर्धालंकरणार्थमालास्रजो गुम्भनस्यावशेषैरवशिष्टैरत एव विकलैः कीटविद्धत्वाभग्नदलत्वादिवैकल्यविशिष्टैः सान्तानिकैः संतानवृक्षोद्भवैः पुष्पैः दाम हारस्रक् नाकिनां भर्त्रे इन्द्रार्थं गर्भकं केशमध्यगमेव नतु प्रकाशेन धार्यं 'केशमध्ये तु गर्भकः' इत्यमरः गर्भशब्दादिवार्थे कन् निभृतं गूढं यथा तथा स्वर्मा-

**रत्नचूडहेमाङ्गदौ**— अहह आश्वस्य दशकण्ठेनापि ताडितो मूर्च्छितः कपीन्द्रो नीलहनुमद्भ्यामाश्वस्यमानोऽपवाह्यते ।

**रत्नचूडः**— सखे, प्रथनस्य प्रथमपर्वणि शतकृत्वो विजयन्ते पराजयन्ते च महावीराः, तत्र को विषादः ।

**हेमाङ्गदः**–(अन्यतोऽवलोक्य ।) सखे रत्नचूड, दिष्ट्या वर्धसे, यदयमनुप्राप्तः

कुशिकसुतसपर्यादृष्टदिव्यास्त्रमन्त्रो
भृगुपतिसहयुद्ध्वा वीरभोगीणबाहुः ।
दिनकरकुलकेतुः कौतुकोत्तानचक्षु-
र्बहुमतरिपुकर्मा कार्मुकी रामभद्रः ॥ ५० ॥

**रत्नचूडः**–- (सहर्षम् । राममवलोक्य ।) किमाह राघवो रावणं प्रति ।

(नेपथ्ये ।)

राक्षसराज,

बालेनापि विलूनधूर्जटिधनुःस्तम्भेन बाहूष्मभि-
र्येन स्वेदयता मनोहरमृजूचक्रे मुनिर्भार्गवः ।

लिकैः स्वर्गलोकमालाकारैः गुम्फितं ग्रथितम्, तस्मिंस्तादृशे दशास्यमूर्धनि रावणशिरसि अद्य आपदां ताडनादिविपदां नवप्रस्तावनां नूतनारम्भं पश्यन्तः नः स्यन्दनाः रथाः लक्षणया तत्स्थाः सर्वेऽपि देवयोनय इत्यर्थः रभसौचेन तदवमानकृतसन्तोषाधिक्येन मसितभियो निर्भीकाः सन्तः क्रोशन्ति कलकलशब्दं कुर्वन्तीत्यर्थः ॥ ४९ ॥

अपवाह्यते दूरं नीयते। कुशिकेति—कुशिकसुतस्य विश्वामित्रस्य सपर्यया शुश्रूषया दृष्टः साक्षात्कृतः दिव्यास्त्राणां जृम्भकाद्यमानुषायुधानां मन्त्रस्तत्तदस्त्राधिदेवतासांनिध्यादिकारणभूतः येन तादृशः भृगुपतिना जामदग्न्येन सहयुध्वा सह योधितवान् 'सहे च' इति युधेः क्वनिप्। वीराणां भोगीणौ भोगाय हितौ बाहू यस्य तथोक्तः 'आत्मन्विश्वजनभोगोत्तरपदात्खः' इति खः 'कुमति च' इति णत्वम् वीरभोगीणत्वं च वीरैः श्लाघनीयबलवत्त्वं तेषां संहारेण स्वर्गसुखप्रापकत्वं च, दिनकरकुलस्य सूर्यवंशस्य केतुः प्रधानभूतः बहुमतं श्लाघितं रिपूणां शत्रूणां कर्म विक्रमणं येन तादृशः रामभद्रः कौतुकेन युद्धकुतूहलेन उत्ताने विकसिते चक्षुषी यस्य तथाभूतः सन् कार्मुकी कोदण्डपाणिः सन् अनुप्राप्तो युद्धार्थमागतः ॥ ५० ॥

बालेनेति—बालेनाप्रौढावस्थां गतेनापि विलूनो भग्नो धूर्जटेः शिवस्य

संप्राप्तो रघुनन्दनः किमपरं तेनाधुना नेष्यते
धन्यो वालिसमानकर्तृकवधश्लाघातिभूमिं भवान् ॥ ५१ ॥

हेमाङ्गदः—(साकूतं सकौतुकं च ।) सखे, तूष्णीमास्व तावत्, शृणुमः किं ब्रवीति रावणः ।

रत्नचूडः—(कर्णं दत्वा ।) कथमेवमाह, साधु रे क्षत्रियडिम्भ, साधु ।

यत्कन्यामभिलष्यता निमिपतेर्न स्थाणवीयं मया
दोर्लीलातुलितावतारितहरग्राव्णापि रुग्णं धनुः ।
तद्द्रक्ष्यन्त्यधुना कियन्तमवधिं यातो भवानित्यमी
देवेन्द्रद्विपदानदुर्दिनभिदो रौद्रार्चिषो मार्गणाः ॥ ५२ ॥

---

धनुःस्तम्भो येन तादृशेनात एव बाहूष्मभिर्भुजप्रतापकृतोष्णैः स्वेदयता स्वेदं कुर्वता येन मया भार्गवो मुनिर्जामदग्न्यो मनोहरमौद्धत्याभावेन रम्यं यथा तथा ऋजूचक्रेऽवक्रः कृतः लोकेऽपि वंशदण्डादिरग्निना स्वेदनेऽवक्रीभवति हि ब्राह्मणसहजपरहिंसावर्जनादिधर्मैकतानस्वभावतां नीत इत्यर्थः एतेन त्वन्निग्राहकस्यार्जुनस्य निग्रहीतुस्तद्गुरुप्रहरणस्य च भङ्क्ताहमतो मा दृप्येति भावः तादृशो रघुनन्दनो रामोऽहं संप्राप्तो युद्धार्थमागतः किमपर वक्तव्यमिति शेषः तेन मया कर्त्रा भवान् कर्म वालिना लक्षणया वालिवधेन समानकर्तृकेणैककर्तृकेण वधेन श्लाघातिभूमिमतीव श्लाघ्यत्वमधुना नेष्यते नीतो भविष्यति अतो धन्यस्त्वमिति शेषः वालिनमिव त्वामपि हन्मि ततश्च वीरत्वेन परिगणनायां वालिनोऽतीवावरोऽपि भवान् वालिरावणयोरेको हन्तेति मत्कर्तृकवधद्वारा तद्गोष्ठीप्रवेशरूपश्लाघां च यास्यसीति भावः ॥ ५१ ॥

यदिति— दोर्लीलया भुजक्रीडया (नतुप्रयत्नेन) तुलित उद्धृतः अवतारितः पुनः स्थापितश्च हरग्रावा कैलासो येन तेनापि (एतेन स्वस्य पिनाकारोपणे शक्तिर्दर्शिता) निमिपतेः कन्यां सीतां अभिलष्यता प्राप्तुकामेनापि मया स्थाणवीयं शैवं धनुः यद्यस्मान्न रुग्णमारोप्य नामर्दितं तत्तस्माद्धेतोः भवान् कियन्तमवधिं यातः कीदृशीं प्रतिष्ठां गत इत्यर्थः इत्येवं देवेन्द्रद्विपस्यैरावतस्य दानदुर्दिनस्य मदजलवर्षणस्य भिदो भेदका मदभञ्जका इत्यर्थः 'दुर्दिनं वर्षणे मेघच्छन्नेऽह्न्यदिनेऽपि च ।' इति वैजयन्ती रौद्रं भीषणमर्चिर्दीप्तिर्येषां ते अमी मार्गणाः मद्बाणाः अधुना द्रक्ष्यन्ति शिवभक्तिवशादस्माभिरनादृतं पिनाकं भञ्जन् गर्वितोऽसि तदद्यैव व्यपनेष्यामीति भावः ॥ ५२ ॥

**हेमाङ्गदः**— (सविस्मयम् ।) कथमद्यापि तृणीकृतजगत्त्रितयः स एवास्य तावानहंकारग्रन्थिः ।

**रत्नचूडः**— सखे, किमिदं भवन्तमपि विस्मापयते

**मानाध्मातः स्वां किलोत्कृत्य तावन्मूर्धश्रेणीमेकशेषोत्तमाङ्गः ।**
**स्त्रीमर्धाङ्गे वञ्चयित्वा सुखेन प्रीतः शम्भोरेकपादे पपात ॥ ५३ ॥**

(ऊर्ध्वमवलोक्य । सवितर्कम् ।) भगवतो दिवस्पतेरिव रथो दाशरथिमुपतिष्ठते ।

**हेमाङ्गदः**— (दृष्ट्वा सहर्षम् ।) स एवायम् । न पश्यसि, लोचनमार्गचन्द्रकसहस्रस्तबकितमहेन्द्रकवचहस्तो मातलिः । (क्षणं निर्वर्ण्य ।)

**विविधमणिमयूखमञ्जरीभिः कृतसुरचापसहस्रसंनिपाते ।**
**अधिसमरमहारयद्विमाने निजमपि कार्मुकमत्र देवराजः ॥ ५४ ॥**

(कर्णं दत्त्वा ।) किमाह रावणसारथिः । रे रे पुरुहूतसूत,

**दर्पोऽयं भवतः सुरासुरचमूदोःकाण्डकण्डूविष-**
**ज्वालाजाङ्गलिकेन जाङ्गलभुजां पत्यापि न त्याजितः ।**

विस्मापयते विस्मितं करोति 'नित्यं स्मयतेः' इत्यात्वम् ततः पुक् 'भीस्म्योर्हेतुभये' इत्यात्मनेपदम् । **मानेति**—मानेन गर्वेण आध्मातः पूरितोऽयं रावणः स्वां मूर्धश्रेणीं शिरःसमूहमुत्कृत्य छित्वा अत एव एकं शेषं शिष्टमुत्तमाङ्गं मूर्धा यस्य तथाभूतः सन् अर्धाङ्गे स्त्रीं स्त्रियं 'वाम् शसोः' इतीयङभावे पूर्वसवर्णः, वञ्चयित्वा परिहृत्य अर्धनारीश्वरत्वान्महेश्वरस्य स्त्रीप्रणामे स्वस्यागौरवं मन्यमानस्ततस्तद्वामपादे स्वशिरःपातमकृत्वेत्यर्थः शम्भोरेकपादे दक्षिण एव चरणे प्रीतः स्वगौरवावैकल्येन तुष्टः सन् सुखेन तत्कृतसौख्येन सह पपात ॥ ५३ ॥

दिवस्पतेरिन्द्रस्य ॥ लोचनमार्गाणामेव चन्द्रकाणां मेचकानां सहस्रेण स्तबकितः संजातस्तबको व्याप्त इत्यर्थः महेन्द्रस्य कवचो हस्ते यस्य तथाभूतः सन् । **विविधेति**—अत्राधिसमरमस्मिन्युद्धे समरशब्दाद्विभक्त्यर्थेऽव्ययीभावः देवराजो देवेन्द्रः विविधानां नानावर्णानां मणीनां रत्नानां मयूखमञ्जरीभिः किरणपरंपराभिः कृतश्चापसहस्रसंनिपातः कार्मुकबाहुल्यसमागमो यस्मिंस्तादृशे विमाने स्वीये रथे निजं कार्मुकं धनुरपि अहारयत्प्रापयामास मातलिं मातलिनेति वा शेषः ॥ ५४ ॥

**दर्प इति**—रे रे पुरुहूतसूत मातले सुरासुरचमूनां देवासुरसैन्यानां दोःकाण्डस्य भुजदण्डस्य कण्डूवाः खर्ज्वा एव विषज्वालायाः जाङ्गलिकेन विषवैद्येन तदुपशमकेनेत्यर्थः जाङ्गलं (मांसम्) भुञ्जत इति जाङ्गलभुजो राक्षसास्तेषां

येनैन्द्रे रथवर्मणी रघुशिशोरस्योपनीते त्वया
राज्ञो द्विष्टमिदं विधाय च कथं शक्रोऽपि वर्त्तिष्यते ।।५५ ॥

**रत्नचूडः**— (श्रुतिमभिनीय ।) किमाह रामभद्रः,

सत्यमिदम् ‘ यच्छीलः स्वामी तच्छीलास्तत्प्रजाः ’ इति यदेवमपि स्वामिनो मूलच्छेदिना दुर्नयेन विकत्थ्यते ।

**हेमाङ्गदः**— (आकाशे कर्णं दत्वा ।) किमाह रावणः, अरे तापसवटो,

क्रोधेन ज्वलिता मुहूर्त्तमनु च स्वैरेव निर्वापिताः
क्लीबैरश्रुमहोर्मिभिर्मखभुजां पत्युः सहस्रं दृशः ।
यैः सृष्टा भुवनत्रयीविजयिभिः सर्वंकषाः सन्त्यमी
ते संप्रत्यपि मे नयापनययोर्निर्वाहमूलं भुजाः ॥ ५६ ॥

**रत्नचूडः**—( कर्णं दत्वा । ) किमाह रामभद्रः ।

---

‘जाङ्गली निर्जने देशे त्रिलिङ्गः पिशितेऽस्त्रियाम्’ इति त्रिकाण्डशेषः पत्या रावणेनाऽपि न त्याजितः त्यागं न कारितः रावणभीत्याप्यनपगत इत्यर्थः दर्पोऽयं काक्वा कोऽयं गर्व इत्यर्थः, ननु तथा किमनुष्ठितं तत्राह येन दर्पेण (हेतुना) ऐन्द्रे इन्द्रसंबन्धिनी रथो वर्म कवचं च ते अस्य राघवशिशोरतितुच्छस्य रामस्यार्थे त्वया उपनीते उपहारत्वेन प्रापिते ततश्च इदं राज्ञो रावणस्य द्विष्टं द्वेषमप्रियं स्वशत्रोर्हिताचरणात् भावे क्तः. विधाय कृत्वा सः त्वत्स्वामिभूतः शक्र इन्द्रोऽपि (किमुत त्वमित्यपेरर्थः) कथं वर्तिष्यते कथमपि न जीवेदित्यर्थः। एतेन द्युतिर्नाम विमर्शसध्यङ्गमुक्तम् ‘तर्जनोद्वेजने द्युतिः’ इति तल्लक्षणात् ॥५५॥

यच्छील इत्यादि ‘ यथा राजा तथा प्रजाः ’ इति न्यायादित्यर्थः प्रकृतयः प्रजाः । क्रोधेनेति— भुवनत्रय्या विजयिभिरभिभवनशीलैः यैर्भुजैः कर्तृभिः मखभुजां पत्युरिन्द्रस्य सहस्रं दृशो नेत्राणि कर्म मुहूर्त्तं क्रोधेनाभिभवननिमित्तेन कोपेन ज्वलिताः दीप्ताः अनु पश्चाच्च स्वैरात्मीयैरेव क्लीबैर्दैन्यप्रकाशकैरित्यर्थः अश्रूणां मद्बाहुविक्रमस्मरणोत्थानां दुःखबाष्पाणां महद्भिरूर्मिभिः परंपराभिः निर्वापिताः सृष्टाः शमिताः बाष्पाकुलाः कृताइत्यर्थः तेऽमीतादृशाः सर्वंकषाः सर्वहराः समर्था इत्यर्थः नयापनययोरात्मनो जये परस्यापजये च निर्वाहमूलं निर्वहणहेतुभूताः मे भुजाः संप्रत्यद्यापि सन्ति शक्ता एव वर्त्तन्ते तस्मान्मा गर्वितो भूरित्यर्थः ॥ ५६ ॥

छित्त्वा मूर्ध्नः किमिति स वृतो धूर्जटिर्यैरमीषां
दोःस्तम्भानां त्रिभुवनजयश्रीरियं वास्तवी ते ।
मूर्धानो वा न खलु भवतो दुर्लभाः संभवेयु-
र्यद्देवस्य त्वमसि जगतां शिल्पिनोऽपि प्रपौत्रः ॥ ५७ ॥

यत्पुनर्ब्रवीषि 'संप्रत्यपि ते भुजाः सन्ति' इति तदधुनैव ज्ञास्यते ।

**हेमाङ्गदः**—( कर्णं दत्वा । ) किमाह रावणः । अरे राजन्यडिम्भ, भवतः पुराणपितामहेन बहु तावदनरण्येन ज्ञातम् । इदानीं तु भवता ज्ञास्यते ।

**रत्नचूडः**—( कर्णं दत्वा । विहस्य । ) किमाह रामभद्रः । रे रे राक्षसीपुत्र,

न दूये नः पूर्वं नृपतिमनरण्यं यदवधी-
र्जयो वा मृत्युर्वा युधि भुजभृतां कः परिभवः ।
जितं तु त्वां कारागृहनिगलितं हैहयपतेः
पुलस्त्यो यद्भिक्षामकृत कृपणं तद्व्यथयति ॥ ५८ ॥

छित्त्वेति—इयं त्रिभुवनस्य जयश्रीस्त्वज्जयलक्ष्मीः अमीषां ते दोःस्तम्भानां स्तम्भसदृशानां भुजानां वास्तवी यदि नैसर्गिकीचेत्तर्हि मूर्ध्नः स्वशिरांसि छित्त्वा प्रसादनार्थं निकृत्य धूर्जटिर्महेश्वरो किमिति किमर्थं वृतस्त्वया त्रैलोक्यैश्वर्यं प्रार्थितः न हि स्वतः सिद्धस्य महाप्रयत्नपूर्वकमाशंसनमुपपद्यते पिष्टपेषणवदानर्थक्येन प्रवृत्त्यसंभवात् न च शिरश्छेदनमनायाससाध्यं कर्म, तस्मादेवानुमितमौत्पत्तिकबलशून्यत्वं त्वद्भुजानाम्, न हि कृत्रिमेणाकृत्रिममतिशयितुं विनिन्दितुं वा सांप्रतमिति भावः ननु न वयमशक्यग्रहश्रीकाम्यया शिवाराधने शिरांस्यच्छैत्स्मापितु तेषां सौलभ्यप्रकटनायेति परमतमभिप्रेत्य तत्सोल्लुण्ठमनुवदति वा यद्वा मूर्धानो भवतो न खलु दुर्लभाः संभवेयुरतीव सुलभा इत्यर्थः तत्र हेतुमाह यद्यस्मात् त्वं जगतां शिल्पिनो निर्मातुर्देवस्य ब्रह्मणोऽपि प्रपौत्रः पौत्रस्य ( विश्रवसः ) पुत्रोऽस्यतो न दुर्लभा इति संबन्धः ॥ ५७ ॥

अनरण्येनेत्येषा कथा तृतीयेऽङ्के व्याख्याता । न दूय इति—नोऽस्माकं पूर्वं नृपतिमादिराजं अनरण्यमवधीस्त्वं हतवानिति यत्तत्र न दूये न विषीदामि कुतस्तत्राह भुजभृतां वीराणां युधि जयः शत्रुनिग्रहणानिमित्तः, वा उत मृत्युरपलाय्य युद्ध्यमानस्य शत्रुणा मारणं वा तयोरन्यतरो भवतीति शेषः कः परिभवस्तिरस्कारः तु किं तु पुलस्त्यः जितं युधि पराजितं ततश्च हैहयपतेः कार्त्तवीर्यस्य कारागृहे बन्धनालये निगलितं बद्धं च त्वां कृपणं दीनं यथा तथा भिक्षा-

**हेमाङ्गदः**— (कर्णं दत्वा ।) किमाह रावणः ।
आः क्षत्रियवटो वाचाट, किमपूर्वशिल्पिन् रजनीचरेन्द्रचरितचन्द्रेऽपि लक्ष्म लिखसि तद्वयं न भवसि ।

**हेमाङ्गदः**—( ससंभ्रममवलोक्य । ) कथमुपक्रान्तमेव शरसहस्रदुर्दिनं मन्दोदरीदयितेन ।

**रत्नचूडः**— कथं मैथिलीवल्लभेनापि प्रत्युपक्रान्तमेव । (विहस्य ।)

**पतन्ति रामभद्रेण खण्डिता रावणेषवः ।**
**पूर्वार्धैः फलिभिर्वेगात्पश्चार्धैः पक्षिभिश्चिरात् ॥ ५९ ॥**

किं च ।

**अक्षे च केतुदण्डे च सारथौ च हयेषु च**
**खेलन्ति राक्षसेन्द्रस्य स्यन्दने रामपत्रिणः ॥ ६० ॥**

**हेमाङ्गदः**—(सभयम् ।) अहह ।

---

मत्कृत याच्ञया मोचितवानित्यर्थः इति यत्तद्व्यथयति मां पीडयति नाहि युद्धेऽपलाय्य युद्ध्यमानस्य शत्रुणा हननमवज्ञा 'हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम् ।' इत्युभयस्य च वैधत्वात्पौरुषानपायाच्च, किं तु वीरंमन्यस्य शत्रुवशगस्य बन्धुप्रार्थनामोचितस्य जीवनमेवावज्ञा सत्येवं किमिति स्वदोषमविमृश्य प्रलपसीति भावः ॥ ५८ ॥

अपूर्वस्य पूर्वमविद्यमानस्य दोषस्य शिल्पिन् निर्माणकुशल । **पतन्तीति**—रावणस्य इषवो बाणाः रामभद्रेण खण्डिताः द्विधा कृताः सन्तः फलिभिरायसाग्रैः 'फलं हेतुकृते जातीफले फलकसस्ययोः । त्रिफलायां च कक्कोले शस्त्राग्रे व्युष्टिलाभयोः । इति हैमः पूर्वार्धैः पूर्वभागैः वेगादयोगौरवनिमित्तात् पतन्ति, पक्षिभिर्वाजवद्भिः पश्चार्धैरुत्तरार्धैः अपरश्च तैरर्धैरिति विग्रहे 'अपरस्यार्धे पश्चभावो वक्तव्यः' इत्यपरशब्दस्य पश्चादेशः चिराल्लाघवकृतेनोड्डयनसंस्कारकृतेन च विलम्बनेन पतन्ति ॥ ५९ ॥

**अक्ष इति**—रामस्य पत्रिणो बाणाः राक्षसेन्द्रस्य रावणस्य स्यन्दने रथे अक्षे धूर्वहेऽवयवे 'अक्षो रथस्यावयवे व्यवहारे विभीतके । पाशके शकटे कर्षे ज्ञाने चात्मनि रावणौ । अक्षं सौवर्चले तुत्थे हृषीके' इति हेमचन्द्रः केतुदण्डे ध्वजयष्टौ सारथौ सूते हयेषु रथ्येषु च खेलन्ति क्रीडन्ति सर्वतो निर्विघ्नन्तीत्यर्थः ।६०

अन्धकारीकृतव्योम्ना बाणवर्षेण रावणः ।
रामारूढं तिरोधत्ते शताङ्गं शातमन्यवम् ॥ ६१ ॥

( चिरं दृष्ट्वा । सविस्मयम् । ) सखे,

नानाविधानि शस्त्राणि शस्त्रैर्नानाविधैरपि ।
इमौ हि प्रतिकुर्वाते न किंचिदतिरिच्यते ॥ ६२ ॥

रत्नचूडः—सखे, एवमेतत् ।

यद्रावणो बहुभिरेव भुजैः करोति तद्राघवः प्रतिकरोति भुजद्वयेन ।
कर्म द्वयोर्यदपि तुल्यफलं तथापि रक्षोभटाद्दशगुणं नरवीरशिल्पम् ॥ ६३ ॥

हेमाङ्गदः—( विहस्य । ) कच्चित्सखे,

विंशत्यापि भुजैरेष द्वौ भुजावभियोधयन् ।
अदूषितद्वन्द्वयुद्धमर्यादो दशकंधरः ॥ ६४ ॥

( सखेदभयं च । ) कथमयं रावणो महेन्द्रस्यन्दनात्

तस्यारिबलभीमस्य ध्वजदण्डस्य लाञ्छनम् ।
दर्पदीप्तः क्षुरप्रेण मायूरं पिञ्छमच्छिनत् ॥ ६५ ॥

---

अन्धकारीकृतेति—रावणः रामेणारूढमधिष्ठितं शातमन्यवमिन्द्रसंबन्धिनं शताङ्गं रथं 'शताङ्गः स्यन्दनो रथः' इत्यमरः अन्धकारीकृतमप्रकाशतां नीतं व्योम आकाशो येन तेन बाणवर्षेण तिरोधत्त आच्छादयति ॥ ६१ ॥

नानेति—हि यत इमौ रामरावणौ नानाविधान्याग्नेयवायव्यादिबहुप्रकाराणि शस्त्राणि शत्रुप्रयुक्तान्यायुधानि नानाविधैः पार्जन्यपार्वतादिविरुद्धबहुप्रकारैरपि शस्त्रैः प्रतिकुर्वाते प्रतिकर्तव्यमाचरन्ति ततो न किंचिदतिरिच्यतेऽधिकं भवति उभयोर्युद्धे साम्यमेव भातीति भावः ॥ ६२ ॥

यदिति— रावणो बहुभिर्विंशत्या भुजैः यदेव करोति युद्धमाचरति तत्कर्म राघवो भुजद्वयेन प्रतिकरोति तदीयान्यस्त्रशस्त्राणि वारयतीत्यर्थः एवं द्वयोरामरावणयोः कर्म युद्धाचरणं यदपि यद्यपि तुल्यफलं कृतप्रतिकृतिमात्रत्वेन समानफलं भवतीति शेषः तथापि फलसाम्येपि रक्षोभटाल्लक्षणया रावणसामर्थ्यात् नरवीरस्य रामस्य शिल्पं सामर्थ्यं दशगुणं दशशतोऽधिकम् ॥ ६३ ॥

विंशत्येति— दशकंधरो रावणः विंशत्या भुजैः द्वौ भुजौ रामबाहू अभियोधयन् युद्धं कारयन् सन्नपि अदूषिता अव्याहता द्वन्द्वयुद्धस्य मर्यादा येन तथाभूतः कच्चित् तथापि न समं योद्धुं शक्नोतीत्यर्थः ॥ ६४ ॥

कथमित्याद्युत्तरश्लोकेनसंबध्यते तस्येति—अयं रावणः अरिबलभीमस्य

**रत्नचूडः**— सखे, पश्य पश्य, कुलिशकेतनस्यन्दनावमाननाविलक्षक्रुद्धेन ।

दिक्पालद्विपदर्पदानलहरीसौरभ्यगर्भानिलैः
पक्षैरेव समस्तराक्षसकथाकल्पान्तकर्णेजपाः ।
दीयन्ते रघुपुंगवेन कतिचित्पौलस्त्यमौलिष्वमी
पौलोमीनयनाम्बुशीकरकणावग्राहिणो मार्गणाः ॥ ६६ ॥

**हेमाङ्गदः**— ( सखेदाद्भुतम् । ) कथं किरीटपरंपरापरिभवममृष्यमाणेन बाणवर्षाद्वैतमातन्वता राक्षसराजेन

विदेहकन्याकुचकुम्भकोटिकठोरतासाक्षिणि सायकोऽयम् ।
रामस्य जन्मान्तरमेलकारिश्रीकौस्तुभे वक्षसि हा निखातः ॥ ६७ ॥

---

शत्रुसैन्यभयानकस्य तद्दर्शनमात्रेण भयाविर्भावात् तस्यातिप्रसिद्धस्य ध्वजदण्डस्य लाञ्छनचिह्नभूतं मायूरं मयूरसंबन्धि पिञ्छं बर्हं दर्पेण गर्वेण दीप्रो ज्वलन् गर्वितः सन् क्षुरप्रेण नाराचेण 'इषुकाण्डं क्षुरप्रं च नाराचम्' इति धनंजयः महेन्द्रस्य स्यन्दनाद्रथादच्छिनच्छिन्नवान् ॥ ६५ ॥

कुलिशकेतनेत्याद्युत्तरश्लोकेनसंबध्यते **दिक्पालेति**—कुलिशकेतनस्य वज्रध्वजस्य स्यन्दनस्य रथस्य अवमाननया ध्वजभञ्जनरूपावज्ञया विलक्षेण लज्जितेन अत एव क्रुद्धेन कुपितेन 'केतनं तु ध्वजे कार्ये निमन्त्रणनिवासयोः ।' इत्यजयः रघुपुङ्गवेन रामेण कर्त्रा दिक्पालद्विपानां दिगीशसंबन्धिनामैरावतादिगजानां दर्पदानलहर्या मदजलप्रवाहस्य सौरभ्यगर्भो वासनावाननिलो वायुर्येषां तैः पक्षैर्वाजैरेव समस्तराक्षसकथायाः कल्पान्तस्य क्षयस्य 'क्षयः कल्पान्त इत्यपि' इत्यमरः कर्णेजपाः सूचकाः 'स्तम्बकर्णयो रमिजपो' इत्यच् 'हलदन्तत्संज्ञायाम्' इति ङेरलुक् 'हस्तिसूचकयोरिति वक्तव्यम्' इति सूचके वृत्तिः पूर्वं रावणभयेन विमदा दिग्गजा इदानीं रामबाणपक्षवातमात्रेण रावणनाशमनुमाय पूर्ववन्मदोत्कटा बभूवुरित्यर्थः अत एव पौलोम्या इन्द्राण्या नयनाश्रुशीकरकणस्य रावणकृतहिंसानिमित्ताश्रुजलकणस्य अवग्राहिणः प्रतिबन्धकाः परिहर्त्तार इत्यर्थः कतिचिन्मार्गणा बाणाः कर्म पौलस्त्यस्य रावणस्य मौलिषु शिरःसु दीयन्ते पात्यन्त इत्यर्थः ॥ ६६ ॥

अमृष्यमाणेनासहमानेन । बाणवर्षाद्वैतं शरप्रायमित्यर्थः द्वयोर्भावो द्विता यद्वा द्वाभ्यां सप्रतिपक्षाभ्यामितं प्राप्तं द्वीतं तत्र भवं द्वैतं न द्वैतमद्वैतमिति समासः । **विदेहेति**—राक्षसराजेन कर्त्रा अयं सायको बाणः कर्म विदेहकन्याया

( सम्यगवलोक्य । सखेदम् । )

एकेनैव निवातकङ्कटभिदा लङ्कापतेः पत्रिणा
विद्धोऽयं यदि नाम कोऽपि जगतामुल्लाघनो राघवः
चक्षुर्वर्त्मसहस्रनिःसरदसृग्धारौघझात्कारिणा
माहेन्द्रेण च वर्मणा विवृणुते वीरः सहस्रं व्रणान् ॥ ६८ ॥

रत्नचूडः— ( सहर्षम् । ) राघवेणापि

सीतास्तनस्तबककुङ्कुमपत्रलोपसंकल्पपातकिनि वक्षसि रावणस्य ।
न्यस्तः शरो विबुधकुञ्जरदन्तघातरूढव्रणार्बुदचतुष्टयमध्यवर्त्ती ॥ ६९

हेमाङ्गदः—(कर्णं दत्वा । सविस्मयम् । ) एकेनापि सव्यपाणिना विशिखमुत्खाय किमाह रावणः ।

साधु रे मनुष्यडिम्भ, साधु ।

---

सीतायाः कुचकुम्भयोः कोटिकठोरताया अग्रभागकार्कश्यस्य साक्षिणि साक्षाद्द्रष्टरि ( एतेन रावणस्य विशेषाग्रहे हेतुर्दर्शितः, तथाहि स्वाभिलषितस्येयताप्यलब्धस्य सीतालिङ्गनस्य तस्मिन्नैकान्त्यदर्शनेन तस्य कोपोद्दीपनात् ) जन्मान्तरे विष्णुत्वावसरे मेलकारिणौ संश्लिष्टौ श्रीःकौस्तुभश्च तौ यस्मिंस्तादृशे रामस्य वक्षस्युरसि निखातः विद्धः हा कष्टम् ॥ ६७ ॥

एकेनेति—जगतां कोऽप्यनिर्वचनीयवैभव उल्लाघनो रोगनिवर्त्तकः तत्करोतीति ण्यन्तादुल्लाघशब्दात्कर्त्तरिल्युट् 'उल्लाघो निर्गतो गदात्' इत्यमरः अयं वीरो राघवः निवातस्य शस्त्राभेद्यस्य कङ्कटस्योरश्छदस्य भिदा भेदकेन 'निवातो दृढसंनाहे निवासे वातवर्जिते' इत्यजयः 'उरश्छदः कङ्कटकः' इत्यमरः लङ्कापतेरेकेनैव पत्रिणा बाणेन यदि नाम विद्धो यद्यपि ताडितः नाम शब्दोऽत्राप्यर्थे तथापि चक्षुर्वर्त्मनामिन्द्रस्य नेत्रमार्गाणां सहस्रात् निःसरता निर्गच्छता असृग्धाराया रक्तासारस्य ओघेन प्रवाहेण झात्कारिणा शब्दविशेषविशिष्टेन माहेन्द्रेण वर्मणा इन्द्रसंबन्धिना कवचेन सहस्रं व्रणान् विवृणुते प्रकाशयति ॥ ६८ ॥

सीतेति—सीतायास्तनस्तबकयोः गुच्छसदृशयोः स्तनयोः कुङ्कुमपत्रस्य कुङ्कुमकृतमकर्यादिरचनाविशेषस्य लोपसंकल्पेन मार्जनाभिध्यानेनालिङ्गनाभिलाषेणेत्यर्थः पातकिनि पातकविशिष्टे रावणस्य वक्षसि राघवेण कर्त्रा शरःकर्म विबुधकुञ्जरस्यैरावतस्य दन्तघातेन रूढस्याविर्भूतस्य व्रणानामर्बुदचतुष्टयस्य मांसकीलचतुष्कस्य मध्यवर्त्ती न्यस्तः 'अर्बुदोमांसकीलेस्यात्पुरुषे दशकोटिषु ।' इति मेदिनी । ऐरावतदन्तचतुष्टयघातव्रणकिणमध्ये पातित इत्यर्थः ॥ ६९ ॥

त्रैविक्रमः सकलदानवजीवितव्यविद्यासमाप्तिलिपिरिव सुदर्शनो मे ।
यस्मिन्निपत्य हृदये दलितारजालज्योतिस्तुषारमयमाभरणं बभूव ॥७०॥
तस्मिन्नपि रुधिरदर्शनं कुर्वाणेन भवता दर्शितेयं सुरासुरवीर्यातिशायिनी हस्तवत्ता।

**रत्नचूडः**—अहह, द्विषद्गिरामुद्गारेण गर्वग्रन्थिगुरुणा दूरं दीप्यमानस्य ।
स्वविनिहितचन्द्रहासव्रणकिणवलयोपहसितहारेषु ।
रामस्य मार्गणगणाः पतन्ति दशकण्ठकण्ठेषु ॥७१॥

**हेमाङ्गदः**—(सचमत्कारम् ।) सखे, पश्य पश्य, अनुरूपवीरसंवादप्रमोदभरद्विगुणितावष्टम्भसंक्षोभितभुवनत्रयस्य निरन्तरप्रचीयमानबाणपञ्जरमध्यवर्त्तिना रामभद्रेण क्रीडाशकुन्तकौतुकमापूर्यते राक्षसराजस्य । नूनमिदानीम् ।

उदञ्चन्न्यञ्चद्भूर्विवृतनिभृतानामनुफणं
मणीनां विद्युद्भिः क्षणमुषितपातालतिमिरः ।

---

त्रैविक्रम इति—सकलानां दानवानामसुराणां जीवितव्यस्य जीवनस्य (बाहुलकाद्भावे कृत्यः) विद्यायाः समाप्तिलिपिः समापनवर्णपङ्क्तिः समस्तासुरसंहारक इत्यर्थः त्रैविक्रमो वैष्णवः सुदर्शनश्चक्रमेव किमुतान्यदित्येवकारार्थः, यस्मिन् मे हृदये वक्षसि निपत्य प्रहरणार्थं पतित्वा दलितं कुण्ठितमराणां चक्राङ्गानां जालस्य समूहस्य ज्योतिस्तैक्ष्ण्यं यस्य तथाभूतः सन् 'अरमङ्गं रथाङ्गस्य शीघ्रशीघ्रगयोरपि ।' इति शाश्वतः ततश्च तुषारमयं हिमप्रायमाभरणं बभूवाव्यथाकरमासीदित्यर्थः ॥ ७० ॥

हस्तवत्ता प्रशस्तबलवत्त्वमित्यर्थः । द्विषदित्याद्युत्तरश्लोकेन संबध्यते. स्वेति—गर्वग्रन्थिगुरुणा अहंकाराधिक्यदुर्भरेण द्विषद्गिरा रावणवचनानामुद्गारेणोपन्यासेन दूरं दीप्यमानस्यातीव कुपितस्य रामस्य मार्गणगणा बाणसमूहाः स्वेनात्मना (रावणेन) विनिहितानामीश्वराराधानार्थमनुष्ठितानां चन्द्रहासव्रणानां किणवलयैर्मांसग्रन्थिसमूहैरुपहसितो हारो येषां तेषु हारायितव्रणकिणेष्वित्यर्थः दशकण्ठकण्ठेषु पतन्ति ॥ ७१ ॥

अनुरूपस्यात्मनः सदृशस्य वीरस्य संवादेन समागमेन यः प्रमोदभरः संतोषाधिक्यं तेन द्विगुणितेन पुनरुक्तेनावष्टम्भेन गर्वेण संक्षोभितमालोडितं भुवनत्रयं येन तस्य राक्षसराजस्य निरन्तरं प्रचीयमानस्य वर्धमानस्य बाणपञ्जरस्य शरनीडस्य मध्यवर्त्तिना रामभद्रेण क्रीडाशकुन्तकौतुकं क्रीडार्थं पञ्जराबद्धशुकादिपक्षिदर्शननिमित्तं कुतूहलं आपूर्यते आपूर्णं क्रियते उदञ्चदिति—भुजगानाम-

भुजक्रीडावल्गद्दशमुखपदन्यासगरिम-
प्रवृद्धैर्निश्वासैरजानि भुजगानामधिपतिः ॥ ७२ ॥

रत्नचूडः—(सभयमवलोक्य।) सखे, एवमेतत्।

रक्षोविक्षोभवेगाच्चलितजलनिधिव्यक्तमातङ्गचक्र-
क्रुद्ध्यद्दिङ्नागमुक्तोद्धरणगुरुतरामद्य नागाधिराजः।
अङ्गैर्लग्नेषु लग्नैरविरलवलिना वामनेनातिपीव्ना
देहेनापह्नुवानः फणफलकपरीणाहमुर्वीं बिभर्ति ॥ ७३ ॥

(ऊर्ध्वमवलोक्य।) कथमितस्ततो वैमानिकैरपक्रम्यते।

हेमाङ्गदः— (सचमत्कारम्।) अहो त्रिभुवनभयंकरमुपक्रान्तं महावीराभ्याम्। तथाहि—

ध्यायत्ययं गाधिसुतादधीतान् दिव्यास्त्रमन्त्रान्मनुजेन्द्रसूनुः।
ब्रह्मोपदिष्टामपि शस्त्रविद्यामसौ तथाभ्यस्यति राक्षसेन्द्रः ॥ ७४ ॥

---

धिपतिः शेषः भुजक्रीडया रामस्य हस्तलीलया वल्गतश्चलतो दशमुखस्य रावणस्य पदन्यासस्य पादविक्षेपस्य गरिम्णा गौरवेण प्रवृद्धैर्वृद्धिं गतैः निश्वासैरुपलक्षितः सन् (इत्थंभावतृतीया) अत एव उदञ्चन्त्या पदं उत्क्षेपणसमय उन्नमन्त्या न्यञ्चन्त्या पादप्रक्षेपणसमये नमन्त्या च भुवा विवृतानां प्रकाशानां निभृतानां पिहितानां च अनुफणं पणसहस्रकेऽपि वीप्सायामव्ययीभावः मणीनां रत्नानां विद्युद्भिः विद्योतनैः शोभाभिरित्यर्थः व्युपसृष्टाद्द्युतेर्भावे संपदादिक्विप् क्षणेषुमणिप्रभाविद्योतनावसरेषु मुषितं खण्डितं नाशितमित्यर्थः पातालस्य तिमिरमन्धकारो येन तथाभूतोऽजनि जातः 'मुषितं हृतखण्डिते' इति विश्वः ॥ ७२ ॥

रक्ष इति—नागाधिराजः शेषः रक्षसो रावणस्य विक्षोभस्यालोडनस्य वेगाद्धेतोः चलिते तरले जलनिधौ समुद्रे व्यक्तैः प्रकाशैर्मातङ्गचक्रेण जलहस्तिसमूहेन क्रुद्ध्यद्भिः प्रतिद्वन्द्विगजबुद्ध्या कुपितैर्दिङ्नागैर्दिग्गजैर्मुक्तं त्यक्तमुद्धरणमूर्ध्वं भरणं यस्यास्तामत एव गुरुतरामतीव दुर्भरां उर्वीं भुवं अङ्गेषु ग्रीवाद्यवयवेषु लग्नैः संसक्तैरङ्गैः फणाद्यवयवैः अविरला निरन्तरा वलिस्त्वक्संकोचो यस्मिंस्तेन वामनेन ह्रस्वतां गतेनात एवातिपीव्नातिवस्थूलेन 'पीनपीव्नी तु स्थूलपीवरे।' इत्यमरः देहेन फणफलकानां परीणाहं विशालतां 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घः अपह्नुवानः संकोचयन् सन्नित्यर्थः बिभर्ति ध्रियते ॥ ७३ ॥

ध्यायतीति—अयं मनुजेन्द्रसूनुर्दाशरथिः गाधिसुताद्विश्वामित्रादधीतान्-

तदावामप्यपसृत्यास्वहे (समन्तादवलोक्य।) यथायं भुवनसंक्षोभस्तथा तर्कयामि, तामिस्रं-भानवीयेन भानवीयं च राहवीयेन राहवीयं च वैष्णवीयेन वैष्णवीयं च पौष्पकेतवेन पौष्पकेतवं च पाशुपतेन, अस्त्रेणास्त्रं प्रतिकुर्वाणयोः पौलस्त्यककुत्स्थ-कुलैकवीरयोस्तुमुलमायोधनं वर्त्तते।

**रत्नचूडः**— कृतप्रतिकृतानामविशेषेऽपि जेतव्यमिति रामस्य मर्त्तव्यमिति रावणस्य निर्भरोऽयं सर्वास्त्रमोक्षः। विशिखमुखोपस्थायिनीनां च पुनर्देवतानामब-लीयानाटोपः कल्प्यते। तथाहि—

**यद्दैवतं क्षिपति पत्रिषु राक्षसेन्द्रः स्नेहेन तद्रघुपतेर्मृदु संनिधत्ते।**
**यां देवतामुपदधाति च रामभद्रस्त्रासादसौ दशमुखाच्छनकैरुपैति ॥७५॥**

(नेपथ्ये।)

**यद्यत्कृत्तं दशमुखशिरस्तस्य तस्यैव कान्तौ**
**संक्रामन्त्यामतिशयवती शेषवक्त्रेषु लक्ष्मीः।**

भ्यस्तान् दिव्यास्त्राणां जृम्भकाद्यमानुषास्त्राणां मन्त्रांस्तत्तद्देवतादिसान्निध्यसाधन-भूतान् ध्यायति चिन्तयति तदा तस्मिन्नवसरे असौ राक्षसेन्द्रोऽपि ब्रह्मणा स्व-प्रपितामहेन उपदिष्टामध्यापितां शस्त्रविद्यामभ्यस्यति स्वायत्ततया आवर्त्तयति ७४

तामिस्रमित्यादिषु 'साऽस्य देवता' इत्यणृछौ यथासंभवमूह्यौ वैष्णवीयेने-त्यत्र 'वा नामधेयस्य' इति वृद्धत्वेनछः पौष्पकेतवेन मन्मथदेवताकेन 'यज्ञो वै विष्णुः' इति श्रुत्या विष्णोर्यज्ञादिधर्ममयत्वेन तत्प्रतिद्वन्द्विभूतत्वात्कामस्य तद-स्त्रेण तन्निग्रह इति बोध्यम्। कृतानां तामिस्राद्यस्त्रप्रयोगाणां प्रतिकृतानां भानवी-याद्यस्त्रैस्तद्भञ्जनानां चाविशेषे तारतम्याभावे सत्यपि **जेतव्यमिति**— विजिगीषु-त्वाद्रामस्योत्तरोत्तरं जयस्य दृष्टत्वाच्चेति भावः, **मर्त्तव्यमिति**— उत्तरोत्तरं स्व-बलक्षयेणावज्ञाया दुर्मर्षत्वादिति भावः। अनेन रामजयस्य रावणमरणस्य च सिद्ध-वदामन्त्रणात्प्ररोचना नाम विमर्शसंध्यङ्गमुक्तम्। 'सिद्धामन्त्रणतो भाविदर्शिका स्यात्प्ररोचना।' इति तल्लक्षणोक्तेः। **यद्दैवतमिति**--राक्षसेन्द्रो रावणः पत्रिषु ज्यासु संयोजितेषु बाणेषु यद्दैवतमग्निवाय्वादिकां यां देवतां क्षिपत्यभिमन्त्र्य रामं प्रति प्रेरयति तदस्त्राधिदैवतं रघुपतेः स्नेहेन रामनिष्ठप्रीत्या मृदु यथा तथा स्वयं रामे किंचिदपि व्यथामकुर्वदित्यर्थः संनिधत्ते संनिहितं भवति नतु तच्छरीरस्पर्श-मात्रमपि करोतीत्यर्थः यां च देवतां रामभद्र उपदधाति स्वास्त्रेष्वभिमन्त्र्य प्रेर-यति असावस्त्राधिदेवता दशमुखात् रावणात्त्रासाद्भयात् शनकैर्मन्दमुपैति प्राप्नोति रावणमिति शेषः ॥ ७५ ॥

**यदिति**—यद्यद्दशमुखशिरः कृत्तं रामेण च्छिन्नं तस्य तस्यैव सर्वस्यापि

**यो यः कृत्तो दशमुखभुजस्तस्य तस्यैव वीर्यं**
**लब्ध्वा दृप्यन्त्यधिकमधिकं बाहवः शिष्यमाणाः ॥ ७६ ॥**

**उभौ**—( सहर्षरोमाञ्चमाकर्ण्य । ) अये, शब्दोपलम्भसंवर्त्तकेन कर्मणा निर्मितानि त्रिभुवनस्य कोऽयमिन्द्रियाणि प्रीणयति ।

( पुनर्नेपथ्ये कलकलः । )

**उभौ**—( सभयाद्भुतम् । ) कथमयं कपटकण्ठीरववैकुण्ठकण्ठकठोरकाहलीकोलाहलमांसलो महानिर्घोषः प्रजाकोशभङ्गमपर्वणि प्रक्रमते । नूनं च ।

**घनकालकूटदिग्धैरिव कण्ठध्वनिभिरेव मूर्च्छयतः ।**
**भुवनानि भैरवस्य स्मरयति भृशमद्य परमेष्ठी ॥ ७७ ॥**

( पुनर्नेपथ्ये । )

**दिव्यास्त्रैर्भूर्भुवःस्वस्त्रितयभयभरोड्डामरैर्योधयित्वा**
**लूनोत्क्षिप्तैः शिरोभिर्दशभिरभिनभो दर्शितैकादशार्कः ।**

---

तस्य मुखस्य ( एवकारोऽप्यर्थकः ) कान्तौ शोभायां संक्रामन्त्यां छिन्नेतरेषु मुखेषु प्रविशन्त्यां सत्यां शेषेषु कृत्तेतरेषु वक्त्रेषु मुखेषु लक्ष्मीः श्रीरतिशयवती नितरामधिका भवति तथा यो यो दशमुखभुजः कृत्तस्तस्य तस्यैव सर्वस्यापि च्छिन्नबाहोर्वीर्यं बलं लब्ध्वा प्राप्य शिष्यमाणाः अवशिष्टतां गच्छन्तो बाहवः अधिकमधिकमतितरां दृप्यन्ति गर्विता भवन्ति ॥ ७६ ॥

शब्दोपलम्भसंवर्त्तकेन शब्दज्ञानोत्पादकेन कर्मणा निर्मितानि सृष्टानि त्रिभुवनस्य इन्द्रियाणि श्रोत्रेन्द्रियाणि कोऽयं प्रीणयति रावणशिरश्छेदादिवार्त्तया तर्पयति । कपटकण्ठीरवस्य मायया सिंहवेषस्य वैकुण्ठस्य विष्णोः कण्ठ एव कठोरा भीषणा काहली वाद्यविशेषस्तस्याः कोलाहलवन्मांसलोऽत्युच्चः । प्रजाकोशभङ्गं ब्रह्माण्डच्छेदमपर्वण्यकाले प्रक्रमते आरभते घनेति—परमेष्ठी ब्रह्मा घनेन निरन्तरेण कालकूटेन हालाहलेन दिग्धैर्लिप्तैरिव स्थितैः कण्ठध्वनिभिरट्टहासैरेव भुवनानि जगन्ति मूर्च्छयतो मोहयतो भैरवस्य भैरवरूपिणं रुद्रं 'अधीगर्थदयेशां कर्मणि' इति कर्मणि षष्ठी अद्यास्मिन्नवसरे भृशमतितरां स्मरयत्याध्यायति उत्कण्ठापूर्वकं चिन्तयतीत्यर्थः 'स्मृ आध्याने' इति मित्त्वाद्ध्रस्वः ब्रह्मशिरश्छेदार्थमवतीर्णस्य रुद्रस्येवाद्य निर्घोषो भवतीति तात्पर्यम् ॥ ७७ ॥

दिव्येति—रजनिचरपते रावणस्य कबन्धो मूर्धवर्जितं शरीरं भूर्भुवःस्वस्त्रितयस्य भूम्यादिलोकत्रयस्य भयभरेण भयभरणेन भयजनकत्वेनेत्यर्थः उड्डामरै-

काकुत्स्थेनावकीर्णो निजविशिखशिखायोगपीठोपहूत-
ब्रह्मास्त्रेणाधिशेते रजनिचरपतेर्वीरशय्यां कबन्धः ॥ ७८ ॥

उभौ— (सहर्षसंभ्रममूर्ध्वमवलोक्य । सविस्मयम् ।) सखे, पश्य पश्य, प्रलयकालकरालकालानलज्वालापुञ्जपिञ्जराणि रावणशिरांसि । (सत्वरमुपसृत्याधस्तात्पश्यतः ।)

हेमाङ्गदः— (सकरुणाविषादाद्भुतम् ।) महावीरप्रकाण्ड लङ्केश्वर, पर्यवसितोऽसि

भिन्नैरावणगन्धसिन्धुरशिरःसंपातिभिर्मौक्तिकैः
शश्वद्विश्वजयप्रशस्तिरचनावर्णावलीशिल्पिने ।
नाकान्तःपुरिकाकपोलविलसत्काश्मीरपत्राङ्कुर-
श्रीविन्यासविलासभीषणभुजस्तम्भाय तुभ्यं नमः ॥ ७९ ॥

(निर्वर्ण्य ।) सखे रत्नचूड,

ध्रुवं पतितपङ्क्तिकंधरकबन्धपीडाभरा-
न्निजावनमनक्रमोन्नामितचक्रवालाचलम् ।

रतीवक्रैरेः दिव्यास्त्रैर्योधयित्वा युद्धं कारयित्वा लूनैस्तैरेव दिव्यास्त्रैश्छिन्नैः उत्क्षिप्तैरूर्ध्वं प्रेरितैः दशभिःशिरोभिः अभिनभो नभसि विभक्त्यर्थेऽव्ययीभावः दर्शिताःएकादश अर्का आदित्या यस्मात्तथाभूतः सन् निजस्य विशिखस्य बाणस्य शिखायोगपीठे अग्रभागरूपदेवतावाहनस्थाने उपहूतमावाहितं ब्रह्मास्त्रं येन तेन काकुत्स्थेन रामेण अवकीर्णः क्षिप्तः सन् वीरशय्यामधिशेते युद्धभूमौ स्वपिति 'अधिशीङ्स्थासां कर्म' इति कर्मत्वम् ॥ ७८ ॥

प्रकाण्डः श्रेष्ठः । पर्यवसितोऽसि मृतोऽसीत्यर्थः । भिन्नेति—भिन्नाद्स्त्रविदीर्णात् ऐरावणगन्धसिन्धुरस्य ऐरावताख्यमदहस्तिनः शिरसो मस्तकात् संपातिभिर्व्याकीर्यमाणैः मौक्तिकैः शश्वत्पदेपदे विजयस्य प्रशस्तिरचनार्थं प्रख्यापनार्थं वर्णावलीशिल्पिनेऽक्षरपङ्क्तिनिर्मात्रे नाकान्तःपुरिकाणामप्सरसां कपोलेषु गण्डप्रदेशेषु विलसतो विराजमानस्य काश्मीरपत्राङ्कुरश्रीविन्यासविलासस्य कुङ्कुमादिकृतमकर्यादिपत्ररचनाविनोदस्य भीषणा भयजनकाः (पतिभिः सह कारागृहीतत्वात्तासां पत्ररचनाराहित्यं, तत्र हेतुभूता इत्यर्थः) भुजस्तम्भा यस्य तस्मै तुभ्यं नमः तादृशस्त्वमपि पर्यवसितोऽसीति संबन्धः ॥ ७९ ॥

ध्रुवमिति— काद्रवेयाणां कद्रुपुत्राणां सर्पाणामधिपो राजा शेषः पतितस्य पङ्क्तिकंधरकबन्धस्य शिरोरहितस्य रावणशरीरस्य पीडाभरात्संमर्दकृतगौर-

महीवलयमर्धकुण्डलितविग्रहाधारक-
प्रतिष्ठफणमण्डलो वहति काद्रवेयाधिपः ॥ ८० ॥

**रत्नचूडः**— सखे, सर्वातिशायी खलु रावणः । पुरापि खलु

चरति जगतां जैत्रे यत्र स्वभोगिचमूचरै-
र्वलयितमहादेहस्तम्भो बिभर्त्ति भुवः स्थलम् ।
प्रचलदखिलक्ष्माभृन्मूलोपलव्यतिघट्टनो-
ल्बणमणिशिखाजल्पाकीभिः फणाभिरहीश्वरः ॥ ८१ ॥

इदानीं पुनरयमुत्क्रान्तवायुरतिदुर्वहो देहबन्धः ।

**हेमाङ्गदः**— ( अन्यतोऽवलोक्य । ) कथमियं दशकंधरकबन्धाभिमुखी शोकविक्लबा मन्दोदरी निशाचरीभिरपकृष्यते । ( कर्णं दत्वा आकाशे ।) कष्टं कष्टं चपलकपिकुलानुक्रियमाणकरुणकाकुप्रकारतारस्वरा किमाह महावीरवरवर्णिनी ।

भूयिष्ठानि मुखानि चुम्बति भुजैर्भूयोभिरालिङ्ग्यते
चारित्रप्रियदेवतापि भवता कान्तेन मन्दोदरी ।

---

वेण निजस्य अवनमनक्रमेण प्रतिभवनपरिपाट्या उन्नामित उद्गमितश्चक्रवालाचलो लोकालोकपर्वतो यस्मिंस्तत् महीवलयं भूमण्डलं अर्धे भागे कुण्डलितः संकोचितो विग्रहः शरीरमेव आधारकप्रतिष्ठा आधारस्थानं यस्य तादृशं फणमण्डलं यस्य तथाभूतः सन् वहति बिभर्ति भुवम् ॥ ८० ॥

**चरतीति**—जगतां जैत्रे जयशीले यत्र यस्मिन् रावणे चरति दिग्विजयार्थं प्रतिष्ठमाने सति अहीश्वरः शेषः स्वैरात्मीयैः भोगिचमूचरैः सर्पसेनावीरैः वलयितो वेष्टितो महान् देहस्तम्भो यस्य तथाभूतः सन् प्रचलतां रावणपादन्यासेन कम्पमानानां अखिलक्ष्माभृतां सर्वेषां कुलपर्वतानां मूलोपलानां मूलशिलानां व्यतिघट्टनेन मणिभिः सह मिथः संघट्टनेन उल्बणाभिः शब्दायमानाभिः मणिशिखाभिः शिरोरत्नाग्रैः जल्पाकीभिः जल्पनशीलाभिः शब्दायमानाभिरित्यर्थः 'जल्पभिक्ष' इत्यादिना षाकन् षित्वान्ङीष् फणाभिः भुवः स्थलं बिभर्त्ति वहति ॥ ८१ ॥

**चपलैः** परिहासकारिभिः कपिकुलैर्वानरसमूहैः अनुक्रियमाणाया विडम्ब्यमानायाः करुणकाका दीनशोकध्वनेः प्रकारेण तारो गम्भीरः स्वरो यस्यास्तथाभूता महावीरस्य वरवर्णिनी उत्तमस्त्री महिषीत्यर्थः 'उत्तमा वरवर्णिनी' इत्यमरः

**भूयिष्ठानीति**—चारित्रप्रियाणां पातिव्रत्यैकपरायणानां स्त्रीणां देवता ईश्वर्यपि पतिव्रतानां श्रेष्ठापीत्यर्थः मन्दोदर्यहं भवता कान्तेन भूयिष्ठानि बहुतमानि मुखानि

**हा लम्बोदरकुम्भमौक्तिकमणिस्तोमैर्ममैकावली-**
**शिल्पे वागधमर्णकस्य भवतो लङ्केन्द्र निद्रारसः ॥ ८२ ॥**

**रत्नचूडः**— ( सखेदम् । ) सखे, इदमशक्यानुभवं चक्षुःश्रोत्रस्य, प्रतिकृतानामपि व्यसनमतिमात्रं हृदयस्य मर्माणि भिनत्ति । ( सविमर्शम् । ) अहह, न किंचिदनीषत्करं नाम कृतान्तस्य ।

**वन्दारुबृन्दारकवन्दिबृन्दमन्दारमालामकरन्दबिन्दून् ।**
**मन्दोदरीयं चरणारविन्दरेणूत्करैः कर्कशतामनैषीत् ॥ ८३ ॥**

( नेपथ्ये । )

**नीयन्ते वनदेवताभिरमरक्षोणीरुहो नन्दनं**
**नीतो वल्लभपालकेन च निजामुच्चैःश्रवा मन्दुराम् ।**

---

चुम्बति तथा भूयोभिर्बहुतरैर्भुजैरालिङ्ग्यते दशमुखत्वाद्विंशतिभुजत्वाच्च तवाखण्डितपातिव्रत्यमनेकमुखचुम्बनानेकभुजालिङ्गनगुखमदा इत्यर्थः लम्बोदरस्य गजाननस्य कुम्भमौक्तिकमणीनां मस्तकमुक्ताफलानां स्तोमैः समूहैः मम एकावल्या हारविशेषस्य शिल्पे निर्माणे विषये वाचा अधमर्णकस्य ऋणिनः अधमर्णशब्दात्स्वार्थिकः कः (अनेन पूर्वं प्रणयावसरे गजाननमस्तकमौक्तिकैर्मन्दोदर्या एकावलीहारनिर्माणं रावणेन प्रतिज्ञातमिति गम्यते) तादृशस्य भवतो निद्रारसः स्वापसुखानुभवः मरणप्राप्तिश्च हा कष्टम्, नहि ऋणिनः कदाचिदपि निद्रासुखमनुभवन्ति सर्वदापि तच्चिन्ताकुलचित्तत्वात्सत्येवं कथमेवमव्याकुलं निद्रासीत्यर्थः एवं गजाननादिदेवतासार्वभौमानामप्यवजिज्ञासयात्युत्कटवृत्तिकत्वात्तव मरणप्राप्तिरिति च भावः ॥ ८२ ॥

इदं रावणवधदर्शनं मन्दोदरीपरिदेवनश्रवणं च चक्षुश्च श्रोत्रं च तयोः समाहारश्चक्षुःश्रोत्रं तस्य प्राण्यङ्गत्वादेकवद्भावः अशक्यानुभवं दुर्दर्शं दुःश्रवं चेत्यर्थः । प्रतिकृतानां पूर्वं तत्कृतापकाराय कृतप्रत्यपकाराणां शत्रूणामपीत्यर्थः । न किंचिदीषत्करं सर्वसुकरमेवेत्यर्थः । **वन्दार्विति**—इयं मन्दोदरी वन्दारूणां वन्दनशीलानां 'शृवन्द्योरारुः' बृन्दारकवन्दिनां देवस्तुतिपाठकानां बृन्दस्य समूहस्य मन्दारमालानां मकरन्दानां पुष्परसानां बिन्दून् चरणारविन्दयोः पादपद्मयोः रेणूत्करैः पांसुपुञ्जैः कर्कशतां काठिन्यमनैषीत् नीतवती तादृशीयमद्येदृशीमवस्थां गतेति भावः ॥ ८३ ॥

**नीयन्त इति**—वनदेवताभिः अमरक्षोणीरुहः कल्पकवृक्षाः नन्दनमिन्द्रोद्यानवनं नीयन्ते लङ्कोद्यानादाह्रियन्ते वल्लभस्य सल्लक्षणसंपूर्णस्याश्वस्योच्चैः

रक्षोभिश्च विभीषणप्रणयिभिः कारागृहोन्मोचित-
स्वर्बन्दीवदनावलोकनिबिडव्रीडो बिडौजाः कृतः ॥८४॥

**रत्नचूडः**—(सहर्षम् ।) सखे, तदेहि लङ्केश्वरकाराधिवासचिरवास्तव्यं बन्धुवर्गमीक्षावहे । (इति परिक्रामन्तौ विलोक्य । सहर्षम् । अन्योन्यम् ।) सखे, पश्य पश्य, प्रहारविह्वलवलीमुखाच्छभल्लगोलाङ्गूलसंवर्गणव्यग्रसुग्रीवो लक्ष्मणनिहितधन्वा विभीषणभुजावलम्बी जयश्रिया किमपि प्रदीप्तरमणीयो रामभद्रः । अयं हि संप्रति ।

पौलस्त्यन्यस्तशक्तिव्रणकिणकणिकालक्ष्मणो लक्ष्मणोरः-
पीठान्निर्मुक्तलज्जो विबुधपुरवधूक्लृप्तपुष्पाभिषेकः ।

---

श्रवस इत्यर्थः पालकेन रक्षकेण 'वल्लभोदयितेऽध्यक्षे सल्लक्षणतुरङ्गमे ।' इति विश्वमेदिन्यौ उच्चैःश्रवाः इन्द्राश्वः निजां मन्दुरां वाजिशालां 'वाजिशाला तु मन्दुरा' इत्यमरः नीतः प्रापितः बिडौजा इन्द्रः विभीषणस्य प्रणयिभिः प्रियसचिवैः रक्षोभिः राक्षसैः कारागृहाद्बन्धनालयात् उन्मोचितानां विशृङ्खलितानां स्वर्बन्दीनां निबद्धानाममरीणां वदनावलोकेन मुखदर्शनेन निबिडा निरन्तरा व्रीडा स्त्रीरक्षणेऽप्यात्मनोऽशक्तिनिमित्ता लज्जा यस्य तादृशः कृतः ॥ ८४ ॥

वास्तव्यं वासिनम् । 'वसेस्तव्यत्कर्त्तरि णिच्च' प्रहारेण रावणशस्त्रसंपातेन विह्वलानां व्याकुलानां वलीमुखानां वानराणां अच्छभल्लानामृक्षाणां गोलाङ्गूलानां कृष्णमुखानां दीर्घपुच्छानां च वानराणां संवर्गणे समाधानपूर्वकमेकीकरणे व्यग्रस्तत्परः सुग्रीवो यस्य सः **पौलस्त्येति**----एष जानकी जाया यस्य स सीतापतिः 'जायाया निङ्' इति समासान्तो निङ् 'लोपोव्योर्वलि' इति यलोपः पौलस्त्येन रावणेन न्यस्तायाः पातितायाः शक्तेरायुधविशेषस्य व्रणकिणकणिकायाः क्षतग्रन्थिलेशस्य लक्ष्म चिह्नं यस्य तस्मात् लक्ष्मणस्य उरःपीठात् ल्यब्लोपे पञ्चमी वक्षःप्रदेशं वीक्ष्य निर्मुक्ता त्यक्ता लज्जा 'समरविजयी हेतिदलितः' इति न्यायेन स्वानुजस्येव स्वस्यापि तादृशपौरुषप्रकटनाभावनिमित्ता, स्वनिमित्तं स्वानुजस्य मूर्च्छावस्थाप्रदस्य शत्रोरसंहारनिमित्ता वा ह्रीर्येन तथाभूतः सन् विबुधपुरवधूभिरप्सरोभिः क्लृप्तो रचितः पुष्पाभिषेको यस्मिंस्तथाभूतः सन् सद्यो रावणवधोत्तरक्षणमेव अन्यं नप्तारं पौत्रं विभीषणं रजनिचरपुर्यां लङ्कायाः भद्रपीठे सिंहासने प्रतिष्ठा स्थितिर्यस्य

**सद्यो नप्तारमन्यं रजनिचरपुरीभद्रपीठप्रतिष्ठं**
**दृष्ट्वा तुष्यत्पुलस्त्यो जगति विजयते जानकीजानिरेषः ॥ ८९ ॥**

( इति निष्क्रान्ताः सर्वे । )

इति दशास्यनिग्रहो नाम षष्ठोऽङ्कः ।

तथाभूतं राज्याभिषिक्तमित्यर्थः दृष्ट्वा तुष्यन् प्रीयमाणः पुलस्त्यो यस्मिंस्तथाभूतः सन् जगति विजयते शौर्यादिभिः सर्वोत्कर्षेण वर्त्तते। अनेन रावणवधादिकार्यस्य संगृह्य कथनादादानं नाम विमर्शसंध्यङ्गमुक्तं 'आदानं कार्यसंग्रहः।' इति तल्लक्षणात् ॥ ८९ ॥

इति श्रीलक्ष्मणसूरिविरचितायामाकराख्यायामनर्घराघवनाटकव्याख्यायां षष्ठोऽङ्कः ।

---

## सप्तमोऽङ्कः ।

(नेपथ्ये ।)

तमिस्रामूर्च्छालत्रिजगदगदंकारकिरणे
रघूणां गोत्रस्य प्रसवितरि देवे सवितरि ।
पुरःस्थे दिक्पालैः सह परगृहावासवचना-
त्प्रविष्टा वैदेही दहनमथ शुद्धा च निरगात् ॥ १

पावकपावकचरितां भार्यामादाय पुष्पकारूढः ।
अनुगैरेत्यायोध्यां राजति राज्यश्रिया रामः ॥

अथेदानीं सप्तमेऽङ्के निर्वहणसंधिकथनद्वारा प्रकृतार्थोपसंहारार्थं प्रक्रममाणस्तत्र सीताया अग्निप्रवेशं तत उत्थानं पुना रामसमागमं पुष्पकेण सपरिवारस्य राघवस्यायोध्यां प्रति प्रस्थानं च चूलिकया वर्णयिष्यन्नाह **नेपथ्य** इति । चूलिकालक्षणं तूक्तम् । 'बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तत् ।' इति निर्वहणसंधिलक्षणम् । **तमिस्रेति**— तमिस्रया तमोव्याप्त्या मूर्च्छालस्य मोहविशिष्टस्य त्रिजगतो जगत्त्रयस्य अगदंकारास्तादृशमूर्च्छारूपरोगस्य चिकित्सकाः तमोनाशका इत्यर्थः किरणा यस्य तस्मिन् 'तमिस्रं तिमिरे कोपे तमिस्रा तु तमस्ततौ । कृष्णपक्षनिशायां च' इति विश्वः, मूर्च्छां लात्यादत्त इति मूर्च्छालं 'ला आदाने' इति धातोः 'आतोऽनुपसर्गे कः' अन्ये तु सिध्मादित्वाल्लजित्याहुः 'कारे सत्यागदस्य' इति मुमि अगदंकारेतिरूपम्, रघूणां गोत्रस्य वंशस्य प्रसवितर्य्युत्पादके कूटस्थ इत्यर्थः देवे संवितर्यादित्ये दिक्पालैरिन्द्रादिभिः सह पुरःस्थे अग्रभागे साक्षित्वेन वर्त्तमाने सति (एतेन कर्मसाक्षित्वात्तस्य तत्साक्ष्यस्याङ्गीकार्यत्वं, विशिष्य च स्ववंश्यत्वात्तद्विशुद्ध्यर्थं तत्रानालस्येन परीक्षणं, लोकप्रत्यायनार्थं दिक्पालरूपसाक्ष्यन्तरसांनिध्यं च दर्शितम् ।' वैदेही सीता परगृहे रावणालये आवासस्य निवासस्य वचनाद्वाच्यतां परिहर्तुमित्यर्थः दहनमग्निं प्रविष्टा सती अथ प्रवेशानन्तरं शुद्धा सती निरगादग्नेर्निर्गतवती । एतेन मुखोपक्षिप्तस्य सीताप्रत्याहरणरूपबीजस्य पुनरुपगमात्संधिर्नाम निर्वहणसंध्यङ्गमुक्तं 'संधिर्बीजोपगमनम्' इति तल्लक्षणात् ॥ १ ॥

अपि च

एकैकानि शिरांसि राक्षसचमूचक्रस्य हुत्वा निजे
तेजोऽग्नौ दशकण्ठमूर्धभिरथो निर्माय पूर्णाहुतिम् ।
अद्य स्वस्त्ययनं समाप्य जगतो लङ्केन्द्रबन्दीकृतां
सीतामप्यवलोक्य शोकरभसव्रीडाकुलो राघवः ॥ २ ॥

क्रमेण च ।

सहैव सुग्रीवविभीषणाभ्यां सौमित्रिसीतापरिपूर्णपार्श्वः ।
उपैति वैवस्वतवंशवृत्तमेध्यामयोध्यामथ पुष्पकेण ॥ ३ ॥

(चूलिका ।)

(ततः प्रविशति विमानेन रामः सीतालक्ष्मणौ सुग्रीवविभीषणौ च ।)

**सुग्रीवः**—(रामं प्रति ।)

**एकैकानीति**—राघवः राक्षसानां चमूचक्रस्य सेनासमूहस्य एकैकानि शिरांसि सर्वाण्यपि शीर्षाणि अत्र एकैकमित्येकत्वेनैव निर्वाहेऽपि बहुत्वोक्तिरवयवगतबहुत्वापेक्षा, कानिचिदित्यर्थान्तरापेक्षा वेति समाधेयं निजे तेजोऽग्नौ प्रतापाग्नौ हुत्वा प्रक्षिप्य अथो अनन्तरं दशकण्ठस्य मूर्धभिः शिरोदशकेन पूर्णाहुतिं निर्माय 'सर्वं वै पूर्णाहुतिः' इति श्रुत्या यत्र सर्वासामाहुतीनां समाप्तिः सा माङ्गलिकी पूर्णाहुतिः तां कृत्वा रावणवधेन राक्षससंहारक्रियां समाप्येत्यर्थः अद्याधुना जगतः स्वस्त्ययनमनिष्टनिवृत्तिद्वारेष्टप्रापकमाङ्गलिककर्म समाप्य पूर्णं कृत्वा लङ्केन्द्रेण बन्दीकृतामशोकवनिकायामवरुद्धां सीतामप्यवलोक्य स्वसमीपं प्रापितां दृष्ट्वा शोकेन तद्बन्धुर्यस्मरणजेन दुःखेन, रभसेन नष्टद्रव्यस्य पुनर्लाभजेन हर्षेण, व्रीडया तस्याः परगृहवासनिमित्तया लज्जया च आनत ईषदवाङ्मुखो वर्तते इति शेषः । अनेन सीतारामसमागमरूपकार्यस्यान्वेषणाद्विबोधाख्यं निर्वहणसंध्यङ्गमुक्तं 'विबोधः कार्यमार्गणं' इति तल्लक्षणात् ॥ २ ॥

**सहेति**—अत्र पूर्वश्लोकाद्राघव इत्यनुवर्त्तते राघवः सौमित्रिसीताभ्यां परिपूर्णौ व्याप्तौ पार्श्वौ सव्यदक्षिणपक्षौ यस्य तथाभूतः सन् सुग्रीवविभीषणाभ्यां सहैव वैवस्वतवंशस्य वृत्तैरुत्तरोत्तरमुत्कर्षप्रकाशकैः सागरखननगङ्गावतारणसेतुबन्धनादिभिः चरितैर्मेध्यां पवित्रां अयोध्यां पुष्पकेण विमानविशेषेण उपैति गच्छति । अनेन ग्रथनाख्यं निर्वहणसंध्यङ्गमुक्तं सीतालक्ष्मणाभ्यां सह पुनरयोध्याप्रस्थानकार्यस्योपक्षेपात् 'ग्रथनं तदुपक्षेपः' इति तल्लक्षणम् ॥ ३ ॥

किंकुर्वाणपयोधिसेचितगृहारामा मुदे सर्वतो
लङ्केयं दशकण्ठविक्रमकथाबीजप्ररोहस्थली ।
देवेनात्र दशाननस्य दशभिश्छिन्नैः शिरोभिः क्रमा-
देकैकेन शतं शतं शतमखस्यामोदिता दृष्टयः ॥ ४ ॥

**रामः**—देवि वैदेहि, दृश्यतामितो लङ्कामुत्तरेण सुवेलं च पश्चिमेन

त्वदर्थीयत्क्रव्यात्कपिकुलकबन्धव्यतिकरैः
करालेयं भूमिर्भुवनभयमद्यापि तनुते ।
अभूवन्नम्भोधेरिह रुधिरमय्यो युवतयः
सहस्रं साहस्रास्त्रिदशयुवतीनां च पतयः ॥ ५ ॥

---

सूचितपात्रप्रवेशमाह तत इत्यादिना । किंकुर्वाणेति—सर्वतः सर्वस्मिन्नपि प्रदेशे किंकुर्वाणेन भृत्यकर्माचरता पयोधिना समुद्रेण सेचिताः सेचनं कारिताः गृहारामा निष्कुटा यस्यां सा रावणभीत्या समुद्रः स्वयमेव लङ्कोद्यानवनानि शुद्धजलैः सिञ्चतीत्यर्थः दशकण्ठस्य विक्रमकथाया एव बीजस्य प्ररोहस्थली उत्पत्तिक्षेत्रं इयं लङ्का मुदे संतोषाय भवतीति शेषः अत्र लङ्कायां देवेन भवता कर्त्रा च्छिन्नैः दशाननस्य दशभिः शिरोभिः क्रमाद्यथाक्रमं एकैकेन शिरसा शतमखस्येन्द्रस्य शतं शतं दृष्टय आमोदिताः सन्तोषिताः रावणस्यैकस्मिन्नेकस्मिन् शिरसि भवता छिन्ने इन्द्रस्य नेत्राणां शतकं शतकं तर्पितमासीदित्यर्थः एवमिन्द्रेणापि दुर्जयस्य रावणस्यापि जेता भवानिति भावः । इत आरभ्यानवमश्लोकमनुभूतार्थराक्षसवधकथनान्निर्णयाख्यं निर्वहणसंध्यङ्गमुक्तं 'अनुभूताख्या तु निर्णयः' इति तल्लक्षणात् ॥ ४ ॥

लङ्कामित्यादि लङ्कासुवेलयोरुत्तरापरस्यां दिशीत्यर्थः । त्वदिति— इयं भूमिः त्वदर्थीयतां त्वल्लाभमभिलष्यतामित्यर्थः (त्वमेवार्थस्त्वदर्थस्तमात्मन इच्छतामित्यर्थे 'सुप आत्मनः क्यच्' इति क्यचि 'क्यचि च' इत्यस्य ईति शता ) क्रव्यादां राक्षसानां कपीनां च कुलस्य कबन्धानां कृत्तशिरस्कानां शरीराणां व्यतिकरैः संबन्धैः कराला भीषणा सती अद्यापि भुवनस्य भयं भुवनभयं शेषषष्ठ्या समासः तनुते विस्तारयति इहात्र भूम्यां अम्भोधेः समुद्रस्य रुधिरमय्यो रक्तरूपाः सहस्रं युवतयः स्त्रियः, तथा त्रिदशयुवतीनामप्सरसां साहस्राः सहस्रसंख्यावन्तः 'अण् च' इति मत्वर्थीयोऽण् पतयो वीरस्वर्गगामिनो भर्तारश्च अभूवन्नुद्भूताः ॥ ५ ॥

अपि च

उद्यम्य दृष्टनिजपन्नगरत्नमात्रानस्त्राणि चन्दनतरूनुपरि भ्रमन्तः ।
द्यां ज्योतिरिङ्गणमयीमिव मेघनादमायातमोवलयिताः कपयो वितेनुः ।६।

**सीता**— अज्जउत्त, अवि एद्ध एव्व भुअगपासबन्धणं सीदाए किदे अणुहाविदा तुह्मे । आर्यपुत्र, अप्यत्रैव भुजगपाशबन्धनं सीतायाः कृतेऽनुभाविता यूयम् ।

**रामः**— आं मैथिलि,

चर्वितपीनाहिगणो घणिति विनिष्ठ्यूतफणमणिरभीक्ष्णम् ।
अहिबन्धनवैधुर्यं व्यधुनोदिह नौ विहङ्गेन्द्रः ॥ ७ ॥

( विमृश्य । सस्मितम् । ) अहो वैषम्यमस्या अहिजातेः ।

द्वे तावत्करणे रसान् रसयितुं शब्दांश्च रूपाणि च
श्रोतुं द्रष्टुमथैकमिन्द्रियमुरो गत्यै निगूढं पदम् ।

---

उद्यम्येति— कपयो वानराः दृष्टं निजानां पन्नगानां सर्पाणां रत्नमात्रं मणिरेव केवलं येषां तान् चन्दनतरूंश्चन्दनवृक्षान् अस्त्राण्युद्यम्यायुधत्वेन गृहीत्वा उपर्य्याकाशे भ्रमन्तः सन्तः मेघनादस्येन्द्रजितो मायातमसा मायानिर्मितेनान्धकारेण वलयिता वेष्टिता आच्छादिताः सन्त इत्यर्थः द्यामाकाशं ज्योतिरिङ्गणमयीं खद्योतप्रायामिव वितेनुर्विस्तारयामासुः ॥ ६ ॥

चर्वितेति— चर्वितो भक्षितः पीनानां स्थूलानां अहीनां सर्पाणां गणः येन सः अभीक्ष्णं पुनः पुनः घणिति शब्दविशेषं कृत्वा विनिष्ठ्यूता निरस्ताः फणमणयः भक्ष्यमाणसर्पफणरत्नानि येन सः विहङ्गेन्द्रो गरुडः इहास्मिन् प्रदेशे नावावयोः अहिबन्धनवैधूर्यं नागपाशव्यथां व्यधुनोद्व्यपोहयामास ॥ ७ ॥

द्वे इति—हे मातः कद्रु 'सञ्ज्ञायाम्' इत्यूङि 'अम्बार्थनद्योः' इति संबुद्धौ ह्रस्वः रसान् मधुरादीन् रसयितुमास्वादयितुं द्वे करणे द्व्यवयवविशिष्टं रसनाख्यमिन्द्रियं त्वत्पुत्राणामिति सर्वत्र योज्यं द्विजिह्वत्वात्तेषां, अथशब्दः प्रकृतान्तरदर्शनार्थः शब्दान् रूपाणि च यथाक्रमं श्रोतुं द्रष्टुं च एकमिन्द्रियं चक्षुराख्यं चक्षुःश्रवस्त्वात्तेषां, गत्यै गमनार्थं उरो वक्षः निगूढमन्यैरलक्ष्यं पदमङ्घ्रिः उरगत्वात्तेषां, अन्येष्वशनेष्वाहारेषु सत्सु विद्यमानेष्वपि जगतां प्राणा वायवः 'जगत्प्राणः समीरणः' इत्यमरः स्वदन्तेतरामतीव रोचन्ते वाताशनत्वात्तेषां, भवती भूयः पुनरपि ईदृशान् सुतान् यदि प्रसौति कांक्षा ईदृशप्रसवो मास्तु भवत्या इत्यर्थः ॥ ८ ॥

अन्येष्वप्यशनेषु सत्सु जगतां प्राणाः स्वदन्ततरां
मातः कद्रु यदि प्रसौति भवती भूयः सुतानीदृशान् ॥ ८ ॥
( सर्वे हसन्ति । )

**सीता**— ( सस्नेहस्मितं लक्ष्मणमवलोक्य रामं प्रति । ) अज्जउत्त, सोमित्तिकित्तिकन्दलीसमुप्पत्तिखत्तं कदरो उण संणिवेसो । आर्यपुत्र, सौमित्रिकीर्तिकन्दलीसमुत्पत्तिक्षेत्रं कतरः पुनः संनिवेशः ।

**रामः**— ( सहर्षरोमाञ्चम् । ) देवि मैथिलि, अयमितो हस्तं दक्षिणेन दाशरथिदशकंधरस्कन्धावारैकवीरयोर्लक्ष्मणमेघनादयोर्द्वन्द्वयुद्धव्यतिकरैकसाक्षी सुवेलपादः ।

**सीता**— एद्द एव्व

अणुराअरोमकण्टअसेअजलेहिं णिसाअरी का वि ।
उद्दीविअणिव्वाविअदइआचिआणलमणुमरेदि ॥ ९ ॥

अत्रैव । अनुरागरोमकण्टकस्वेदजलैर्निशाचरी कापि । उद्दीपितनिर्वापितदयितचितानलमनुम्रियते ।

**रामः**— आं जानाकि, इदमेव वीरलक्ष्मीस्वयंवरणकौतुकागारम् । इह हि

आनीतद्रोणशैलेन सौमित्रेः शल्यहारिणा ।
अक्रियन्त जगन्त्येव निःशल्यानि हनूमता ॥ १० ॥

**सीता**— ( स्मृतिमभिनीय सानुरागम् । ) अज्जउत्त, किक्किंधेसरकंधावारधुरंधरो रहुउलकुडुम्बविहुरबंधु सो कहं दाणिं हणुमंदो । आर्यपुत्र, किष्किन्धेश्वरस्कन्धावारधुरंधरो रघुकुलकुटुम्बविधुरबन्धुः स कथमिदानीं हनुमान् ।

---

कन्दली नवाङ्कुरः । व्यतिकरः संमर्दः । पादः प्रत्यन्तपर्वतः । **अनुरागेति**— कापि निशाचरी राक्षसी अनुरागरोमकण्टकैः स्वदयितकृतभोगस्मरणानन्दरोमोद्गमैः स्वेदजलैस्तद्वैधुर्यनिमित्तैश्च, यथाक्रममुद्दीपितं रोमकण्टकैरेधितं निर्वापितं स्वेदजलैरुपशमितं च दयितस्य चितानलं चिताग्निमनुम्रियते तेन सह निर्वाणं यातीत्यर्थः ॥ ९ ॥

**आनीतेति**—आनीतो द्रोणशैलो विशल्यकरण्याद्योषधिपर्वतो येन तेन ततश्च सौमित्रेः शल्यहारिणा अस्त्रव्यथां परिहरता हनूमता कर्त्रा जगन्त्येव सर्वे च लोकाः निःशल्यान्यक्रियन्त निरुपद्रवाणि कृतानि ॥ १० ॥

विधुरबन्धुर्विश्लेषपरिहर्त्ता 'वैकल्येऽपि च विश्लेषे विधुरं विकले त्रिषु ।'

**रामः**— देवि,

क्षुण्णे निशाचरपतौ रविबिम्बवर्त्ती तातो मया दशरथः स्वयमेव दृष्टः।
तस्याज्ञया रघुपुरीं प्रहितः पुरैव राज्याभिषेकविधिसंभृतये हनूमान् ॥ ११ ॥

( विमानवेगनाटितकेन । ) देवि, प्रणम्यतामयमितो महानम्बुराशिः ।

लक्ष्मीरस्य हि यादः कृष्णोरःस्थापि सुभटभुजवसतिः ।
इन्दुः स च मृडचूडामणिरपि जगतामलंकारः ॥ १२ ॥

( सविमर्शम् । )

स्यादेव तोयममृतप्रकृतिर्यदि स्यान्नैकान्तमद्भुतमिदं पुनरद्भुतं नः ।
लक्ष्मीतुषारकरकौस्तुभपारिजातधन्वन्तरिप्रभृतयो यदपां विवर्त्ताः ॥ १३ ॥

अपि च देवि,

आकण्ठदष्टशिरसाप्यविभाव्यपृष्ठपार्श्वोदरेण चिरमृग्भिरुपास्यमानः ॥
नाभीसरोरुहजुषा चतुराननेन शेते किलात्र भगवानरविन्दनाभः ॥ १४ ॥

---

इति त्रिकाण्डशेषः । **क्षुण्ण इति**—निशाचरपतौ रावणे क्षुण्णे हते सति रविबिम्बवर्त्ती सूर्यमण्डलगतस्तातो दशरथो मया स्वयमेव दृष्टः साक्षात्कृतः, तस्य तातस्य आज्ञया हनूमान् राज्याभिषेकविधेः संभृतये सामग्रीसंभरणार्थं रघुपुरीमयोध्यां प्रति पुरैव त्वत्समागमात्प्रागेव प्रहितः प्रेषितः ॥ ११ ॥

**लक्ष्मीरिति**—हि यतः कृष्णोरःस्था विष्णुवक्षःस्थलवासिन्यपि सुभटानां वीराणां भुजे वसतिर्वासो यस्यास्तादृशी लक्ष्मीः, तथा मृडस्य शिवस्य चूडामणिः शेखरोऽपि जगतामलंकारः स इन्दुश्च अस्य समुद्रस्य यादो जलजन्तुस्तज्जन्यत्वाद्यादस्त्वव्यपदेशः, एवं महत्परिग्रहोत्पादकत्वेन प्रख्यातमहत्त्वोऽयं प्रणम्यतामिति संबन्धः ॥ १२ ॥

**स्यादिति**— तोयं जलं अमृतस्य पीयूषस्य प्रकृतिः कारणं जलस्वभावं च स्याद्यदि तर्हि एकान्तमद्भुतमत्यन्तमाश्चर्यं न स्यादेव द्रवात्मकत्वादुभयोः कार्यकारणभावे सांगत्योपपत्तेः जलस्य च जलस्वाभाव्यानपायाच्चेत्यर्थः, इदं पुनर्वक्ष्यमाणं तु नोऽस्माकं अद्भुतं भवतीति शेषः, लक्ष्मीः, तुषारकरश्चन्द्रः, कौस्तुभः, पारिजातः कल्पवृक्षविशेषः, धन्वन्तरिरमृताहर्त्ता प्रथमवैद्यः, प्रभृतिर्येषां ते ऐरावतादयः प्रभृतिग्रहणेन गृह्यन्ते अपां विवर्ताः परिणामाः इति यदिदमद्भुतं न इति पूर्वेण संबन्धः तेषामद्रवमूर्त्तिमत्त्वादिति भावः ॥ १३ ॥

**आकण्ठेति**— भगवानैश्वर्यादिषाड्गुण्यपरिपूर्णः अरविन्दनाभो नारायणः

( सीता वन्दते । )

**लक्ष्मणः**— यत्सत्यमुत्सर्पिणी धर्मोत्तराणां सिद्धिः

**जरयतु जगत्कल्पोच्छित्तौ पिपर्तु पयोधरान्**
**वहतु बडबावक्त्रज्योतिर्दधातु सुधाभुजः ।**
**भवतु वपुषा यावांस्तावानगस्त्यरुषा पुन-**
**र्निधिरयमपामीषत्पानस्तपांसि नमोऽस्तु वः ॥ १५ ॥**

**रामः**— ( सबहुमानम् । ) किमुच्यते

**मुनेः कलशजन्मनो जयति कापि गम्भीरता**
**यया चुलुकमम्भसामपि निधिः समुत्पद्यते ।**

अरविन्दं नाभौ यस्येति विग्रहे 'अच् प्रत्यन्ववपूर्वात्' इत्यादिसूत्रे अजिति योगविभागात्समासान्तोऽच् आकण्ठं कण्ठपर्यन्तं दृष्टानि शिरांसि यस्य तेनापि ततोऽर्वाग्भागस्य जले निमग्नत्वात् अविभाव्यानि विशिष्य निश्चेतुमशक्यानि पृष्ठं पश्चाद्भागः पार्श्वौ दक्षिणसव्यौ पक्षौ उदरं च तानि यस्य तेन अन्येषां मुखमात्र-दर्शनेऽपि पृष्ठाद्यवयवसंनिवेशस्थानं निश्चितं भवत्यस्यतु सर्वतोमुखत्वात्तन्न भवती-त्यर्थः नाभीसरोरुहजुषा नाभीपद्मगतेन चतुराननेन ब्रह्मणा ऋग्भिः पुरुषसूक्तादि-मन्त्रैः चिरमुपास्यमानः स्तूयमानः सन् अत्र शेते योगनिद्रां भजति किलेति प्रसिद्धौ ॥ १४ ॥

धर्मेण ( तपसा ) उत्तराणां श्रेष्ठानां सिद्धिर्धर्मफलनिष्पत्तिः उत्सर्पिण्यति-शायिनीति यत्तत्सत्यमित्यर्थः तदेव समर्थयते **जरयत्विति**—अयमपां निधिः समुद्रः कल्पोच्छित्तौ प्रलयारम्भे जगज्जरयतु जीर्णं करोतु प्रविलापयत्वित्यर्थः 'जॄष् वयोहानौ' इति दैवादिकधातोः 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' । इति मित्वाद्ध्रस्वः, पयोधरान्मेघान् पिपर्तु पालयतु दाहशमनेन, पूरयतु वा, 'पॄ पालनपूरणयोः' इति धातोः 'अर्त्तिपिपर्त्योश्च' इत्यभ्यासस्येत, बडबावक्त्रज्योतिर्बडबामुखाग्निं वहतु दधातु, सुधाभुजो देवान् दधात्वमृतदानेन पुष्णातु, किं च वपुषा शरीरेण यावां-स्तावान् भवतु कीदृशपरिमाणो वास्तां, पुनरपितु अगस्त्यस्य रुषा कोपेन ईषत्पा-नोऽकृच्छ्रेण पातुं शक्योऽभूदिति शेषः तस्माद्धे तपांसि वः एवं सर्वजगत्प्रविला-पनादिकुशलसमुद्रपानादिसाधनभूतेभ्यो युष्मभ्यं नमोऽस्तु ॥ १५ ॥

**मुनेरिति**—कलशजन्मनो मुनेरगस्त्यस्य गम्भीरता अगाधत्वं कापि जयति वाचामगोचरत्वेन वर्त्तते यया गम्भीरतया अम्भसां निधिः समुद्रोऽपि चु-

अमुष्य पुनरीश्महे न विवरीतुमुत्तुङ्गतां
यथा भवति नोच्चकैरहह सोऽपि विन्ध्याचलः ॥ १६ ॥

अपि च वत्स, दुरवगाहगम्भीरमधुराणि महतां चरितानि ।

तथाहि ।

अचिन्त्याः पन्थानः किमपि महतामन्धकरिपो-
र्यदक्ष्णोऽभूज्ज्योतिस्तदकृत कथामप्यमदनाम् ।
मुनेर्नेत्रादत्रेर्यदजनि पुनर्ज्योतिरहह
प्रतेने तेनेदं मदनमयमेवं त्रिभुवनम् ॥ १७ ॥

किं च जगद्विगमघस्रघस्मरसहस्रभास्वत्प्रभा-
परिक्कथनपिण्डितो लवणकूट एवार्णवः ।
अयं क्षणमभूदधिज्वलति कालरुद्रानले
चटच्चटदिति स्फुटन्न भवति स्म यावत्क्षणात् ॥ १८ ॥

**सीता**— अज्जउत्त, जलणिहिमज्जवट्टिणो लङ्कापोदअस्स जंबूदीवोवस-

---

लुकं समुत्पद्यते प्रसृतिपरिमितो बभूवेत्यर्थः पुनरपितु अमुष्य उत्तुङ्गतामौन्नत्यं विवरीतुं नेश्महे न शक्ताः स्मः यथा येन प्रकारेण स विन्ध्याचलोऽपि उच्चकैर्न-भवत्यौन्नत्यं न भजति तथाविधोत्तुङ्गतामिति संबन्धः, विरुद्धावस्थाने हि गाम्भी-र्यौन्नत्ये, तत्पारम्यभाजोः सिन्धुविन्ध्ययोर्निग्रहेण तयोरस्मिन्नविरोधेनावस्थानम-तिशयितत्वं चावसितामिति भावः अहहाद्भुतम् ॥ १६ ॥

**अचिन्त्या इति**—महतां पन्थानो मार्गा व्यापारा इति यावत् किमप्य-चिन्त्याः कथमिति निश्चेतुमशक्याः अन्धकरिपोर्महेश्वरस्य अक्ष्णो नेत्राद्यज्ज्यो-तिरभूत्तत् कथामपि अमदनां मन्मथरहितामकृत कृतवत्, यत्पुनर्ज्योतिः अत्रेर्मु-नेर्नेत्रादजनि जातं तेन ज्योतिषा चन्द्रेण इदं त्रिभुवनं मदनमयं मन्मथप्रायमेव प्रतेने रचितं कामोद्दीपकत्वाच्चन्द्रस्येति भावः ॥ १७ ॥

**जगदिति**—अयमर्णवः समुद्रः जगतो विगमघस्रे प्रलयदिने घस्मराणां भक्षणशीलानां सर्वोपसंहाराय प्रवृत्तानां सहस्रस्य भास्वतां युगपदुदितानामादि-त्यानां प्रभायाः परिक्कथनेन निष्पाकेन पिण्डितः पिण्डाकारतां नीतः सन् क्षणं लवणकूटः क्षारराशिरभूत्, कालरुद्रानले प्रलयाग्नौ अधिज्वलति सर्वतो दहति सति यावत्क्षणात्तत्क्षणेनैव चटच्चटदिति स्फुटन् शब्दविशेषपूर्वकं विशीर्यमाणः सन् न भवति स्म सत्तामेव नालभत विनष्टोऽभूदित्यर्थः । चटच्चटदितीत्यत्र 'नाम्रे-डितस्यान्त्यस्य तु वा' इति पररूपाभावपक्षे रूपम् ॥ १८ ॥

ज्जमणसिङ्खलेव को एसो पाडेभाइ । **आर्यपुत्र, जलनिधिमध्यवर्त्तिनो लङ्का-पोतस्य जम्बूद्वीपोपसंयमनशृङ्खलेव क एष प्रतिभाति ।**

**रामः**— देवि मेदिनीनन्दिनि, पतितपौलस्त्यजगद्विजयकेतुदण्डानुकारी काकुत्स्थकुटुम्बदुःखसंविभागदायादस्य वानरपतेः कीर्तिमयो महासेतुः ।

**सीता**— ( सहर्षम् । ) दिट्ठिआ अज्जउत्तदंसणपच्चासादरुणो विच्छिण्णस्स परोहणमहोसहि सेउबन्धो दिस्सइ । **दिष्ट्या आर्यपुत्रदर्शनप्रत्याशातरोर्विच्छिन्नस्य प्ररोहणमहौषधिः सेतुबन्धो दृश्यते ।** ( अञ्जलिं बद्ध्वा । ) भयवं णमो दे । **भगवन्नमस्ते ।**

**रामः**— देवि विश्वंभरासंभवे, पश्य पश्य ।

**यथा दूरापातित्रिदशयुवतीनेत्रसुलभा-**
**मपां भर्त्ता हारावलिवलयलक्ष्मीं वितनुते ।**
**तथायं माणिक्यस्फटिककनकग्रावशिखरै-**
**रशून्यात्मा सेतुर्भवति तु महानायक इव ॥ १९ ॥**

**यस्मिन्निबध्यमाने**

**शैलप्रवेशात्प्रबलीभवद्भिः कल्लोलकूटैरभिताडितानाम् ।**
**आसीन्निवृत्त्याचलगामिनीनामम्भोधिरेव प्रभवो नदीनाम् ॥ २० ॥**

---

पोतो वहित्रम् । दायादस्य भागिनः । **यथेति**—अपां भर्त्ता समुद्रः दूरादापातिनीनामागच्छन्तीनां त्रिदशयुवतीनाममरीणां नेत्रैः सुलभां सुखेन लब्धुं योग्यां अतिदूरवर्त्तित्वेन रेखामात्रप्रतीतेः, हारावलिवलयस्य लक्ष्मीं श्रियं यथा येन प्रकारेण वितनुते भुव इति शेषः तथा माणिक्यस्फटिककनकमयाः ग्रावाणः शिला एषु तैः शिखरैः अशून्यः पूर्णः आत्मा स्वरूपं यस्य तादृशः अयं सेतुस्तु महानायकोऽतिस्थूलो हारमध्यमणिरिव भवति 'नायको नेतरि श्रेष्ठे हारमध्यमणावपि' इति हेमचन्द्रः ॥ १९ ॥

**शैलेति**—शैलानां पर्वतानां प्रवेशात्सेतुबन्धनार्थं समुद्रे प्रक्षेपणाद्धेतोः प्रबलीभवद्भिरधिकतां गच्छद्भिः कल्लोलकूटैस्तरङ्गराशिभिः अभिताडितानां प्रतिहतवेगानामत एव निवृत्य परावृत्य अचलगामिनीनां स्वोत्पत्तिपर्वतं प्रति प्रतीपगानां नदीनां अम्भोधिः समुद्र एव प्रभवः उत्पत्तिस्थानमासीत् तथा प्रतीतमित्यर्थः, पर्वतसंभवाः समुद्रगामिन्यो हि नद्यः सेतुबन्धनावसरे तु पर्वतसंबन्धद्विगुणवेगकल्लोलप्रतिहताः प्रतिगच्छन्त्यः सत्यः समुद्रप्रभवाः पर्वतगामिन्य इव बभुरिति भावः ॥ २० ॥

( सुग्रीव प्रति । )

अयं सेतुश्रद्धोत्कलितकपिनिक्षिप्तशिखरि-
प्रतिष्ठावर्धिष्णुः क्षणमथ नदीभिः प्रतिवहन् ।
समुत्खातक्षोणीधरकुहरपूर्तिव्यतिकर-
प्रमृष्टाहंकारः कथय किमवस्थो निधिरपाम् ॥ २१ ॥

**सुग्रीवः**— देव, भवच्चरित्रचित्रफलकायामस्माकं चेतसि किं नाम न लिखितमस्ति । अपि च ।

सेतूद्योगे सपदि लवणादन्यमन्तस्तिमिभ्यः
कालेनापां मधुरमपि हि स्वादमुद्भेदयन्त्यः ।
शैलक्षेपोच्चलितसलिलव्यूहतुच्छे समन्ता-
द्वारां पत्यौ पटुतरमपूर्निम्नगाः संनिपेतुः ॥ २२ ॥

**विभीषणः**— देव मनुवंशमौक्तिक,

सद्यः पीत्वा दरीभिर्जलनिधिमचिराद्दृष्टमैनाकबन्धु-
प्रीतिप्रौढाश्रुबिन्दुद्विगुणमहिमभिर्निर्झरैः पूरयन्तः ।
ये विन्यस्ताः पुरस्तान्निशि निशि निवहैरोषधीनां ज्वलद्भि-
स्ते दृश्यन्ते तदात्वोषितकपिशिबिरस्मारिणः सेतुशैलाः ॥ २३ ॥

---

अयमिति—अयमपां निधिः सेतुश्रद्धया उत्कलितानामुद्धृतानां कपिभिः निक्षिप्तानां च शिखरिणां पर्वतानां प्रतिष्ठया स्थित्या वर्धिष्णुर्वधनशीलः न् 'अलं कृञ्' इत्यादिना इष्णुच् अथानन्तरं क्षणं नदीभिः प्रतिवहन् प्रतिगच्छन् सन् समुत्खातानामुद्धृतानां क्षोणीधराणां पर्वतानां कुहरपूर्त्तिव्यतिकरेण छिद्र-पूरणसंबन्धेन प्रमृष्टो व्यपनीतः अहंकारः आगन्तुकाभ्युदयनिमित्तो गर्वो यस्य तथाभूतः सन् किमवस्थः कीदृशावस्थाविशिष्टः अभूदिति शेषः कथय ॥ २१ ॥

सेत्विति—अमूर्निम्नगा नद्यः सेतूद्योगे सेतुबन्धनारम्भे सति लवणादन्यं मधुरं स्वादं रसमपि सपदि तत्क्षणं कालेन अन्तस्तिमिभ्योऽन्तर्वर्तिमत्स्यविशेषभ्यः उद्भेदयन्त्यः दर्शयन्त्यः सत्यः समन्तात्सर्वतः शैलक्षेपोच्चलितेन पर्वतप्रक्षेपण-विघटितेन सलिलव्यूहेन जलवेण्या तुच्छे शून्ये वारां पत्यौ समुद्रे पटुतरमतीव वेगेन संनिपेतुः पतन्ति स्म ॥ २२ ॥

सद्य इति— ये सद्यस्तत्क्षणमेव दरीभिर्गुहाकुहरैः जलनिधिं समुद्रं पीत्वा शोषयित्वा ततश्च दृष्टस्य मैनाकस्य बन्धोः प्रीत्या प्रेम्णा प्रौढैः प्रसृतैः अश्रु-

**सीता**— ( सस्मितम् । ) अज्जउत्त, गोरीगुरुणो गिरिन्दस्स जुवराओ ज-लणिहिगब्भवट्टी मेणाओ पक्खच्छेदं विणा वि ठावरीभूदो । आर्यपुत्र, गौरीगुरोगिरीन्द्रस्य युवराजो जलनिधिगर्भवर्ती मैनाकः पक्षच्छेदं विनापि स्थावरीभूतः ।

**रामः**— (विहस्य ।) आं जानाकि,

क्रौञ्चं विहाय पुत्रं च पितरं च हिमालयम् ।
प्रविश्य जलधिं पक्षौ रक्षतानेन किं कृतम् ॥ २४ ॥

**सीता**— (हसन्ती पुष्पकं प्रति ।) विमाणराअ, गअणमग्गसंकमणकोदूहलोल्लसिअमाणसाह्मि, ता उण्णमेहि दाव । विमानराज, गगनमार्गचङ्क्रणकौतूहलोल्लसितमानसास्मि, तस्मादुन्नम तावत्

**रामः**—(सकौतुकास्मितम् ।) वैदेहि, पश्य पश्य ।

यथा यथा परं व्योम विमानमधिरोहति ।
तथा तथापसर्पन्ति पुरतः पुरतो दिशः ॥ २५ ॥

किं च आसन्नतपनश्यानत्वचः पुष्पकपीडिताः ।
गगनार्णवयादांसि ताम्यन्ति स्तनयित्नवः ॥ २६ ॥

---

बिन्दुभिः द्विगुणो महिमा महत्वं येषां तैर्निर्झरजलप्रवाहैः पूरयन्तः समुद्रं पुनरपि पूर्णं कुर्वन्तः सन्तः ज्वलद्भिः ओषधीनां समूहैःसह पुरस्तादग्रभागे निशि प्रतिरात्रि विन्यस्तास्तमोपहदीपत्वेन निहिताः ते सेतुशैलाः तदात्वे तत्काले उषितानां कृतावासानां 'गत्यर्थाकर्मक' इत्यादिना वसेः कर्त्तरि निष्ठा कपीनां शिबिरस्मारिण आवासस्थानस्मृतिकारिणः सन्तो दृश्यन्ते ॥ २३ ॥

स्थावरीभूतो निर्व्यापारोऽभूदित्यर्थः । क्रौञ्चमिति—स्पष्टोऽर्थः ॥ २४ ॥

यथेति—विमानं कर्तृ यथा यथा येन येन प्रकारेण परमुपरि व्योमाकाशंकर्माधिरोहति तथा तथा तेन तेन प्रकारेण दिशः पुरतः पुरतः सर्वस्मिन्नपि पूर्वभागे 'नित्यवीप्सयोः' इति वीप्सायां द्विरुक्तिः अपसर्पन्ति दूरं गच्छन्ति॥२५॥

आसन्नेति— गगनार्णवस्याकाशरूपसमुद्रस्य यादांसि जलजन्तवः स्तनयित्नवो मेघाः आसन्नेन संनिहितेन तपनेनादित्येन श्याना संकुचिता त्वक् येषां तथाभूताः सन्तः पुष्पकेण पीडिता वेगकम्पिताः सन्तः ताम्यन्ति अस्वास्थ्यं भजन्तीत्यर्थः ॥ २६ ॥

अमी ते गम्भीरस्तनितरवरौद्रा नयनयो-
रनायुष्यं पुष्यन्त्यवतमसमुच्चैर्जलमुचः ।
विसर्पद्भिर्येषामुपरि परमिन्दोः परिमलै-
रसंबाधज्योत्स्नातिमिरचयचित्रं वियदभूत् ॥ २७ ॥

**सुग्रीवः**— (अधोऽवलोक्य । सकौतुकं रामं प्रति ।) दूरादेवावलोकय तावत् ।
निह्नुतोन्नतनतप्रविभक्तिः स्वस्ववर्णविनिविष्टपदार्था ।
अम्बुराशिपरिवेषवती भूश्चित्रकुट्टिममिव प्रतिभाति ॥ २८ ॥

अपि च अयमनेन महोदधिभोगिना वलयितो वसुधाफणमण्डलः ।
जगदनर्घमवाप्य भवादृशं किमपि रत्नमहंकुरुतेतराम् ॥ २९ ॥

---

अमी इति— गम्भीरेण तारेण स्तनितरवेण गर्जितशब्देन रौद्रा भयानकाः तेऽमी जलमुचा मेघाः नयनयोरनायुष्यं दृक्शक्तिप्रतिबन्धकमित्यर्थः 'प्रयोजनम्' इत्यधिकारे प्रतिजनाद्यन्तर्गणस्वर्गादिषु पाठादायुःशब्दस्य ततो यत् अवतमसं विरलं तमः 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच् उच्चैरतितरां पुष्यन्ति जनयन्तीत्यर्थः, वियदाकाशं कर्तृ येषां मेघानामुपरि परमूर्ध्वभाग एव विसर्पद्भिर्व्याप्रियमाणैः इन्दोश्चन्द्रस्य परिमलैः किरणैरित्यर्थः असंबाधयोरनुपहतयोर्मिश्रयोरिति यावत् ज्योत्स्नातिमिरयोश्चन्द्रिकान्धकारयोः चयेन समाहारणेकत्रोभयोर्मेलनेनेत्यर्थः चित्रमभूत् " चयः समूहे प्राकारमूलबन्धे समाहृतौ ' इति मदिनी ॥ २७ ॥

निह्नुतेति—भूर्भूमिः निह्नुता दूरवर्तित्वेन तिरोहिता उन्नतानामुच्छ्रितानां पर्वतादीनां नतानां निम्नगानां नद्यादीनां च प्रविभक्तिः प्रविभागस्तारतम्यमिति यावत् यस्यां तथाभूता सती स्वे स्वे वर्णे शुक्लादौ विनिविष्टो विनिवेशं गतः वर्णमात्रेण भासमान इत्यर्थः पदार्थः प्रासादादिर्यस्यां तथाभूता सती अम्बुराशिना समुद्रेण परिवेषवती परिधिमत्यावृतेत्यर्थः चित्रकुट्टिममिवालेख्यविशिष्टनिबद्धभूमिवत् प्रतिभाति ॥ २८ ॥

अयमिति—अनेन महोदधिभोगिना समुद्ररूपसर्पेण वलयितो वेष्टितोऽयं वसुधाफणमण्डलो भूमिरूपफणसमूहः जगति अनर्घममूल्यं सर्वश्लाघ्यमित्यर्थः भवादृशं किमपि निरतिशयं रत्नं अवाप्य अहंकुरुतेतरामतीव गर्वितं भवति ॥२९

**सीता**— (पुरोदर्शयन्ती ।) को एसो कप्पाणलजालकदम्बदह्यमाणसज्जन्तजलणिहिजिम्भन्तफेणद्दवअं विअ णिम्मलप्फालिअसिहरसहस्समहुरो महीअरो पुरो लक्खिज्जइ । क एष कल्पानलज्वालाकदम्बदह्यमानसज्जज्जलनिधिजृम्भमाणफेनस्तबकमिव निर्मलस्फटिकाशिखरसहस्रमधुरो महीधरः पुरो- लक्ष्यते ।

**विभीषणः**— देवि,

पुरः प्रालेयशैलोऽयं यस्मिन्मकरकेतवे ।
मृतसंजीवनी दुर्गा महौषधिरजायत ॥ ३० ॥

**सीता**— (सकौतुकम् ।) अवि एट्ठ एव्व चन्दसेअरणयणाणले आहुदीभूदो भअवं मम्महो । अपीहैव चन्द्रशेखरनयनानले आहुतीभूतो भगवान्मन्मथः।

**विभीषणः**–आं देवि, इयमुत्तरेण देवदारुवनरेखा विषमशरदुरन्तसाक्षिणी

पुरा पुरां भेत्तुरिह त्रिनेत्रीशृङ्गाटके तुल्यरुषि स्थितेपि ।
धग्धग्धगित्युज्वलदेकमन्ये तद्धूमलेखामपि नासहेताम् ॥ ३१ ॥

**रामः**— किमुच्यते.

नीललोहितललाटलाञ्छने लोचने जयति कोऽपि पावकः ।
रक्षितस्य जगदन्तहेतवे यस्य संज्वलनमात्मभूरभूत् ॥ ३२ ॥

---

**पुर इति**— पुरोऽग्रभागे अयं प्रालयेशैलो हिमवान् लक्ष्यत इत्यनुवर्त्तते यस्मिन्नस्मिन् पर्वते दुर्गा उमादेवी मकरकेतवे मन्मथमुज्जीवयितु 'क्रियार्थोपपदस्य च', इत्यादिना चतुर्थी मृतसंजीविनी तदाख्या महौषधिरजायत जाता 'ज्ञाजनोर्जा' इति जनेर्जादेशः कथा तु स्पष्टा ॥ ३० ॥

अपीत्यादि अपिः प्रश्ने । विषमशरस्य मन्मथस्य दुरन्तस्य दाहस्य साक्षिणी । पुरेति । पुरा पूर्वस्मिन् काले इहास्मिन् प्रदेशे पुरां भेत्तुस्त्रिपुरान्तकस्य त्रिनेत्र्यां नेत्रत्रय एव शृङ्गाटके चतुष्पथे तुल्यरुषि समानकोपवति स्थिते सत्यपि, एकं भालनेत्रं धग्धग्धगिति धगिति शब्दविशेषपूर्वकं उज्ज्वलज्ज्वलितमभूदिति शेषः अन्ये साधारणे नेत्रे तु तस्य भालनेत्रस्य धूमलेखामपि नासहेतां न सोढवती ३१

**नीलेति**— नीललोहितस्य शिवस्य ललाटलाञ्छने. भालचिह्नभूते लोचने कोप्यनिर्वचनीयतेजाः पावकोऽग्निर्जयति, आत्मभूः कामः जगतोऽन्तहेतवे संहारार्थं रक्षितस्य यस्य पावकस्य संज्वलनमभूत समिदासीत् करणे ल्युट् नीललोहितेत्यत्र नीलः कण्ठे लोहितो जटायामिति नीललोहितः, यद्वा 'नीलं येन ममाङ्गंतुरसाक्तं लोहितं त्विषा । नीललोहित इत्येव ततोऽहं परिकीर्तितः ।' इति स्कान्दे शिवेनोक्तत्वात्तल्लक्षणा वा ॥ ३२ ॥

**सीता**— ( रामं प्रति । ) अज्जउत्त, तह णिरणक्कोसो कहं उण पडिणि-वुत्तो परिणेदुं महादेवो देविए । आर्यपुत्र, तथा निरनुक्रोशः कथं पुनः प्रतिनिवृत्तः परिणेतुं महादेवो देव्यै ।

स्मरपरिभवनिःसहायदीर्घैरथ सुभगंकरणैरियं तपोभिः ।
तदकृत यदसौ निजेऽपि देहे जयति जगत्पतिरात्मनाद्वितीयः ॥३३॥

**विभीषणः**— ( सपरिहासम् । )

चिरमनया तपसित्वा कपालवृषविषधरैकवित्तस्य ।
चक्रे हरस्य मूर्त्तिः फलमर्धं फलदमर्धं च ॥ ३४ ॥

**सीता**— ( विहस्य । ) कदरास्सिं उण सण्णिवेसे भअवदीए सव्वमङ्गलाए पाणिग्गहणमहूसवं आसी । कतरस्मिन् पुनः संनिवेशे भगवत्याः सर्वमङ्गलायाः पाणिग्रहणमहोत्सव आसीत् ।

**विभीषणः**— इदं पुरस्तादोषधिप्रस्थं नाम नगराजनगरम्,
अत्र हि संप्रदातरि महौषधीमये भूधरे मुखमुवाह पार्वतीम् ।
गूढकङ्कणफणीन्द्रनिर्भयां तारकेश्वरकिशोरशेखरः ॥ ३५ ॥

---

निरनुक्रोशो निर्दयः । प्रतिनिवृत्त आभिमुख्यं गतः । स्मरेति— इयं-मुमा अथ मन्मथदहनानन्तरं स्मरपरिभवेण कामतिरस्कारेण निःसहायै रूपकारक-शून्यैरत एव दीर्घैश्चिरमाचरितैः सुभगंकरणैः असुभगंसुभगं कर्तुं साधनभूतैः 'आढ्यसुभग' इत्यादिना करणे ख्युन् तपोभिः तदकृत तथा कृतवती, यद्यथा इह यत्तच्छब्दौयथातथार्थे, असौ जगत्पतिः परमेश्वरः निजे देहेऽपि आत्मनाद्वितीयः 'आत्मनश्च पूरणे' इत्यलुक् जयति अर्धनारीश्वरत्वेन स्वशरीर एव संख्याद्वय-विशिष्ट इति भावः ॥ ३३ ॥

चिरमिति—अनया गौर्याचिरं तपसित्वा तपश्चरित्वा 'कर्मणो रोमन्थ-तपोभ्यां वर्तिचरोः' इति क्यङिक्त्वा 'क्यस्य विभाषा' इति यलोपस्तत इट् कपालो भिक्षार्थकर्पटः वृषा यानार्थं वृषभः विषधराः भूषणार्थं सर्पाश्च त एव वित्तं धनं यस्य तस्य एकशब्द एवार्थकः हरस्य महेश्वरस्य मूर्तिः कर्म अर्धं वामार्धभागः फलं आत्मना व्याप्तत्वात्स्वतपःफलभूतं तथा अर्धं दक्षिणार्धभागः फलदं माहे-श्वरत्वेन स्वतपःफलप्रदं च चक्रे कृतम्, तपसा परमेश्वरस्य देहेप्यर्धमविन्दतेति भावः ॥ ३४ ॥

सर्वमङ्गलाया गौर्याः । संप्रदातरीति—महौषधीमये प्रचुरमहौषधिविशिष्टे

**रामः**— आं देवि.

**पितरि निजतुहिनसंपत्कल्पितहेमन्तविभ्रमे गौरी ।**
**निर्मदभुजङ्गभूषणमभीषणं प्रियकरं भेजे ॥ ३६ ॥**

**सीता**— ( सस्मितम् । ) अज्जउत्त, अवि एदस्सिं एव्व मअणतणुदहणवइअरणिरप्पमाणाए पुढमं अविस्ससन्दीए गोरीए चन्दचूडो संघडिओ णिअसरीरेण। **आर्यपुत्र, अप्येतस्मिन्नेव मदनतनुदहनव्यतिकरनिरात्ममानया प्रथममविश्वसन्त्या गौर्या चन्द्रचूडः संघटितो निजशरीरेण ।**

**रामः**— ( विहस्य । ) आं जानकि,

**एतस्यां हि तुषारभूधरशिरःसीम्नि प्रियार्धेन च**
**स्वेनार्धेन च तादृशे पशुपतौ वृत्तेऽर्धनारीश्वरे ।**
**शेषेणार्धयुगेन सप्रहसनं गौरीसखीभिस्तदा**
**चक्रे दक्षिणवामयोर्विनिमयादन्योऽर्धनारीश्वरः ॥ ३७ ॥**

अपि च,

---

प्राचुर्यार्थे मयट् ओषधिशब्दात् (कृदिकारादक्तिनः) इति ङीष् भूभरे हिमवति संप्रदातरि कन्याप्रदे सति तारकेश्वराकिशोरशेखरः बालचन्द्रधरो महेश्वरः (अनेन सर्पसंतापनिवर्तकसाधनवत्वं दर्शितं अमृतमयत्वाच्चन्द्रस्य) गूढैर्महौषधिवीर्येण तिरोहितैः कङ्कणफणीन्द्रैः वलयीकृतसर्पैः निर्भयां पार्वतीं सुखमनायासेन उवाह परिणीतवान् ॥ ३९ ॥

**पितरीति**— पितरि हिमवति निजया तुहिनानां हिमानां संपदा कल्पितो दर्शितो हेमन्तस्य ऋतुविशेषस्य विभ्रमो विलासो येन तथाभूते सति गौरी निर्मदा हेमन्ताविर्भावेण विमदाः भुजङ्गा एव भूषणं यस्य तं अत एव अभीषणं भयंकरतारहितं प्रियस्य शम्भोः करं भेजे स्वयमपि जग्राहेत्यर्थः ॥ ३६ ॥

मदनतनोर्मन्मथशरीरस्य दहनव्यतिकरण भस्मीकरणव्यसनेन निर्गतः आत्मनो मानो गर्वो यस्यास्तया ; **एतस्यामिति**— तादृशे पार्वतीतपःफलभूतात्मनि पशुपतौ महेश्वरे एतस्यां हि अत्रैव हिरवधारणे तुषारभूधरस्य हिमाचलस्य शिरःसिम्नि शिखरप्रदेशे 'सीमसीमे स्त्रियामुभौ' इति सीमन्शब्दस्य स्त्रीत्वं प्रियाया गौर्या अर्धेन वामाङ्गभागेन स्वेनार्धेन दक्षिणेन स्वभागेन च अर्धनारीश्वरे वृत्ते निष्पन्ने सति अर्धमर्धे वा नारी यस्य सोऽर्धनारिः. सचासावीश्वरश्चेत्यर्धनारीश्वर इति समासः तदा तस्मिन्नवसरे गौरीसखीभिः कर्त्रीभिः शेषेण शिवाभ्यां परि-

संभोगाननतिरिच्यमानविभवो यद्विप्रलम्भो रस-
स्तद्दिव्यं मिथुनं परस्परपरिस्यूतं नमस्कुर्महे ।
एकस्याः प्रतिबिम्बसंभृतविपर्यासे मुहुर्दर्पणे
सव्याङ्गस्थितिकौतुकं शमयति स्वामी यदत्रापरः ॥ ३८ ॥

**विभीषणः**— देवि,

स्वच्छन्दैकस्तनश्रीरुभयमतमिलन्मौलिचन्द्रः फणीन्द्र-
प्राचीनावीतवाही सुखयतु भगवानर्धनारीश्वरो वः ।
यस्यार्धे विश्वदाहव्यसनविसृमरज्योतिरर्धे कृपोद्य-
द्बाष्पं चान्योन्यवेगप्रशमशिमिशिमाकारि चक्षुस्तृतीयम् ॥ ३९ ॥

---

त्यक्तेन अर्धयुगेनार्धद्वयेन दक्षिणवामयोर्विनिमयात्परिवर्त्तनाद्दक्षिणार्धे पार्वत्याः वामार्धे परमेश्वरस्य च संनिवेशादित्यर्थः सप्रहसनं तत्प्रयुक्तहासपूर्वकं अन्योऽर्धनारीश्वरः चक्रे कृतः ॥ ३७ ॥

संभोगेति—यस्य मिथुनस्य विप्रलम्भोरसः विश्लेषादिहेतुकः शृङ्गाररसः संभोगात्संश्लेषादिहेतुकात्संभोगशृङ्गारात् अनतिरिच्यमानोऽतिरिक्ततामगच्छन् विभवोऽनुभावः भवतीति शेषः शृङ्गाररसो द्विविधः विप्रलम्भः संभोगश्चेति तत्र विरहादिहेतुको विप्रलम्भशृङ्गारो यथा मेघदूतादिषु तत्प्रतियोगीसंभोगशृङ्गारः अस्य तु नित्यसंपर्काद्विप्रलम्भशृङ्गारो नास्तीत्यर्थः तत्तादृशं दिव्यमप्राकृतं परस्परस्मिन्नन्योन्यस्मिन् परिस्यूतं संपृक्तं मिथुनमुपास्महेऽर्धनारीश्वराख्यस्त्रीपुंसौ नमस्कुर्महे संभोगाननतिरिच्यमानत्वे हेतुमाह यद्यतः अत्रास्मिन्मिथुने अपरः एकदेशवर्ती दक्षिणभागस्थ इत्यर्थः स्वामी पुमान् एकस्या वामभागस्थायाः स्त्रियः सव्यार्धेस्थितौ दक्षिणभागे वर्त्तने कौतुकमुत्कण्ठां प्रतिबिम्बे प्रतिच्छायायां संभृतः दर्शितो विपर्यासो व्यत्यासो (दक्षिणवामयोर्वामदक्षिणावस्था) यस्मिंस्तादृशे दर्पणे मुकुरे मुहुः पदे पदे शमयति शान्तां करोति 'सव्यं वामे च दक्षिणे' इत्यजयः ॥ ३८ ॥

स्वच्छन्देति—स्वच्छन्दा स्वैरा अतिप्रख्यातेत्यर्थः एकस्तनस्य वामकुचस्य श्रीः शोभा यस्य तथाभूतः उभयमते वामदक्षिणरूपार्धद्वयेऽपि मिलन् व्याप्रियमाणः मौलिचन्द्रो यस्य तादृशः फणीन्द्राणां सर्पाणां प्राचीनावीतवाही दक्षिणांसावलम्बनकृत् भगवानैश्वर्यादिसंपन्नोऽर्धनारीश्वरः वः सुखयतु सुखिनः करोतु, यस्यार्धनारीश्वरस्य तृतीयं चक्षुर्भाललोचनं अर्धे दक्षिणभागे विश्वस्य

अपि च

स्वेदार्द्रवामकुचमण्डनपत्रभङ्गसंशोषिदक्षिणकराङ्गुलिभस्मरेणुः ।
स्त्रीपुंनपुंसकपदव्यतिलङ्घिनी वः शम्भोस्तनुः सुखयतु प्रकृतिश्चतुर्थी ॥४०॥

( अन्यतश्च दर्शयन् । )

आधत्ते दनुसूनुसूदनभुजाकेयूरवज्राङ्कुर-
व्यूहोल्लेखवलीमुखैरवयवैरक्ष्णां मुदं मन्दरः ।
आधारीकृतकूर्मपृष्ठकषणप्रक्षीणमूलोऽधुना
जानीमः परतः पयोधिमथनादुच्चैस्तरोऽयं गिरिः ॥ ४१ ॥

जगतो दाहे दहनक्रियायां व्यसनविसृमरमासक्त्या व्याप्रियमाणं ज्योतिर्यस्मिंस्तादृशं अर्धे वामभागे कृपया जीवनिष्ठदयया उद्यन् बाष्पो यस्मिंस्तादृशं च सत् अत एव अन्योन्ययोः ज्योतिर्जलयोः वेगप्रशमेन औष्ण्यशैत्ययोः प्रशान्त्या शिमशिमाकारि शिमिशिमाशब्दं कुर्वत् भवतीति शेषः ॥ ३९ ॥

स्वेदेति—स्वेदार्द्रस्य सात्त्विकभावाविर्भावेणोत्पन्नस्वेदजलीक्लिन्नस्य वामकुचस्य मण्डनस्यालंकारभूतस्य पत्रभङ्गस्य कुङ्कुमादिकृतमकर्यादिरचनाविशेषस्य संशोषी संशोषणकृत् दक्षिणकराङ्गुलेः भस्मरेणुर्यस्यास्तादृशी स्त्रियः पुंसः नपुंसकस्य च (नपुमान्, नचस्त्रीति नपुंसकं) पदव्यतिलङ्घिनी स्थानमतिक्रम्य वर्तमाना अतएव चतुर्थी चतसृणां पूरणी प्रकृतिर्लिङ्गं 'प्रकृतिर्योनिलिङ्गे च' इत्यमरः शम्भोस्तनुर्मूर्त्तिः; वः सुखयतु सुखिनः करोतु, अत्र तृतीयपादस्थविशेषणेन 'नैव स्त्री न पुमानेष न चैवायं नपुंसकः' इति श्रुत्युक्तस्वरूपत्वं च 'चतुर्थी' इत्यनेन 'चतुर्थं मन्यन्ते' इत्यादिश्रुत्युक्तविश्ववैश्वानरादिकारणभूततुरीयत्वं च, 'प्रकृतिः' इत्यनेन 'इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् ।' इत्यादिस्मृत्युक्तपरप्रकृत्याख्यक्षेत्रज्ञात्मत्वं च, पारमेश्वरमिति दर्शितं भवति ॥ ४० ॥

आधत्त इति—मन्दरो मन्थाचलः दनुसूनुसूदनस्य दानवारेर्विष्णोः भुजानां बाहूनां केयूरवज्राङ्कुरव्यूहानामङ्गदहीरशलाकासमूहानां उल्लेखवल्यः कर्षणजन्यरेखा मुखे येषां तैः अवयवैः अक्ष्णोर्मुदमाधत्ते अमृतमथनसमये मन्थभूतस्यास्यापतनार्थं विष्णुभुजाश्लेषेण कृतचिह्नः सन् नेत्रानन्दकरो भातीत्यर्थः । किं च अयं गिरिः अधुना वर्त्तमाने तु आधारीकृतस्य मन्थदण्डास्पदत्वेन स्थितस्य कूर्मस्य कमठरूपस्य विष्णोः पृष्ठस्य कषणेन घर्षणेन प्रक्षीणं मूलं यस्य तादृशः वर्त्तते इति शेषः तस्मान्नात्युच्छ्रित इत्यर्थः पयोधिमथनात्परतः प्राक्काले उच्चैस्तरोऽतीवोन्नतः इति जानीमो निश्चिनुम इत्यर्थः ॥ ४१ ॥

**रामः**— ( निर्वर्ण्य । सस्मितम् । )

तत्तादृक्फणिराजरज्जुकषणं संरूढपक्षच्छिदा-
घातारुंतुदमप्यहो कथमसौ मन्थाचलः सोढवान् ।
एतेनैव दुरात्मना जलनिधेरुत्थाप्य पापामिमां
लक्ष्मीमीश्वरदुर्गतव्यवहृतिव्यस्तं जगन्निर्मितम् ॥ ४२ ॥

**सीता**— ( सावेगम् । ) इमिणा एव्व मन्दरेण संखुहिददुद्धसाअरादो चन्दं उद्धरिअ विप्पउत्तभत्तणो इत्थिआजणस्स उवरि विसज्जिदा आरहडि । अनेनैव मन्दरेण संक्षुभितदुग्धसागराच्चन्द्रमुद्धृत्य विप्रयुक्तभर्तुः स्त्रीजनस्योपरि विसृष्टा आरभटी ।

**विभीषणः**— ( तदेव रामसूक्तं भावयन्नाह । ) अहह,

प्रक्षेप्तुमुदधौ लक्ष्मीं भूयोऽपि वलते मनः ।
किं तु प्रक्षिप्त एवायं पुनरायाति चन्द्रमाः ॥ ४३ ॥

---

तत्तादृगिति—असौ मन्थाचलो मन्दरगिरिः संरूढस्य किणीभूतस्य पक्षच्छिदाघातस्य पक्षच्छेदजव्रणस्य अरुंतुदं पुनर्व्रणोत्पादनेन व्यथाकरं ( भिदाद्यङ्च्छिदेति रूपं 'इरितो वा' इत्यङिति तु प्रामादिकम् ) एवंभूतमपि तत्तादृगतिदुःसहं फणिराजस्य वासुकेरेव रज्ज्वा मन्थदाम्नः कषणं घर्षणं कथं सोढवान् अहो दुःसहया तद्व्यथयैव तस्य मरणासंभवात्कष्टमित्यर्थः तत्र हेतुमाह दुरात्मना दुर्बुद्धिना एतेन मन्दरेणैव पापामसदाचारां पापशब्दादर्शआद्यच् इमां लक्ष्मीं उत्थाप्योत्पाद्य जगत् ईश्वर आढ्यः दुर्गतो दरिद्रः इति व्यवहृत्या व्यवहारेण व्यस्तं विभक्तं निर्मितं कृतम् ॥ ४२ ॥

आरभटीति—'भारती सात्वती चैव कैशिक्यारभटी तथा । चतस्रो वृत्तयो ज्ञेयाः' इति भरतोक्तवृत्तिष्वन्यतमा रौद्रबीभत्सरसाश्रया, प्रकृते तु रौद्रसकर्मभूतस्य शोकस्थायिभावकस्य दयितविप्रयोगादिविभावकस्याश्रुपाताद्यनुभावकस्य निर्वेदादिव्यभिचारिकस्य करुणरसस्योद्दीपनं चन्द्रमुत्पाद्य हिंसितमिति भावः 'रौद्रस्यैव च यत्कर्म स ज्ञेयः करुणो रसः ।' इति भरतोक्तेः रौद्रकर्मत्वं करुणस्य स्पष्टमेव । प्रक्षेप्तुमिति—लक्ष्मीं उदधौ समुद्रे भूयोपि प्रक्षेप्तुं पातयितुं मनः वलते तद्दौरात्म्यचिन्तनेनोत्सुकं भवतीत्यर्थः तर्हि तथा क्रियतां किं विमर्शेनेत्यत आह किं तु अयं चन्द्रमाः प्रक्षिप्त एवोदधौ पातितः सन्नपि ( एवोऽप्यर्थकः ) पुनरायात्यतस्तद्वदियमपि पुनरायायादिति बुद्ध्या वृथाश्रमो न क्रियत इति भावः ४३

( विमृश्य । )

कस्मैचित्कपटाय कैटभरिपूरःपीठदीर्घालयां
देवि त्वां प्रणिपत्य कुप्यसि न चेद्यत्किंचिदाचक्ष्महे ।
यत्ते मन्दिरमम्बुजन्म किमिदं विद्यागृहं यच्च ते
नीचान्नीचतरोपसर्पणमपामेतत्किमाचार्यकम् ॥ ४४ ॥

**लक्ष्मणः**— ( सहासम् । ) हन्त, सुरासुरमल्लारभटीतूर्यतालनर्त्तकी सकलराजकुलखलीकारखर्जूला साहसिकसहस्रशस्त्रान्धकारखेलनखद्योती मधुमथनजीमूतविलासविद्युल्लता किमेवमुपालभ्यते । इयं हि

गुणवद्भिः सह संगादुच्चैःपदमाप्तुमुत्सुका लक्ष्मीः ।
वीरकरवालवसतिर्ध्रुवमसिधाराव्रतं चरति ॥ ४५ ॥

**सीता**— ( साभ्यसूयमिव । ) णिअअम्मदुव्विलासविआरालसो लोओ लम्मिदेविए उवरि दुज्जणवअणाणि उप्पादेइ । निजकर्मदुर्विलासविचारालसो लोको लक्ष्मीदेव्या उपरि दुर्जनवचनान्युत्पादयति । (पुरो दर्शयन्ती । ) को

---

कस्मैचिदिति--देवि, कस्मैचित्कपटाय लोकप्रत्यायनार्थमित्यर्थः कैटभरिपोर्विष्णोः उरःपीठ एव दीर्घालयः स्थिरतर आवासो यस्यास्तां त्वां प्रणिपत्य नमस्कृत्य कुप्यसि न चेन्मत्प्रश्नेन कुपिता न स्याश्चेत किंचिदाचक्ष्महे त्वां पृच्छामः, प्रष्टव्यमाह— ते मन्दिरमालयभूतं यदम्बुजन्म पद्मं इदं ते विद्यागृहं गुरुकुलं किं, यच्च नीचात्पामरात् निम्नदेशाच्च 'नीचः पामरखर्वयोः' इति हेमचन्द्रः, नीचतरस्य ततोऽपि पामरस्य निम्नतरस्य च उपसर्पणमभिगमनं एतदपां जलानां आचार्यकं किं किंवा आचार्यकर्म जलस्य तव च गतिसाम्यात्तदीयपद्मैकशरणत्वाच्च तव तथा प्रश्न इति भावः अनेन 'कस्मैचित्कपटाय' इत्यत्रापि कपटनाटकसूत्रधाराद्विष्णोर्यत्किंचित्कापट्यं शिक्षितुं तद्धृदयवास इति चार्थान्तरध्वनिः ॥ ४४ ॥

मल्लारभटी युद्धसन्नाहः । खलीकारखर्जूला परस्परयुद्धादिजन्यपीडासहनहेतुभूता । **गुणवद्भिरिति**— लक्ष्मीः गुणवद्भिः शौर्यादिगुणसंपन्नैरारोहणसूत्रविशिष्टैश्च सह सङ्गात्संसर्गेण उच्चैःपदं महापुरुषसंश्रयमुन्नतस्थानं च आप्तुमुत्सुकोत्कण्ठिता सती वीराणां करवाले खड्गे वसतिर्वासो यस्यास्तथाभूतासती असिधाराव्रतं खड्गधारया प्राप्यत्वं 'युवा युवत्या सार्धं यन्मुग्धभर्तृवदाचरेत् । अन्तर्निवृत्तसङ्गः स्यादसिधाराव्रतं हि तत् ।' इत्युक्तलक्षणव्रतं च चरत्यनुतिष्ठति ध्रुवम् ॥ ४५ ॥

एसो दिवसन्दरे वि ससिणोण्णापिण्डप्पडिरूवो गिरिन्दो लक्खिअदि । क एष दिवसान्तरेऽपि शशिज्योत्स्नापिण्डप्रतिरूपो गिरीन्द्रो लक्ष्यते ।

**विभीषणः**— देवि,

सोऽयं कैलासशैलः स्फटिकतटभुवामंशुजालैर्ज्वलद्भि-
श्छाया पीतापि यत्र प्रतिकृतिभिरुपस्थाप्यते पादपानाम् ।
यत्रोपान्तोपसर्पत्तपनकरधृतस्यापि पद्मस्य निद्रा-
मुद्दामानो दिशन्ति त्रिपुरहरशिरश्चन्द्रलेखामयूखाः ॥ ४६ ॥

**रामः**— शतधा दृश्यमानोऽपि चक्षुःकौतुकं नः करोति ।

गिरिः कैलासोऽयं दशवदनकेयूरविलस-
न्मणिश्रेणीपत्राङ्कुरमकरमुद्राङ्कितशिलः ।
अमुष्मिन्नध्यास्य स्फटिकमयसर्वाङ्गविमले
निरीक्षन्ते यक्षाः फणिपतिपुरस्यापि चरितम् ॥ ४७ ॥

---

स इति—सोऽयं कैलासशैलः कैलासाख्यः पर्वतो भवति, यत्रास्मिन् शैले पादपानां वृक्षाणां छाया ज्वलद्भिर्दीप्यमानैः स्फटिकतटभुवां स्फटिकमयतटप्रदेशानां अंशुजालैः किरणसमूहैः पीता निरस्तापि प्रतिकृतिभिस्तादृशतटभूगततत्प्रतिच्छायाभिः उपस्थाप्यते व्यज्यते, किं च यत्र शैले उद्दामानोऽधिकाः त्रिपुरहरस्येश्वरस्य शिरश्चन्द्रस्य लेखायाः कलाया मयूखाः किरणाः उपान्तं समीपमुपसर्पतः प्राप्नुवतः तपनस्यार्कस्य करैः किरणैः धृतस्य व्याप्तस्यापि पद्मस्य निद्रां मीलनं दिशन्ति वितरन्ति यद्यपि चन्द्रसूर्ययोर्मध्ये सूर्यस्यैव प्राबल्यं विशेषतश्च कलामात्रस्य चन्द्रस्यातीव दौर्बल्यमेव तथापि 'प्रबला अपि बाध्यन्ते दुर्बलैः प्रबलाश्रितैः ।' इति न्यायेन त्रिपुरहरणादेव प्रख्याततेजसो हरस्याश्रयणाच्चन्द्रेणार्कस्य बाधितत्वं भवति ततश्च तयोः सांनिध्ययौगपद्येऽपि पद्मस्य मीलनमेवैकान्त्येन भवति न तु विकसनमिति भावः ॥ ४६ ॥

गिरिरिति—अयं गिरिः पर्वतः दशवदनस्य रावणस्य केयूरेष्वङ्गदेषु विलसन्तीनां खचितानां मणिश्रेणीनां पत्राङ्कुरमकरमुद्रया अङ्किता उद्धरणसमये कृतचिह्नाः शिला यस्य सः कैलासो भवतीति शेषः, यक्षाः स्फटिकमयैः स्फटिकरूपैः सर्वाङ्गैः विमले स्वाच्छ्यप्रतिबन्धकमलरहिते सर्वाङ्गेषु विमल इति वा समासः अमुष्मिन् शैले अध्यास्य अधिष्ठाय अलकामित्यध्याहार्यं अन्यथा 'अधिशीङ्स्थासां कर्म' इति कर्मत्वस्य दुर्वारत्वात् फणिपतिपुरस्य भोगवत्या अपि चरितं नि-

अपि च

दशमुखभुजदण्डमण्डलीनां दृढपरिपीडनवीतमेखलोऽयम् ।
जलगृहकवितर्दिकासुखानि स्फटिकगिरिर्गिरिशस्य निर्मिमीते ४८

**विभीषणः**— ( सीतां प्रति । ) देवि, दृश्यन्ताममी

कैलासाद्रितटीषु धूर्जटिजटालंकारचन्द्राङ्कुर-
ज्योत्स्नाकन्दलिताभिरिन्दुदृषदामद्भिर्नदीमातृकाः ।
गौरीहस्तसुखप्रवृद्धवपुषः पुष्यन्ति धात्रेयक-
भ्रातृस्नेहसहोढषण्मुखशिशुक्रीडासखाः शाखिनः ॥ ४९ ॥

अपि च, अस्य नित्यमधित्यकाधिवासी परमेश्वरः

सहस्राक्षैरङ्गैर्नमसितरि नीलोत्पलमयी-
मिवात्मानं मालामुपनयति पत्यौ दिविषदाम् ।
जिघृक्षौ च क्रीडारभसिनि कुमारे सहचरे-
र्हसन्वो भद्राणि द्रढयतु भवानीपरिबृढः ॥ ५० ॥

---

रीक्षन्ते दवीयोऽपि वस्तु दर्पणविशेषेणेव विषयीकुर्वन्तीत्यर्थः ॥ ४७ ॥

**दशमुखेति**— अयं स्फटिकगिरिः कैलासः दशमुखस्य भुजदण्डमण्डलीनां दृढं परिपीडनेनोद्धरणार्थमुष्टिग्रहव्यथया वीता दुर्बला मेखला जलधारणसमर्थो नितम्बभागो यस्य तथाभूतः सन् अत एव गिरिशस्य जलगृहकवितर्दिकायाः धारागृहवेदिकायाः सुखानि निर्मिमीते संपादयति ॥ ४८ ॥

**कैलासेति**—कैलासाद्रितटीषु धूर्जटेः शिवस्य जटालंकारस्य चन्द्राङ्कुरस्य चन्द्रकलायाः ज्योत्स्नया चन्द्रिकया कन्दलिताभिर्वर्धिताभिः इन्दुदृषदां चन्द्रकान्तानामद्भिर्जलैः नदीमातृकाः नदीजलपुष्टाः गौर्या हस्ताभ्यां सुखं प्रवृद्धं वपुर्येषां ते गौर्यारोप्य वर्धिताः अत एव धात्रेयकभ्रातृस्नेहेन 'उपमातृपुत्रवात्सल्येन सहोढस्य सहवर्धितस्य षण्मुखस्य शिशुक्रीडासखा बालक्रीडासहायभूताः अमी शाखिनो वृक्षाः पुष्यन्ति विकसन्ति ॥ ४९ ॥

अधित्यका ऊर्ध्वभूमिः । **सहस्राक्षैरिति**—दिविषदां पत्याविन्द्रे सहस्रमक्षीणि येषु तैरङ्गैः 'जानुभ्यां च तथा पद्भ्यां पाणिभ्यामुरसा धिया । शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग ईरितः ।' इत्युक्तैः प्रणामार्थैरष्टभिरङ्गैः नमसितरि नमस्कुर्वाणे 'नमोवरिवश्चित्रङः क्यच्' इति क्यचि तृचि 'क्यस्य विभाषा' इति यलोपः ततश्च नीलोत्पलमयीमिन्दीवररूपां मालामिव स्थितमक्षिनैल्यव्याप्त-

अपि च

यन्नाट्यभ्रमिघूर्णमानवसुधाचक्राधिरूढे भृशं
मेरौ पार्श्वनिवासवासरनिशाचक्रे परिभ्राम्यति ।
तैजस्यस्तडितो भवन्तु शतशो दृष्टा हि जाताः कथं
तामस्योऽपि स वः पुनातु जगतामन्त्येष्टियज्वा विभुः ॥ ५१ ॥

**लक्ष्मणः**—

जयति परिमुषितलक्ष्मा भयादनुपसर्पतेव हरिणेन ।
इह केसरिकरजाङ्कुरकुटिला हरमौलिविधुरेखा ॥ ५२ ॥

**सीता**— (सपरिहासम् ।) एदस्स दन्दसूअणरकरोडिमुण्डमालामण्डणस्स मसाणवासिणो भूसणदाविडम्बणं एव्व रोहिणीवल्लहस्स कलङ्को किं तवस्सिणा कुरङ्गेण । एतस्य दन्दशूकनरकरोटिमुण्डमालामण्डनस्य श्मशानवासिनो भूषणताविडम्बनमेव रोहिणीवल्लभस्य कलङ्कः, किं तपस्विना कुरङ्गेण ।

**विभीषणः**— (विहस्य ।) शङ्के भगवानपि न मृगाङ्कमलंकारकामः कलयते ।

---

त्वात् आत्मानमुपनयति दण्डवत्पादपातं कुर्वाणे सति, तथा क्रीडारभसिनि बालक्रीडोत्सुके कुमारे स्कन्दे जिघृक्षौ उत्पलमालाबुद्ध्या ग्रहीतुमिच्छौ च सति सहचरैः प्रमथैः हसन् भवानीपरिवृढो महेश्वरो वः भद्राण्यैहिकामुष्मिकमङ्गलानि द्रढयतु प्रथयत्वित्यर्थः ॥ ५० ॥

**यदिति**—यस्य नाट्यभ्रम्या ताण्डवभ्रमणेन घूर्णमानं भ्राम्यत् वसुधाचक्रं भूमण्डलं अधिरूढेऽधिष्ठितवति ततश्च पार्श्वे निवासो वर्त्तनं यस्य तादृशं वासरनिशाचक्रं अहोरात्रकालचक्रं यस्य तादृशे मेरौ भृशमतितरां भ्राम्यति सति तैजस्यस्तेजोविकारभूताः तडितः क्षणदीप्तयो भवन्तु प्रकाशन्तां नाम, हि यतस्ता इत्यध्याहार्यं ताः शतशो दृष्टाः तैजसत्वेन मेरोस्तद्दीप्तेरपि तथात्वस्य न्याय्यत्वान्नेदमाश्चर्यं तर्हि किमाश्चर्यं तदाह तामस्यस्तमोविकारभूतास्तडितः कथं जाताः इदमेवाश्चर्यमित्यर्थः भ्रमणवेगेन प्रतिक्षणमहोरात्रोदयास्तमयाविर्भावात्तेजस्तमोविद्योतनं, तस्य च क्षणिकत्वेन तडित्त्वेन तमस्त्वेन च रूपणं चेत्यर्थः सः जगतामन्त्येष्टियज्वा संहारक इत्यर्थः विभुर्व्यापको रुद्रः वः पुनातु पावयतु ॥ ५१ ॥

**जयतीति**—इह कैलासे केसरिणः सिंहस्य करजाङ्कुरवन्नखाङ्कुरवत् कुटिला वक्रा अत एव भयादनुपसर्पता स्वसमीपमनागच्छतेव हरिणेन मगेण परिमु-

सहचरपिशाचपरिषत्प्रसत्तये कामचारतो रजनीम् ।
कारयितुमहः कपाली शिरसि निशाकरमयं वहति ॥ ५३ ॥

( सर्वे हसन्ति । )

**रामः**— ( सबहुमानम् । )

श्रीकण्ठस्य कपर्दबन्धनपरिक्लान्तोरगग्रामिणी-
संदष्टां मकुटावतंसकलिकां वन्दे कलामैन्दवीम् ।
या बिम्बप्रतिपूरणाय परितो निष्पीड्य संदंशिका-
यन्त्रेणेव ललाटलोचनशिखिज्वालाभिरातप्यते ॥ ५४ ॥

( पुष्पक प्रति । ) विमानराज, मनागुन्नम्यतां, आलोकयतु मैथिली सुमेरुशृङ्गाणि ।

**विभीषणः**— ( सीतां प्रति । ) देवि, पश्य पश्य ।

मेरोर्मेदुरयन्ति संमदमधःसंचारिभिर्ज्योतिषा-
माटोपैर्विटपोपरिस्थिततरुच्छायाभृतोऽधित्यकाः ।

---

षितलक्ष्मा अङ्कवर्जिता हरमौलेः विधुरेखा चन्द्रकला जयति ॥ ५२ ॥

दन्दशूकाः सर्पाः नराणां करोटयः शिरोऽस्थीनि मुण्डमालाः शिरोगुम्भिताः स्रजश्च मण्डनानि भूषणानि यस्य तस्य । भूषणताविडम्बनमलंकारत्वानुकरणमेव रोहिणिवल्लभस्य चन्द्रस्य कलङ्कः । तपस्विना शोच्येन निरपराधेनेति यावत् अननुरूपपरिग्रहस्य शिवस्य भूषणत्वमेव चन्द्रस्य कलङ्को ननु मृगधारणमिति भावः । **सहचरेति**—अयं कपाली महेश्वरः सहचराणामनुगानां पिशाचानां परिषदः समाजस्य प्रसत्तये प्रसादार्थं कामचारतः तेषां स्वच्छन्दसंचाराय अहर्दिनमपि रजनीं रात्रिं कारयितुं शिरसि निशाकरं चन्द्रं वहति धत्त इति शङ्के तर्कयामि ॥ ५३ ॥

**श्रीकण्ठस्येति**— श्रीकण्ठस्य महेश्वरस्य कपर्दबन्धनेन जटासंयमनेन परिक्लान्तेन श्रान्तेन उरगग्रामण्या सर्पराजेन संदष्टां मकुटस्य शिवकिरीटस्य अवतंसकलिकां शेखरकोरकीभूतां ऐन्दवीं कलां वन्दे, या कला बिम्बस्य चन्द्रमण्डलस्य प्रतिपूरणायापूर्णांशपूर्त्यर्थं संदंशिकायन्त्रेण कुटिलिकाकारेण यन्त्रविशेषेण परितो निष्पीड्य गृहीत्वा ललाटलोचनस्य शिखिज्वालाभिरग्निशिखाभिः आतप्यते द्रवीक्रियत इव ॥ ५४ ॥

**मेरोरिति**—अधःसंचारिभिरधोभागे संचरणस्वभावैः ज्योतिषामादित्यादीनां ग्रहाणां आटोपैर्विस्तारैः विटपोपरिस्थितां तरूणां शाखाग्रवर्तिनीं छायां बिभ्रतीति

निष्पीतासु च मासि मासि विबुधैरिन्दोः कलासु क्रमा-
दुद्दामप्लवमानलाञ्छनमृगच्छिन्नाग्रदर्भाङ्कुराः ॥ ५५ ॥

अपि च

भूमेः स्वर्णतया फलोत्तरतरुस्मेरस्य मेरोस्तटी-
सीमन्तोऽयमनूरुसारथिरथप्रस्थानघण्टापथः ।
यस्मिन्नुद्ध्रियते कथंचन हयैरुद्दामचण्डातप-
ज्वालाजालविलीनकाञ्चनशिलाजम्बालमग्नः प्रधिः ॥ ५६ ॥

**लक्ष्मणः**— ( सीतां प्रति । )

एतासु पर्वतनितम्बतटीषु पश्य मध्यंदिनेऽपि हरिचन्दनवाटिकेयम् ॥
पक्षस्थितद्युमणिबिम्बतयातिदीर्घच्छायावितानमधुरा मुदमादधाति । ५७ ।

---

तथाभूताः मेरोरत्युन्नततया नवग्रहाणामधःसंचारादूर्ध्वस्थवृक्षाणां शाखाग्रे च्छायावृत्तिः, मासि मासि प्रतिमासं इन्द्रोश्चन्द्रस्य कलासु विबुधैरग्न्यादिभिः क्रमात्प्रतिपदादिक्रमेण निष्पीतासु निरवशेषमास्वादितासु सतीषु उद्दामं प्रतिबन्धकाभावेन स्वैरं प्लवमानेनाहारार्थं पारिप्लवेन लाञ्छनमृगेणाङ्कभूतहरिणेन च्छिन्नाग्रा दर्भाङ्कुरा यासु तथाभूताः मेरोरधित्यका ऊर्ध्वप्रदेशाः 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' संमदं हर्षं 'प्रमदसंमदौ हर्षे' इति निपातनात्साधुः मेदुरयन्ति वर्धयन्त्यस्माकमिति शेषः ॥ ५५ ॥

भूमेरिति— अनूरुसारथिरथस्य सूर्यरथस्य प्रस्थानस्य यात्रायाः घण्टापथो राजमार्गः, भूमेर्मेरुप्रदेशेस्य स्वर्णतया हेतुना फलोत्तरैः फलप्रधानैः तरुभिर्वृक्षैः स्मेरस्य प्रकाशमानस्यत्यर्थः (स्वर्णभूमिषु फलवृद्धिरप्रतिबन्धादिति प्रसिद्धिः) मेरोस्तटीसीमन्तस्तटप्रदेश इह सीमन्तशब्दो लाक्षणिकः भातीति शेषः यस्मिन्नस्मिन् तटीसीमन्ते उद्दामानामधिकानां चण्डानामुग्राणां च आतपानां ज्वालाजालेन विलीनानां द्रवीभूतानां काञ्चनशिलानां स्वर्णमयानामुपलानां जम्बाले पङ्के मग्नोऽन्तर्लीनः प्रधिश्चक्राग्रं हयै रथ्यैः सप्तभिरश्वैः कथंचन अतिप्रयत्नेन उद्ध्रियते जम्बालादुन्नीयते ॥ ५६ ॥

एतास्विति—एतासु पर्वतनितम्बतटीषु मेरुमेखलाप्रदेशेषु इयं हरिचन्दनवाटिका कल्पवृक्षविशेषपङ्क्तिः पक्षे एकपार्श्वे स्थितो द्युमणिबिम्बो यस्मिंस्तस्य भावेन हेतुना मध्यंदिने मध्याह्नसमयेपि अतिदीर्घेण वृक्षप्रमाणतोऽप्यत्यायामवता च्छायाया वितानेन विस्तारेण मधुरा रम्या सती मुदं संतोषं आदधाति करोति ५७

( निरूप्य । सहर्षस्मितम् । ) कथमुपर्य्युपरि पुष्करावर्त्तकानभ्रमुवल्लभः । ( विमृश्य । )

**अयमयं विबुधेन्द्रबान्धववधूसंभुक्तसंतानक-**
**स्रग्दाम्नीममरावतीं विहरते निर्वैरमैरावणः ।**
**य दोर्मात्रपरिच्छदो युधि मुदोत्क्षिप्य प्रतीच्छन्मुहुः**
**संतेने दशभिर्मुखैरपि निजैः सांराविणं रावणः ॥ ५८ ॥**

**सुग्रीवः**— सत्यमगोचरे गिरां दशकण्ठक्रीडितानि ।

**एकैके निवसन्ति ते भुजभृतः कस्मै निगृह्णीमहे**
**वीरक्षेत्रमियं पुनर्वसुमती पौलस्त्यमाबिभ्रती ।**

---

उपर्य्युपरि पुष्करावर्त्तकानिति पुष्करावर्त्तकादिप्रधानमेघानां समीप इत्यर्थः 'उपर्यध्यधसः सामीप्ये' इति द्विरुक्तिः 'धिक्युपर्यादिषु त्रिषु' कर्मत्वम् । अभ्रमुवल्लभ ऐरावतः । **अयोति**— अयमैरावण ऐरावतः विबुधेन्द्रस्य बान्धवानां बन्धूनां देवानां वधूभिः स्त्रीभिः संभुक्तपनभूतं संतानकस्रजां संतानमालानां दाम यस्यां तां ( डाबुभाभ्यामन्यतरस्यामिति सूत्रे अन्यतरस्यामिति योगो विभज्यते, अन उपधालोपिनोऽन्यतरस्यामिति सूत्रं नियमार्थं अनो योसौ विकल्पः स उपधालोपिन एवेति ततश्च ऋन्नेभ्य इति ङीप् दामहायनान्ताच्चेत्यस्य तु नेह प्रवृत्तिः तत्र संख्यादेरित्यनुवृत्तेः ) अमरावतीं 'अकर्मकधातुभिर्योगे देशः कालः' इत्यादिना कर्मत्वं निर्वैरं निरुपद्रवं यथा तथा विहरते कर्त्रभिप्रायेण तङ्, रावणः दोर्मात्रपरिच्छदोऽबाहुमात्रसहायः सन् युधि युद्धे यमैरावतं मुदा कुतूहलेन उत्क्षिप्य ऊर्ध्वं क्षिप्त्वा मुहुरसकृत् प्रतीच्छन् बाहुभिर्गृह्णन् सन् निजैर्दशभिरपि मुखैः सांराविणं समन्ताच्छन्दं संतेने सम्यग्विस्तारयामास संरावशब्दात् 'अभिविधौ भाव इनुण्' 'अणिनुणः' 'इनण्यनपत्ये' इतीनः प्रकृतिभावः स्वभावतश्च क्लीबत्वम् । 'संरावो बहुभिः कृतः' इत्यमरः ॥ ५८ ॥

**एकैक इति**—एकैके बहवः तेऽतिप्रसिद्धाः भुजभृतो बाहुबलिनः निवसन्ति लोके वर्त्तन्ते, कस्मै विगृह्णीमहे सर्वेषामपि बलित्वेन कमपकृष्टं ब्रूम इत्यर्थः 'क्रियया यमभिप्रैति सोऽपि संप्रदानम्' इति संप्रदानता, पुनः किंतु इयं वसुमती भूः पौलस्त्यमाबिभ्रती रावणमावहन्ती सती वीरक्षेत्रं वीरोत्पत्तिभूमिः भवतीति शेषः सर्ववीराणां रावणः श्रेष्ठ, इत्यर्थः तु अपि तु वाली आह्वयमानं स्पर्धमानं 'स्पर्धायामाङः' इत्यात्मनेपदम्, एनं रावणमपि यच्चक्रे कृतवान् तत्कर्म चक्षुषी कृते नेत्रद्वयमेव निर्मितमिति कृत्वा वयं पश्यामः, तथा श्रवसी कृते श्रोत्र-

वाली ताह्यमानमेनमपि यच्चक्रे कृते चक्षुषी
पश्यामः श्रवसी कृते च शृणुमस्तद्वक्तुमल्पे वयम् ॥ ५९ ॥

**रामः**— ( सबहुमानम् । )

स किं वाच्यो वाली भुजकुलिशमूलेन दधतो
दशग्रीवं यस्य प्रतिजलधि संध्याविधिरभूत् ।
कथं वा निर्वाच्यः स च दशमुखो यस्य दमने
मनागासीद्वालिव्ययचरितमेवोपकरणम् ॥ ६० ॥

**सीता**— ( रामं प्रति । ) अज्जउत्त, किं उण एदं दलिदकप्पूरसअलगुच्छगोरवण्णं गअणं दिस्सइ । आर्यपुत्र, किं पुनरेतद्दलितकर्पूरशकलगुच्छगौरवर्णं गगनं दृश्यते ।

**विभीषणः**— ( सीतां प्रति । ) चन्द्रलोकोपकण्ठमधिरूढो विमानराजः, दृश्यतां च भगवानयम् ।

यं प्राक्प्रत्यगवागुदक्षि ककुभां नामानि संबिभ्रत
ज्योत्स्नाजालझलझलाभिरभितो लुम्पन्तमन्धं तमः ।
प्राचीनादचलादितस्त्रिजगतामालोकबीजाद्वहि-
र्नियान्त हरिणाङ्कमङ्कुरमिव द्रष्टुं जनो जीवति ॥ ६१ ॥

---

द्वयमेव निर्मितमिति च कृत्वा शृणुमः वक्तुं पुनः अल्पे तद्द्वयस्याप्यभावादशक्ता एव स्म इत्यर्थः प्रथमादित्वेनाल्पशब्दस्य जसः कार्ये सर्वनामताविकल्पः ॥ ५९ ॥

**स इति**— भुजकुलिशस्य वज्रकल्पस्य भुजस्य मूलेन कक्षेण दशग्रीवं रावणं दधत उद्वहतो यस्य सन्ध्याविधिः प्रतिजलधि समुद्रे समुद्रे वीप्सायामव्ययीभावः अभूत् स वाली किं वाच्यः वीरश्रेष्ठ इत्यपूर्वं स्तोतव्यः किं, स च दशास्यो वा कथं निर्वाच्यो निश्चित्य वक्तुं शक्यः, यस्य दमने निग्रहे विषये वालिनो व्ययचरितं संहारकथैव मनागीषत् उपकरणं परंपराकारणं निदर्शनं वा अभूदिति शेषः वालिसमानकोटिप्रविष्टत्वाद्रावणोऽपि श्रेष्ठ एवेत्यर्थः ॥ ६० ॥

**यमिति**— प्राक् प्राचीदिक् प्रत्यक्प्रतीचीदिक् अवाग्दक्षिणादिक् उदगुत्तरदिक् च तानि ककुभां दिशां नामानि संबिभ्रतं सम्यक्कल्पयन्तं ज्योत्स्नाजालस्य चन्द्रिकासमूहस्य झलंझलाभिरास्फालैर्व्यापारैरिति यावत् 'स्यादास्फाले झलंझला' इति हारावली, अभित उभयत ऊर्ध्वमधश्चेत्यथः अन्धं तमो निबिडान्धकारं लुम्पन्तं नाशयन्तं त्रिजगतामालोकस्य प्रकाशस्य बीजात्कारणभूतात् इतः प्राचीनादचला-

अपि च

> सश्रीकण्ठकिरीटकुट्टिमपरिष्कारप्रदीपाङ्कुरो
> देवः कैरवबन्धुरन्धतमसप्राग्भारकुक्षिंभरिः ।
> संस्कर्ता निजकान्तिमौक्तिकमणिश्रेणीभिरेणीदृशां
> गीर्वाणाधिपतेः सुधारसवतीपौरोगवः प्रोदगात् ॥ ६२ ॥

अपि च

> प्राणायामोपदेष्टा सरसिरुहमुनेर्यौवनोद्दामलीला-
> गोष्ठीनां पीठमर्दस्त्रिभुवनवनितानेत्रयोः प्रातराशः ।
> कामायुष्टोमयज्वा शमितकुमुदिनीमौनमुद्रावतारः
> शृङ्गाराद्वैतवादी स भवति भगवानेष पीयूषभानुः ॥ ६३ ॥

---

दस्मादुदयगिरेः बहिर्निर्यान्तं निर्गच्छन्तं अत एवाङ्कुरमिव स्थितं बीजोपन्नत्व-साम्यात् यं हरिणाङ्कं चन्द्रं द्रष्टुं जनो जीवति प्राणधारणं करोति ॥ ६१ ॥

**स इति**— श्रीकण्ठस्य शिवस्य किरीटकुट्टिमस्य मकुटरूपनिबद्धभुवः परिष्कारेऽलंकरणे प्रदीपस्याङ्कुरउद्भेदः 'संपरिभ्यां करोतौ भूषणे' इति सुट् कैरवाणां कुमुदानां बन्धुराह्लादक इत्यर्थः अन्धतमसप्राग्भारेण गाढान्धकाराधिक्येन कुक्षिंभरिः स्वोदरपूरकस्तन्नाशक इत्यर्थः 'अवसमन्धेभ्यस्तमसः' इति समासान्तोऽच् 'फलेग्रहिरात्मंभरिश्च' इति चात्कुक्षिंभरिरिति रूपसिद्धिः, निजकान्तिभिरेव मौक्तिकमणीनां श्रेणीभिः समूहः एणीदृशां स्त्रीणां संस्कर्ता अलंकर्ता गीर्वाणाधिपतेरिन्द्रस्य सुधारसवत्या अमृतपाकस्थानस्य पौरोगवो महानसाध्यक्षः अमृतेनेन्द्रस्याप्याययितेत्यर्थः एवंभूतः स देवश्चन्द्रः प्रोदगादुदितः॥ ६२॥

**प्राणायामेति**— भगवान् श्रीमान् स एष पीयूषभानुश्चन्द्रः सरसिरुहस्य पद्मस्यैव मुनेः प्राणायामस्य रेचकादिलक्षणस्य उपदेष्टा बोधकः प्राणायामे हि सत्यङ्गनैश्चल्यमर्धाक्षिमीलनं च भवति तदस्य कारयतीत्यर्थः, यौवनस्य उद्दामानामधिकानां लीलानामेव गोष्ठीनां समाजानां पीठमर्दः प्रधाननायकसहायो नायकविशेषः तदुपकारक इत्यर्थः 'पताकानायकस्त्वन्यः पीठमर्दो विचक्षणः । तस्यैवानुचरो भक्तो किंचिदूनश्च तद्गुणैः ।' इति तल्लक्षणमुक्तं दशरूपके, त्रिभुवनस्य वनितानामत्यर्थमनुरागवतीनां स्त्रीणां नेत्रयोः प्रातराशः उषःकालभोजनं तस्य हि प्राथम्यात्क्षुधितानामत्यास्वाद्यत्वं तद्वदयं प्रियो भवतीत्यर्थः, कामस्य आयुष्टोमयज्वा आयुरभिवर्धकेष्टिकृद्दुपोद्दलक इत्यर्थः 'ज्योतिरायुषस्तोमः' इतिषत्वं,

**लक्ष्मणः**— ( सस्मितम् । )

कर्णोत्तंसयवाङ्कुरं करतले कृत्वा हसित्वा मिथः
संहूतः पुरुहूतपौरयुवतीवर्गेण कौतूहलात् ।
ग्रासार्तिक्षुभितोऽयमङ्कहरिणः कुर्वीत किं किं कला-
कन्थामिन्दुमयीमजस्रघटनोद्घाटश्लथावस्थिताम् ॥ ६४ ॥

**सुग्रीवः**—

रोमन्थप्रचलोष्ठसंपुटसुखासीनश्चिरं कौतुका-
दृष्ट्वा सिद्धवधूभिरङ्कहरिणस्तालैरथोत्त्रासितः ।
मा भाङ्क्षीदनुमासनव्यघटनान्निःसन्धिबन्धं वपुः
शीतांशोः क्षुभितस्तु शल्यवदयं दुःखाय वर्त्तिष्यते ॥ ६५ ॥

---

शमितः शमं नीतः कुमुदिन्याः कैरववनस्य मौनमुद्राया मुनिकर्मचिह्नस्य संकोचस्येत्यर्थः अवतार आविर्भावो येन सः शृङ्गारस्य अद्वैतवादी द्वैतापलापपूर्वकमेकत्वस्थापनपरः शृङ्गाररसात्मकं सर्वं जगत्कुर्वाण इत्यर्थः भवति वर्त्तते ॥ ६३ ॥

**कर्णेति**— अयमङ्कहरिणश्चन्द्रलाञ्छनभूतो मृगः कर्णोत्तंसस्य कर्णपूरीकृतस्य यवस्य सस्यस्य अङ्कुरमुद्भेदं 'उत्तंसः कर्णपूरोऽपि शेखरेऽयं वतंसवत् ।' इति विश्वः करतले कृत्वा आदाय मिथो हसित्वा पुरुहूतस्येन्द्रस्य पौरयुवतीवर्गेण नगरस्त्रीसमूहेन कुतूहलादौत्सुक्येन संहूतो ग्रासग्रहणार्थमाहूतः सन् ग्रासार्त्या कवलग्रहणासक्तिनिमित्तया पीडया क्षुभितो व्याकुलः सन् इन्दुमयीं चन्द्रमण्डलरूपां अजस्रमनवरतं प्रतितिथीति यावत् घटनया शुक्लपक्षे कलान्तरसंयोजनेन उद्घाटेन कृष्णपक्षे वियोजनेन च श्लथमदृढमवस्थितां यद्वा श्लथमवस्थितमवस्थानं यस्यास्तां कलाकन्थां कलारूपजीर्णवस्त्रं किं किं कुर्वीत सर्वं करोतीत्यर्थः पुनः पुनः संयोजनवियोजनाभ्यामेव पूर्वमेव शिथिलां कलां चरणोत्क्षेपणादिभिरतीव श्लथयतीति भावः ॥ ६४ ॥

**रोमन्थेति**—अयमङ्कहरिणः लाञ्छनमृगः चिरं रोमन्थेन चर्वितस्याकृष्य पुनश्चर्वणेन प्रचलमोष्ठपुटं यथा तथा सुखासीनः सुखमवस्थितः सन् अथो अनन्तरं सिद्धवधूभिः कौतुकात्कुतूहलाद्दृष्ट्वा तालैः हस्ततालैः उत्त्रासित उद्वेजितः सन् अनुमासं मासे मासे नव्यघटनान्नूतनकलासंयोजनात् निःसन्धिबन्धं संधिबन्धशून्यं नूतनत्वेन संधानाच्छिद्ररहितमित्यर्थः, शीतांशोश्चन्द्रस्य वपुर्मण्डलं मा भाङ्क्षीत् पादोत्क्षेपादिना नामर्दयेत् तु किं तु क्षुभितो व्याकुलः सन् शल्यवत्कीलवत् दुःखाय वर्त्तिष्यते दुःखकृद्भविष्यति ॥ ६५ ॥

अपि च— **एतस्य कलामेकाममृतमयूखस्य पार्वतीरमणः ।**
**वर्णावलिमिव वहति प्रतिमासं घट्यमानस्य ॥ ६६ ॥**

**रामः**— ( सादर प्रणम्य । )

**त्वं गीर्वाणगणाय नित्यममृतश्राद्धं भवद्दीधिति**
**र्धात्रीकर्म च वीरुधां विदधती धत्ते जगज्जीवितम् ।**
**सोम त्वामनिधाय मूर्धनि भवेत्किं कालकूटं गिलन्**
**कण्ठे तच्छलकालपाशवलयालीढोऽपि मृत्युंजयः ॥ ६७ ॥**

( सीतां प्रति । ) देवि,

**नेत्राणां मधुपर्कसत्रमुदधेः सर्वाङ्गमेदस्करः**
**शृङ्गारस्य रसायनं मखभुजां पीयूषगञ्जागृहम् ।**

**एतस्येति**—पार्वतीरमणो महेश्वरः प्रतिमासं मासि मासि घट्यमानस्य क्रियमाणस्य एतस्यामृतमयूखस्य चन्द्रस्य वर्णावलिमिवाक्षरपङ्क्तिमिव स्थितां, यद्वा वर्णनिश्चयार्थशलाकामिव स्थितां कलां वहति प्रथमेऽर्थे प्रतिमासं निर्मीयमाणस्यांशस्य ज्ञापनबिन्दुसमहमित्यर्थः द्वितीये तु यथा हि स्वर्णकारे कटकाद्याभरणनिर्माणार्थं दत्तस्य स्वर्णस्य पुनर्वर्णनिश्चयार्थं किंचिच्छलाकांशो ध्रियते तद्वत्स्थितामित्यर्थः ॥ ६६ ॥

**त्वमिति**—हे सोम, त्वं गीर्वाणगणाय देववर्गाय नित्यममृतश्राद्धममृतमयं नित्यभोजनार्हहव्यकव्यरूपोऽसीति शेषः, भवतो दीधितिः कान्तिः वीरुधामोषधीनां धात्रीकर्म उपमातृकृत्यं पोषणमिति यावत् विदधती कुर्वाणा सती जगतो जीवितं प्राणधारणक्रियां धत्ते धारयति सर्वप्राणधारणहेतुभूतस्यान्नस्यौषध्यन्तर्गतत्वादोषधीनां च चन्द्रकराभिमर्शादेव तथात्वमिति भावः एवं देवमनुष्यादिसर्वजीवानां 'अशनाया हि मृत्युः' इति श्रुत्युक्तमृत्युपरिहरणद्वारा प्राणधारणकारणत्वमुक्तमिदानीमीश्वरस्यापि प्रकारान्तरेण तथात्वं त्वदायत्तमित्याह मृत्युंजयो महेश्वरः 'संज्ञायां भृतॄ' इत्यादिना खचि मुम् कालकूटं गिलन् हालाहलनिगरणाद्धेतोः इह हेत्वर्थेशता 'अचि विभाषा' इति पाक्षिकं लत्वं कण्ठे तच्छलेन कालकूटव्याजेन कालपाशवलयेन आलीढो ग्रस्तः सन्नपि त्वां मूर्धन्यनिधायाधारयित्वा भवेत्किं मृत्युंजयत्वं न प्राप्नुयादेवेत्यर्थः ॥ ६७ ॥

**नेत्राणामिति**—दाक्षायणीनां कृत्तिकादिनक्षत्राणां नायको वल्लभः देवश्चन्द्रः नेत्राणां मधुपर्कस्य सत्रं सदादानमाह्लादक इत्यर्थः 'सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च ।' इत्यमरः, उदधेः सर्वाङ्गस्य मेदस्करो वपाकरो वृद्धिका-

देवः किं स्तुमहे महेश्वरशिरोनेपथ्यरत्नाङ्कुरः
क्षीरोदार्णवशुक्तिमौक्तिकमणिर्दाक्षायणीनायकः ॥ ६८ ॥

**सीता**— ( हसन्ती । ) अज्जउत्त, समाणउलरूवजव्वणाणं वि सवत्तीणं सीसे दिण्णो धण्णाए दक्खगोत्तकण्णाए चलणो, जेण रोहिणीरमण एव्व भअवं चन्दो सुणिअदि । आर्यपुत्र, समानकुलरूपयौवनानामपि सपत्नीनां शीर्षे दत्तो धन्यया दक्षगोत्रकन्यया चरणः, येन रोहिणीरमण एव भगवांश्चन्द्रः श्रूयते ।

**रामः**— ( विहस्य । ) आं जानकि,

प्रियोपभोगे तुल्येऽपि ताराणां सप्तविंशतेः ।
धत्ते किमपि सौभाग्यं सौरभ्यमिव रोहिणी ॥ ६९ ॥

**विभीषणः**— ( स्पर्शं च निरूपयन् । )

दलितकुमुदकोशोदञ्चदूष्मोपचार-
क्षणशमितचकोरीचान्द्रिकापानजाड्याः ।
अभिसृमरमृगाक्षीमूकदूत्यः स्वदन्ते
शशिमणिमकरन्दोत्कन्दलाश्चन्द्रभासः ॥ ७० ॥

---

रणभूत इत्यर्थः, शृङ्गारस्य रसायनं जराव्याधिजिदौषधं 'रसायनं विषेऽपि स्याज्जराव्याधिजिदौषधे ।' इति मेदिनी मखभुजां देवानां पीयूषगञ्जागृहममृतरूपमद्यालयः 'गञ्जा तु मदिरागृहं' इति तद्गृहार्थकोऽपि गञ्जाशब्द इह मदिरामात्रवृत्तिकः, महेश्वरशिरसः नेपथ्यरत्नाङ्कुर आकल्पमणिशलाकाभूतः क्षीरोदार्णवस्यैव शुक्तेःमौक्तिकमणिश्च भवतीति सर्वत्र योज्यं तस्मात्किं स्तुमहे तमिति शेषः कथं स्तोतुं शक्ता वयमित्यर्थः ॥ ६८ ॥

प्रियेति— सप्तविंशतेस्ताराणां नक्षत्राणां प्रियस्य उपभोगे सुखानुभवे तुल्ये सापत्न्येन समानेपि रोहिणी ताराविशेषः ओषधिविशेषश्च 'रोहिणी सोमवल्के भे कण्ठरोगोमयोर्भावे । लोहिताकटुरोहिण्याः' इति हेमचन्द्रः सौरभ्यं सौगन्ध्यमिव किमप्यन्यादृशं सौभाग्यं सर्ववल्लभत्वात्सुभगतां धत्ते बिभर्ति ॥ ६९ ॥

दलितेति— दलितेभ्यो विकसितेभ्यः कुमुदकोशेभ्यः कैरवकुड्मलेभ्यः उदञ्चत उद्गच्छत ऊष्मण उष्णस्य उपचारेण सेवया क्षणं शमितं चकोरीणां चन्द्रिकापानस्य जाड्यं शैत्यं याभिस्ताः 'उपचारस्तु सेवायां व्यवहारोपचर्ययोः।' इति हेमचन्द्रः, अभिसृमराणामभिसारिकाणां मृगाक्षीणां स्त्रीणां मूकदूत्यो वाचा किमप्यनुक्त्वैव संघटनकारिण्यः शशिमणीनां चन्द्रकान्तानां मकरन्दस्य जलस्येत्यर्थः

अपि च जगतामनुग्रहाय

उदयति कलमन्द्रैः कण्ठतालैरलीनां
कुमुदमुकुलकेषु व्यञ्जयन्नङ्गहारान् ।
मदमुखरचकोरीतोयकर्मान्तिकोऽय
तुहिनरुचिरवामादक्षिणं लोकचक्षुः ॥ ७१ ॥

अपि च

तैः सर्वज्ञीभवदभिसृतानेत्रसिद्धाञ्जनैर्वा
नीरन्ध्रैर्वा त्रिभुवनदृशामन्धपट्टैस्तमोभिः ।
व्याप्तं पृथ्वीवलयमखिलं क्षालयन्नुच्चलद्भि-
र्ज्योत्स्नाजालैरयमुदयते शर्वरीसार्वभौमः ॥ ७२ ॥

**रामः**— ( सहर्षस्मितम् । )

चन्द्रलोकादपि परां मुदमारोपयन्ति माम् ।
अमूरमृतबिन्दूनामनुवादास्तवोक्तयः ॥ ७३ ॥

---

उत्कन्दला उत्पादयित्र्यः चन्द्रस्य भासः किरणाः स्वदन्ते नः प्रीणयन्तीत्यर्थः ७०

**उदयतीति**— मदेन हर्षेण मुखराणां शब्दायमानानां चकोरीणां तोय-कर्मान्तिकः पानार्थं जलप्रदानभृत्यकर्मकृत् अवाममदक्षिणं चावामादक्षिणं लोकस्य चक्षुः सव्यदक्षिणान्यनेत्रद्वयविलक्षणचक्षुर्भूतं जगत इत्यर्थः अयं तुहिनरुचिश्चन्द्रः कलैरव्यक्तमधुरैः मन्द्रैर्गम्भीरैश्च अलीनां भ्रमराणां कण्ठतालैर्झंकारध्वनिरूपवाद्य-विशेषैः कुमुदमुकुलकेषु कैरवकुड्मलेषु अङ्गहारानङ्गविक्षेपान् 'अङ्गहारोऽङ्गविक्षेपः' इत्यमरः व्यञ्जयन् प्रकाशयन् सन् उदयत्युदितो भवति 'इ गतौ' इति भौवा-दिकोऽयं धातुः ॥ ७१ ॥

**तैरिति**— अयं शर्वर्या रात्र्याः सार्वभौमोऽखण्डमण्डलःशरच्चन्द्रः सर्व-भूमेरीश्वरः इत्यर्थे 'तस्येश्वरः' इत्यण् अनुशातिकादित्वादुभयपदवृद्धिः सर्वज्ञी-भवन्तीनामभिसरणकर्मणि सर्वज्ञतां प्रपन्नानां अभिसृतानामभिसारिकाणां कर्त्तरि क्तः नेत्राणां सिद्धाञ्जनैस्तद्वदीप्सितकार्यघटनानुकूलैर्वा त्रिभुवनदृशां लक्षणया लोक-त्रयवासिचक्षुषां नीरन्ध्रैरच्छिद्रैः अन्धपट्टैश्चक्षुर्बन्धनवस्त्रैर्वा तैस्तमोभिर्व्याप्तमाक्रान्तं अखिलं पृथ्वीवलयं भूमण्डलं उच्चलद्भिरुद्गच्छद्भिः ज्योत्स्नाजालैश्चन्द्रिकासमूहैः क्षालयन् व्यपनयन्नित्यर्थः उदयते 'अय गतौ' इति धातुरात्मनेपदी ॥ ७२ ॥

**चन्द्रेति**—अमृतबिन्दूनामनुवादाः समानाः अमूस्तव उक्तयो वार्ताः चन्द्र-लोकाच्चन्द्रमण्डलदर्शनतोऽपि परामधिकां मुदं मामारोपयन्ति प्रापयन्ति ॥ ७३ ॥

**विभीषणः**— (सानुरागम् ।)

अधोर्वीतलमूलकर्षणवशादुन्मृष्टचूडामणि-
श्रेणिश्रीपरिपीतपीवरतमःपूरे पुरे भोगिनाम् ।
कर्णाभावनिरस्तकुण्डलरवव्यासङ्गमाधून्वता
मूर्ध्नः पन्नगपुंगवेन सुभगा त्वत्कीर्तिराकर्ण्यते ॥ ७४ ॥

(विहस्य ।)

भोगीन्द्रः प्रमदोत्तरङ्गमुरगीसङ्गीतगोष्ठीषु ते
कीर्तिं देव शृणोति विंशतिशती यच्चक्षुषां वर्तते ।
रक्ताभिः सुरसुन्दरीभिरभितो गीतं तु कर्णद्वयी-
दुःस्थः श्रोष्यति नाम किं स हि सहस्राक्षो न चक्षुःश्रवाः ।७५।

**रामः**—(सविलक्षस्मितम् । विभीषणसूक्तमनुगृह्य, चन्द्रं सीतामुखं च दृष्ट्वा ।)

आरब्धे दयिताननप्रतिसमे निर्मातुमस्मिन्नपि
व्यक्तं जन्मसमानकालमिलितामंशुच्छटां वर्षति ।

**अधोर्वीति**— उर्वीतलमूलस्य भूम्यधोभागस्य घर्षणवशात्संघट्टनाद्धेतोः उन्मृष्टानामुच्छोटितानां चूडामणिश्रेणीनां शिरोरत्नपङ्क्तीनां श्रिया कान्त्या परिपीतो व्यपनीतः पीवरतमसो गाढान्धकारस्य पूरः प्रसरणं यस्मिंस्तादृशे भोगिनां सर्पाणां पुरे भोगवत्यां कर्णाभावेन (चक्षुःश्रवस्त्वात्) निरस्तो वर्जितः कुण्डलरवेण व्यासङ्गो विक्षेपो यस्मिन् कर्मणि यथा तथा मूर्ध्नः सहस्रं फणामण्डलानि आधून्वता रसवशादाकम्पयता पन्नगपुंगवेन शेषेण कर्त्रा सुभगा श्रोत्रानन्दप्रदा तव कीर्त्तिः रावणवधादिनिमित्ता ख्यातिः अद्य आकर्ण्यते श्रूयते ॥ ७४ ॥

**भोगीन्द्र इति**— हे देव, भोगीन्द्रः शेषः उरगीणां सर्पवधूनां संगीतगोष्ठीषु संगीतसमाजेषु ते कीर्तिं प्रमदोत्तरङ्गं हर्षनिर्भरं यथा तथा शृणोत्याकर्णयति, तथाश्रवणे सामग्रीसंपत्तिमाह यद्यतः चक्षुषां चक्षुःश्रवस्त्वेन श्रवणसाधनभूतनेत्राणां विंशतिशती सहस्रद्वयं 'तद्धितार्थ' इत्यादिना समाहारे समासः वर्त्तते एवं करणपौष्कल्यात्सानन्दं शृणोतीत्यर्थः, कर्णद्वय्या दुःस्थो विकलसाधन इन्द्रस्तु रक्ताभिः अनुरागविशिष्टाभिश्चारुकण्ठस्वरविशिष्टाभिश्च सुरसुन्दरीभिरमरीभिः अभित आभिमुख्येन गीतं त्वद्यश इत्यध्याहार्यं किं नाम श्रोष्यति शेषवत्सानन्दनिर्भरं न शृणुयादित्यर्थः, तत्र हेतुमाह हि यतः स सहस्राक्षोऽक्षिसहस्रविशिष्टोऽपि न चक्षुःश्रवाः, शेषवदक्षिबाहुल्येऽपीन्द्रस्य शब्दग्राहकत्वविशेषाभावात्तदक्ष्णां तथानन्दहेतुत्वं नास्तीत्यर्थः ॥ ७५ ॥

**आरब्ध इति**—दयिताननप्रतिसमे निर्मातुं सीतामुखसादृश्येन स्रष्टुं आरब्धे उपक्रान्तेऽपि ततः जन्मसमानमिलितां औत्पत्तिकीमित्यर्थः अंशुच्छटां

आत्मद्रोहिणि रोहिणीपरिबृढे पर्यङ्कपङ्केरुहः
संकोचादतिदुःस्थितस्य न विधेस्तच्छिल्पमुन्मीलितम् ॥७६॥

(सीतां प्रति।)

अनेन रम्भोरु भवन्मुखेन तुषारभानोस्तुलया धृतस्य।
ऊनस्य नूनं परिपूरणाय ताराः स्फुरन्ति प्रतिमानखण्डाः ॥७७॥

किं चैतान्यपि।

गोत्रे साक्षादजनि भगवानेष यत्पद्मयोनिः
शय्योत्थायं यदखिलमहः प्रीणयन्ति द्विरेफान्।
एकाग्रां यद्दधति भगवत्युष्णभानौ च भक्तिं
तत्प्रापुस्ते सुतनु वदनौपम्यमम्भोरुहाणि ॥ ७८ ॥

---

किरणपरंपरां वर्षति किरति अत एव पर्यङ्कपङ्केरुहः मञ्चभूतस्य पद्मस्य 'तत्पुरुषे कृति बहुलम्' इत्यलुक् संकोचान्मुकुलीकरणाद्धेतोः आत्मनः द्रोहिणि आसनभङ्गरूपद्रोहकारिणि अस्मिन् रोहिणीपरिबृढे चन्द्रे विषये अतिदुःस्थितस्य स्वासनसंकोचादतीव दौरवस्थ्यं गतस्य विधेर्ब्रह्मणः तच्छिल्पं सीतामुखसादृश्येन निर्माणं नोन्मीलितं सम्यङ्निष्पन्नं नासीत् अत्र 'रोहिणीपरिबृढे' इत्युक्तः 'रोहिणी नक्षत्रं प्रजापतिर्देवता' इति श्रुत्या स्वदेवताकनक्षत्रे चन्द्रस्य प्रीत्याधिक्येन तं सीतामुखसदृशं सिसृक्षुर्विधिः पश्चात्स्वासनभूतपद्मसंकोचनाद्यथोद्देशं नास्राक्षीदिति भावः ॥ ७६ ॥

**अनेनेति**—रम्भा कदलीव ऊरू यस्याः सा रम्भोरूः 'ऊरूत्तरपदादौपम्ये' इत्यूङ् ततः संबुद्धौ 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वः हे सीते भवन्मुखेन 'सर्वनाम्नो वृत्तिमात्रे पुंवद्भावः' तुलयां धृतस्य तुलितस्य ऊनस्य साम्यमगतस्य तुषारभानोश्चन्द्रस्य परिपूरणाय न्यूनांशं पूरयितुं तारा नक्षत्राणि प्रतिमानस्य मानप्रतिनिधिद्रव्यस्य खण्डाः खण्डभूताः स्फुरन्ति प्रकाशन्ते नूनं ध्रुवम् ॥ ७७ ॥

**गोत्र इति**—हे सुतनु, यद्यतः भगवानैश्वर्यादिषाड्गुण्यपरिपूर्णः एष पद्मयोनिर्ब्रह्मा साक्षाद्गोत्रे पद्मवंशे अजनि जातः, यद्यतः एतानि पद्मानि अखिलमहः सर्वस्मिन्नपि दिने अत्यन्तसंयोगे द्वितीया शय्योत्थायं शयनाच्छीघ्रमुत्थाय 'अपादाने परीप्सायां' इति णमुल् परीप्सा त्वरा द्विरेफान् भ्रमरान् प्रीणयन्ति मकरन्ददानेन तर्पयन्ति, यद्यतश्च हेतोः भगवत्युष्णभानावादित्ये एकाग्रामव्यभिचारिणीं भक्तिं दधति कुर्वते, तत्तस्माद्धेतोः अम्भोरुहाणि पद्मानि ते वदनौपम्यं मुखसादृश्यं प्रापुः विशिष्टोत्पादानहेतुतपोबलात् नैरन्तर्येण कृपणभरणात् चराचरात्मन्यादित्ये निर्व्याजभक्त्या च त्वन्मुखसादृश्यं गतानीत्यर्थः ॥ ७८ ॥

**सीता**—( स्मेरमुखी । ) अज्जउत्त, कहं उण संपुण्णमण्डलं ईरिसं चन्दं अवमण्णिअ कलामेत्तं भअवदा भूदणाहेण चूडामणिकिदम् । **आर्यपुत्र, कथं पुनः संपूर्णमण्डलमीदृशं चन्द्रमवमत्य कलामात्रं भगवता भूतनाथेन चूडामणीकृतम् ।**

**रामः**—( सहर्षम् । ) प्रिये जानकि, त्रयाणामपि जगतामुपजीव्योऽयममृतदीधितिः, यदि पुनः समग्रमेनं मौलिना पिनाकपाणिरधास्यत्, अथ पुनः शिवनिर्माल्यमनुपभोज्यएवायमभविष्यत् ।

( सर्वे हसन्ति । )

**रामः**—किं च । भवत्यपि । मासप्रमितो दृश्यत एवायम् ।

**पीयूषाग्रयणं जगत्त्रयदृशामालातलेखालवो**
**विश्वोन्माथिहुताशनस्य ककुभामुद्घाटनी कुञ्चिका ।**
**वीरेषु प्रथमा च पुष्पधनुषो रेखा मृगाक्षीमुख-**
**श्रीणां तु प्रतिराजबीजमधिकानन्दी नवश्चन्द्रमाः ॥ ७९ ॥**

---

अवमत्य परित्यज्य । कला प्रमाणं यस्य तं कलामात्रं 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' इति मात्रच् । उपजीव्य उपजीवनार्हः । अधास्यद्धारयेत् 'लिङ्निमित्ते लृङ् क्रियातिपत्तौ' । निर्माल्यं भुक्तमुक्तद्रव्यम् । शिवनिर्माल्यस्य तत्पारिषदवर्जमन्यैरग्राह्यत्व प्रसिद्धमेवागमेषु । न केवलमेतदेवापितु वस्तुतः कारणान्तरमप्यस्तीत्याह किं चेति भवत्यपि हेत्वन्तरमिति शेषः । मासप्रमित इत्याद्युत्तरश्लोकेन संबध्यते । मासप्रमितो मासं परिच्छेत्तुमारब्धः ( आदिकर्मणि निष्ठा ) चान्द्रमानेन शुक्लप्रतिपदादिको मासारम्भः अस्य कलामात्रत्वद्योतनार्थमिदं विशेषणम् ।

**पीयूषेति**— जगत्त्रयस्य दृशां नेत्राणां पीयूषस्यामृतस्य आग्रयणं शरदादिषु नूतनान्नेन कर्तव्य इष्टिविशेषः । तस्य भोजनार्थत्वेन यथा दृष्टफलत्वात्प्रीतिकारणत्वं विशेषतश्चामृतमयान्नप्राप्तौ, तद्वदयं सर्वनेत्राह्लादक इत्यर्थः । विश्वस्य उन्माथिन उन्मथनशीलस्य व्यथाकरस्येत्यर्थः हुताशनस्याग्नेर्मन्मथस्येत्यर्थः तस्यैव हि विश्वोन्माथित्वमैकान्त्येन भवति, चन्द्रस्य तदुद्दीपकत्वं च । आलातलेखाया उल्मुकरेखायाः लवः कणभूतः कलामात्रत्वेनास्य लवत्वम् । अलातशब्दात्प्रज्ञाद्यण्यालातमिति रूपम् । 'स्फुलिङ्गोऽग्निकणोऽलातज्वालोल्कालातमुल्मुकम् ।' इति

**सीता —** ( तदनुमोदमाना ) अज्जउत्त परिपुण्णा गुणिणो जहिं कहिं वि सोहन्दि खीणा उण सीसं आरुहन्दि त्ति हरजडाचन्दो एव्व पुढमं णिदंसणम् ।

**आर्यपुत्र, परिपूर्णा गुणिनो यत्र कुत्रापि शोभन्ते, क्षीणाः पुनः शीर्षमारोहन्तीति हरजटाचन्द्र एव प्रथमं निदर्शनम् ।**

**रामः —** ( विहस्य । ) देवि महाक्षत्रियकुलसंभवे, एवमेतत् ।

**सेतूपक्रमकौतुकाहृतगिरिप्रक्षेपवेगाच्चल-**
**न्निःशेषाम्बुपरिस्फुटोदरदरीगम्भीरिमा सागरः ।**
**चक्रे गोष्पदवद्विलङ्घितवतोऽप्यन्तर्भयं मारुतेः**
**पूर्णत्वादतिरिच्यते हि महतस्तुच्छस्य दुर्लङ्घता ॥ ८० ॥**

---

हेमचन्द्रः । ककुभां दिशां उद्घाटनी विभज्य प्रकाशयित्रीत्यर्थः । उदुपसृष्टात् 'घट संघाते' इति चौरादिकधातोः कर्तरि ल्युट्, टित्त्वान्ङीप् च । 'ण्यासश्रन्थो युच्' इति तु न, तस्य भावार्थकत्वात्ततो ङीपो दुर्लभत्वाच्च । कुञ्चिका कूर्चिका उद्घाटनयन्त्रविशेषः 'कुञ्चिकायां तु कूर्चिका' इति हेमचन्द्रः । वीरेषु मध्ये प्रथमा श्रेष्ठयदर्शिनी पुष्पधनुषो मन्मथस्य 'वा संज्ञायाम्' इति पाक्षिकोऽनङ्भावः रेखा अप्रतिभटत्वप्रशस्तिप्रख्यापनचिह्नमित्यर्थः कामोद्दीपकत्वाच्चन्द्रस्य, तत्कलायास्तद्रेखात्वेनोल्लेखः । मृगाक्षीमुखश्रीणां स्त्रीमुखशोभानां प्रतिराजबीजं सादृश्यहेतुभूतामित्यर्थः । नवश्चन्द्रमाः कलामात्रश्चन्द्रः अधिकानन्द्यतीवाह्लादको दृश्यत इति पूर्वेण संबन्धः । एवमानन्दनयित्वात्कलामात्रस्य तस्मिन् पूर्णचन्द्रापेक्षयेश्वरस्य प्रीतिरिति भावः । 'कलाशेषश्चन्द्रः — तनिम्ना शोभन्ते' इत्यादिना तस्य शोभावहत्वं प्रसिद्धमेव । उल्लेखालङ्कारः ॥ ७९ ॥

निदर्शनं दृष्टान्तः सेत्विति— सागरः समुद्रः सेतूपक्रमे सेतुबन्धनारम्भे कौतुकेन कुतूहलेन आहृतानामानीतानां गिरीणां प्रक्षेपस्य वेगेन उच्चलद्भिरुत्तिष्ठद्भिः निःशेषैरम्बुभिर्जलैः परिस्फुटः सम्यक्प्रकाशः उदरदर्याः कन्दरतुल्यस्य मध्यप्रदेशस्य गम्भीरिमा गाम्भीर्यमगाधता यस्य तथाभूतःसन् गोष्पदवद्गोपदेन तुल्यं 'गोष्पदं गोपदे श्वभ्रे गवां च गतिगोचरे' इति विश्वः । 'गोष्पदं सेवितासेवितप्रमाणेषु' इति निपातनात्पदस्य सुट् षत्वं च । विलङ्घितवतस्त्वदन्वेषणार्थं क्रान्तवतोऽपि मारुतेर्हनूमतः अन्तर्मनसि भयमतिगभीरोदरदर्शनानिमित्तं चक्रे कृत-

इदं चास्य ।

प्राचीनाचलचुम्बिचन्द्रमणिभिर्निर्व्यूढपाद्यं निजै-
र्निर्यासैरुडुभिर्निजेन वपुषा दत्तार्घ्यलाजाञ्जलि ।
अन्तःप्रौढकलङ्कतुच्छमभितः सान्द्रं परिस्तीर्यते
बिम्बादङ्कुरभग्ननैशिकतमःसन्दोहमिन्दोर्महः ॥ ८१ ॥

एतं च ।

मृगराजकरजभङ्गुरकिंशुककुसुमावतंसिताः सुदृशः ।
भयसङ्कुचदङ्कहरिणबहुलोज्ज्वलमिन्दुमीक्षन्ते ॥ ८२ ॥
इन्दोरेककलाया रुद्रेणोद्धृत्य मूर्ध्नि विधृतायाः ।
स्थानमिव तुच्छमेतत्कलङ्करूपेण परिणमते ॥ ८३ ॥

वान् । तत्र हेतुमाह हि यतः तुच्छस्य रिक्तस्य दुर्लङ्घतानतिक्रमणीयत्वं महतो महापुरुषस्य समृद्धस्येत्यर्थः पूर्णत्वात्पूर्णतामपेक्ष्य अतिरिच्यतेऽधिकं भवति । अतस्त्वदुक्तं सत्यमेवेति भावः । अर्थान्तरन्यासालङ्कारः ॥ ८० ॥

प्राचीनेति—प्राचीनाचलचुम्बिभिरुदयगिरौ वर्तमानैः चन्द्रकान्तैः निर्व्यूढं निष्पादितं पाद्यं पादार्थमुदकं यस्य तथाभूतं निजैर्निर्यासैः इव शब्दोऽध्याहर्तव्यः स्वसारैरिव स्थितैः उडुभिर्नक्षत्रैः (कर्तृभिः) निजेन वपुषा (करणेन) दत्तः अर्घ्यलाजाञ्जलिः पूजार्थो लाजाञ्जलिर्यस्मै तत् । अत्र केचिदुडुभिर्लाजाञ्जलिदानं, स्ववपुषाऽर्घ्यदानमित्यर्थं योग्यतावशात्पाठक्रमस्यार्थक्रमेण बाधं चाहुः । अन्तर्मध्ये प्रौढेन घनीभूतेन कलङ्केन तुच्छं शून्यम् । अङ्कुर उद्भेद एव भग्नो ध्वस्तः नैशिकस्य निशायां भवस्य 'निशाप्रदोषाभ्यां च' इति पाक्षिकष्ठञ् । तमसः सन्दोहः समूहो येन तत् इन्दोश्चन्द्रस्य महः कान्तिः सान्द्रं निरन्तरं सत् बिम्बाच्चन्द्रमण्डलात् अभित ऊर्ध्वमधश्चेत्यर्थः परिस्तीर्यते व्याप्रियते कर्मकर्तरि प्रयोगः ।

मृगराजेति— मृगराजस्य सिंहस्य करजैर्नखैरिव भङ्गुरैः कुटिलैः किंशुकानां कुसुमैः पुष्पैः अवतंसिताः कृतशेखराः सुदृशः स्त्रियः, भयेन सिंहनखरत्वधीकृतेन सङ्कुचता गात्रमन्तः प्रवेशयता अङ्कहरिणेनोत्सङ्गस्थेन अङ्कभूतेन वा मृगेण बहुलोज्ज्वलमतीव शोभमानं इन्दुं चन्द्रं ईक्षन्ते ॥ ८२ ॥

इन्दोरिति— रुद्रेण महेश्वरेण उद्धृत्योत्पाट्य मूर्ध्नि शिरसि विधृतायाः शेखरत्वेन कृतायाः इन्दोश्चन्द्रस्य एकस्याः कलायाः तुच्छं स्वयमुद्धृतत्वेन शून्यं

**विभीषणः**— (विहस्य। रामं प्रति।)

रोदसीकूपमण्डूकः कियदेष प्रकाशते।
चन्द्रमा यदयं देव त्वत्कीर्तेः प्रतिगर्जति॥ ८४॥

**सीता**—(सस्मितम्।) जाणामि अज्जउत्त कित्तिकन्दीए पडिबद्धं कदुअ पराजिएण संपदि भअवदा हरिणङ्केण कलङ्कसङ्घाटि पविट्ठात्ति। जानाम्यार्यपुत्र कीर्तिकान्त्या प्रतिस्पर्धां कृत्वा पराजितेन सांप्रतं भगवता हरिणाङ्केन कलङ्कसङ्घाटी प्रविष्टेति।

(सर्वे हसन्ति। रामः स्मयते।)

**सीता**—( रामं प्रति।)

सारम्भं सिरिवच्छलञ्छणभुआपल्लट्टमन्थाअल-
क्खोहुव्वोलिअदुद्धसिन्धुलहरीगब्भच्छईसच्छइं।
को गाएदि ण दे रहुण्णवइणो अन्धारपक्खन्तरे
संदुट्ठन्तमिअङ्कमण्डलमयूहुग्गारगोरं जसम्॥ ८५॥

---

स्थानमिव स्थितमेतत् कलङ्करूपेणाङ्कात्मना परिणमते परिणतं भवति। कर्मकर्तरि प्रयोगः 'न दुहस्नुनमाम्' इति यगभावः॥ ८३॥

रोदसीति— रोदस्योर्द्यावापृथिव्योरेव कूपस्य मण्डूको भेकभूतस्तद्वत्तदेकदेशमात्रवर्तीत्यर्थः 'भूद्यावौ रोदस्यौ रोदसी च ते' इत्यमरः। एष चन्द्रमाः कियत्प्रकाशते ऽत्यल्पमेव दीप्यत इत्यर्थः। हे देव दाशरथे राम यद्यतः अयमत्यल्पदीप्तिश्चन्द्रः त्वत्कीर्तेः प्रतिगर्जति सदृशीभवति 'द्रुह्यति प्रतिगर्जति। तस्य चानुकरोतीति शब्दाः सादृश्यवाचकाः।' इति प्रतिगर्जतीत्यस्य सादृश्यवाचित्वमुक्तं काव्यादर्शे। कूपमण्डुकवदल्पप्रकाशस्य चन्द्रस्य सर्वव्यापिनस्त्वत्कीर्तिचन्द्रस्य च सादृश्यकथनमनुपपन्नमिति भावः॥ ८४॥

सङ्घाटी संपुटाकारं युग्मम्। 'सङ्घाटिका तु कुट्टिन्यां घ्राणे युग्मेऽम्बुकण्टको' इति हेमचन्द्रः। सङ्घाट्येव सङ्घाटिका। सारम्भमिति— श्रीवत्सलाञ्छनस्य विष्णोः भुजाभिः पर्यस्तस्य परिक्षिप्तस्य मन्थाचलस्य मन्दरगिरेः क्षोभेणालोडनेन उद्वेल्लितस्य तरलितस्य दुग्धसिन्धोः क्षीरसमुद्रस्य लहर्याः प्रवाहस्य गर्भच्छव्या आन्तरकान्त्याः सच्छवि समानशोभं अन्धकारपक्षान्तरे कृष्णपक्षमध्ये संत्रुट्यतो भिद्यमानस्य मृगाङ्कमण्डलस्य चन्द्रबिम्बस्य मयूखोद्गारवत्कान्तिप्रसरवत् गौरं शुभ्रं रघूणां पत्युस्ते यशः कर्म। को न गायति सर्वोऽपि गायत्येवेत्यर्थः॥ ८५॥

सारम्भं श्रीवत्सलाञ्छनभुजापर्यस्तमन्थाचलक्षोभोद्वेल्लितदुग्धसिन्धुलहरीगर्भच्छवीसच्छवि । कोगायति न ते रघूणां पत्युरन्धकारपक्षान्तरे संत्रुट्यन्मृगाङ्कमण्डलमयूखोद्गारगौरं यशः ।

( नेपथ्ये । )

देव, त्वर्यतां त्वर्यताम् । संनिधत्ते भगवद्वसिष्ठगृहीतो मङ्गलाभिषेकमुहूर्तः ।

**रामः**— ( आकर्ण्य । ) कथमयोध्यायाः प्रतिनिवृत्तो मारुतिरस्मांस्त्वरयति ।

**सीता**— ( सहर्षम् । ) कहं अज्जणाणन्दणो तुवरावेदि, ता भअवं पुप्पअ ओणम मेइणिसंणिहिअगअणमग्गेण गच्छह्म । कथमञ्जनानन्दनस्त्वरयति, तद्भगवन् पुष्पक, अवनम, मेदिनीसंनिहितगगनमार्गेण गच्छामः । ( अधोऽवलोक्य रामं प्रति । ) अज्जउत्त, किं उण एदं तरुणजीमूदसामले महीवलए महुमहणवक्खत्थलकोत्थुभरअणकिरणत्थवकिअं विअ जलन्तं लक्खिअदि । आर्यपुत्र, किं पुनरेतत्तरुणजीमूतश्यामले महीवलये मधुमथनवक्षःस्थलकौस्तुभरत्नकिरणस्तबकितमिव ज्वलल्लक्ष्यते ।

**रामः**— ( दृष्ट्वा विभीषणं प्रति । )

तक्षटङ्कलिखितार्कमण्डलप्रोच्चलत्कणकदम्बभासुरम् ।
शिल्पशालमिव विश्वकर्मणः किं विभाति मृगतृष्णिकामयम् ॥८६॥

**विभीषणः**— स एष रोहणाचलः ।

ज्येष्ठामूलीययात्रासरभसकरभीकाम्यकान्तारवर्त्मा
दूरेऽपि ज्योतिरक्ष्णोरपलपति महज्ज्वलज्जाङ्गलश्रीः ।

---

तक्षेति— तक्ष्णः टङ्केन पाषाणदारणयन्त्रविशेषेण लिखितात्त्वष्टात् अर्कमण्डलात् प्रोच्चलतामुद्गच्छतां कणानां कदम्बवत्समूहवत् भासुरं प्रकाशमानं विश्वकर्मणः शिल्पशालं तक्षणालयमिव स्थितं 'विभाषा सेनासुरा' इत्यादिना शालाशब्दस्य क्लीबत्वं । मृगतृष्णिकामयं मरीचिकाप्रायमातपभूयिष्ठमित्यर्थः । किं विभाति किमिदं शोभते ॥ ८६ ॥

ज्येष्ठामूलीयेति— ज्येष्ठामूलाभ्यां नक्षत्राभ्यां युक्ता पौर्णमास्यस्मिन्निति ज्येष्ठमूलीयो ज्येष्ठमासः 'नक्षत्रेण युक्तः कालः' इत्यनुवर्तमाने 'द्वन्द्वाच्छः'। 'ज्येष्ठामूलीयमिच्छन्ति मासमाषाढपूर्वजम् ।' इति हारावलीत्रिकाण्डशेषौ । त-

विष्वद्रीचीभिरस्मिन्निबिडमुडुपतेः कान्तिभिः प्रस्नुवानाः
फेनायन्ते निजोष्मक्कथनभरनदद्बुद्बुदाश्चन्द्रकान्ताः ॥ ८७ ॥

( सर्वे विमानावरोहणं नाटयन्ति । )

**रामः**—( विलोक्य । सीतां प्रति । ) देवि, दक्षिणेन ।

सिंहलद्वीपमम्भोधिसमुद्भवमिवोत्पलम् ।
माणिक्याचलकिञ्जल्करमणीयमुदीक्ष्यते ॥ ८८ ॥

**सीता**—( तं प्रति । ) जस्सि कासकुसुमसंकासो अगत्थहंसओ चरइ ।
यस्मिन् काशकुसुमसंकाशोऽगस्त्यहंसश्चरति ।

**रामः**—( स्मित्वा । ) आं मैथिलि, आम् । इहैव रोहणगिरेरुपत्यकायां द्वितीयमायतनं मुनेर्लोपामुद्रावल्लभस्य । तथाहि । स तत्रभवान् ।

बृहत्पात्रप्राप्त्या विततजलमम्भोधिमुदरे
दधावीषत्पानं किल कलशजन्मा कुलपतिः ।

स्मिन् यात्रायां प्रयाणे सरभसाभिस्त्वरावतीभिः करभीभिरुष्ट्रीभिः काम्यमभिलषणीयं कान्तारवर्त्म आरण्यकः पन्था यस्य सः, उष्ट्राणां मरुदेशसंचारप्रियत्वात्तथोक्तिः जाज्वलन्त्यतीव दीप्यमाना जाङ्गली जङ्गलस्य निर्जलदेशस्य संबन्धिनी श्रीर्यस्मिंस्तादृशः । 'जङ्गलो निर्जले देशे पिशितेऽपि' इति हेमचन्द्रः । मरुर्निर्जलप्रदेशः दूरेऽपि दूरत एव अक्ष्णोर्ज्योतिर्दर्शनशक्तिं अपलपत्यपहन्तीत्यर्थः । अस्मिन्मरौ चन्द्रकान्ताः विष्वद्रीचीभिः सर्वतो व्यापिनीभिः 'विष्वग्देवयोश्चटेरद्र्यञ्चतौ' इत्यद्र्यादेशः । उडुपतेश्चन्द्रस्य कान्तिभिः प्रस्नुवानाः स्वयं द्रवीभवन्तः 'न दुहस्नुनमां यक्चिणौ' इति कर्मकर्तरिप्रयोगे यगभावः । निजोष्मणः सूर्यकराभिमर्शजनितस्यात्मोष्णस्य क्वथनभरेण निष्पाकाधिक्येन नदन्तः बुद्बुदाः स्थासकाः येषु तथाभूताः सन्तः फेनायन्ते फेनमुद्वमन्ति 'बाष्पोष्मभ्यामुद्वमने' इति सूत्रे 'फेनाच्च' इति वार्तिकम् ॥ ८७ ॥

दक्षिणेन दक्षिणस्यां दिशि 'दिक्शब्देभ्यः सप्तमी' इत्याद्यनुवर्तमाने 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' इत्येनप् । सिंहलेति— अम्भोधिसमुद्भवं समुद्रजातं उत्पलमिव स्थितं, माणिक्याचलस्य रोहणगिरेः किञ्जल्कवत्केसरवद्रमणीयं च सिंहलद्वीपं सगरपुत्रनिर्वृत्तद्वीपेष्वन्यतमं सिंहलाख्यं द्वीपं उदीक्ष्यते दृश्यते ८८

काशकुसुमसंकाशः काशपुष्पवच्छ्वेतवर्णः । द्वितीयमायतनमिति मलयायत-

यमाराध्यं विन्ध्याचलशिखरशोभैकभिषजं
विवस्वानाश्वीनं गगनमधिरोहन् कलयति ॥८९ ॥

अपि च

निपीते येनाब्धौ स्तिमितगुरुभिः पक्षपटलैः
प्रयत्नादुड्डीय प्रतिपदमपव्यस्तपतिताः ।
विशन्तः कौलीरं विवरमशरण्याः शिखरिणः
क्षणं दृष्टास्तस्य स्तुतिषु न गिरां साहसरसः ॥ ९० ॥

अपि चात्र श्रृङ्गारसार्वभौमस्य रत्नसिम्हासने सिम्हलनाम्नि प्रदोषारम्भेषु ।

---

नापेक्षयास्य द्वितीयत्वम् । बृहदिति— कलशजन्मा कुम्भोद्भवः । (अल्पाधारकस्य महाकार्यसाधकत्वरूपाद्भुतदर्शनार्थमिदं विशेषणं । ) कुलपतिः 'ऋषीणां दशसाहस्रं योऽन्नदानादिपोषणात् । अध्यापयति विप्रर्षिरसौ कुलपतिः स्मृतः ॥' इत्युक्तगुणविशिष्टो महर्षिः बृहतो विस्तीर्णस्य पात्रस्य तीरद्वयान्तरप्रदेशस्य प्राप्त्या लाभेन 'पारावारे परार्वाची तीरे पात्रं तदन्तरम् ।' इत्यमरः । विततं विस्तीर्णं जलं यस्मिंस्तं अम्भोधिं समुद्रं उदरे ईषत्पानमकृच्छ्रेण पानार्हं 'ईषद्दुःसुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इत्यनुवर्तमाने 'आतो युच्' इति खलपवादो युच् । दधौ धारितवान् । किलेति प्रसिद्धौ । विवस्वानादित्यः आश्वीनमश्वस्यैकाहगमं 'अश्वस्यैकाहगमः' इति खञ् । 'त्रिष्वाश्वीनं यदश्वेन दिनेनैकेन गम्यते' इत्यमरः । गगनमाकाशं अधिरोहन् सन् विन्ध्याचलशिखरस्य शोभस्य श्वयथोः एकभिषजमसाधारणचिकित्सकं यमगस्त्यं आराध्यमुपासनीयं कलयति करोति निश्चिनोति वा विन्ध्याचलोच्छ्रायभञ्जनेनात्मनो दिवि सुगमत्वरूपं तत्कृतमुपकारस्मरन्नेवादित्यः प्रतिदिनं यातीति भावः । तादृशमहिमायमृषिरिति तात्पर्यार्थः ८९

**निपीतइति**— येनागस्त्येन अब्धौ निपीते सति शिखरिणः पक्षच्छेदभिया तत्र प्राक् प्रविष्टाः पर्वताः स्तिमितैर्जलवासजाड्येननिश्चलैः अत एव गुरुभिश्च पक्षपटलैश्छादिर्वत्सांश्लिष्टैः पक्षैः प्रयत्नादतिप्रयासेन उड्डीयोत्पत्य प्रतिपदं पदे पदे एकैकोड्डयनसमयेऽपीत्यर्थः । अपव्यस्ता उत्पतनाशक्त्या व्याकुलाः पतिताश्च सन्तः, अशरण्या इन्द्रभयात्तदा रक्षकरहिताः सन्तः कौलीरं कर्कटकसंबन्धि विवरं छिद्रं विशन्तः सन्तः क्षणं दृष्टाः जनैरिति शेषः । तस्यागस्त्यस्य स्तुतिषु विषये गिरां साहसरसो न कर्तव्य इति शेषः । वाचामविषयस्तन्महिमेति तात्पर्यम् ॥ ९० ॥

उदेष्यत्पीयूषद्युतिकिरणसान्द्राः शशिमणि-
स्थलीनां पन्थानो घनचरणलाक्षारसभृतः ।
चकोरैरुड्डीनैर्झटिति कृतशङ्काः प्रतिपदं
पराञ्चः संचारानविनयवतीनां विवृणते ॥ ९१ ॥

( अन्यतो दर्शयन् । ) इयमितो मौक्तिकीयानामपामाधारस्ताम्रपर्णी ।

शुक्तिकागर्भसंबन्धस्तम्भितास्तोयबिन्दवः ।
भ्रमन्ति सुभ्रुवामङ्कादङ्कमस्याः प्रसूतयः ॥९२ ॥

युवतिकुचभोगकर्मभिरुद्भूतैः शुक्तिसंपुटधृतानि ।
दधतीह ताम्रपर्ण्याः स्थिरकरकाभावमम्भांसि ॥ ९३ ॥

**सीता** — अज्जउत्त, जेट्ठेत्ति दक्खिणमेत्तएण भअवदो साअरस्स भाईरहीए पक्खवादो, पेम्मसव्वस्साणिस्सन्दो उण सहअसंवङ्कमोत्तिआभलणरमणी-

---

शृङ्गारएव सार्वभौमश्चक्रवर्ती तस्य। प्रदोषस्य रजनीमुखस्य आरम्भेषूपक्रमेषु 'प्रदोषो रजनीमुखम्' इत्यमरः। उदेष्यदिति— अत्रास्मिन् प्रदेशे शशिमणिस्थलीनां चन्द्रकान्तप्रदेशानां पन्थानो मार्गाः उदेष्यत उदयं गमिष्यतः पीयूषद्युतेश्चन्द्रस्य किरणैः सान्द्रा निरन्तराः अर्थाद्द्रवीभूता इत्यर्थः। ततश्च झटिति जनसामीप्यशङ्काजनितेन चन्द्रदर्शनौत्सुक्यकृतेन च वेगेन, उड्डीनैरूर्ध्वमुत्पतितैः चकोरैः प्रतिपदं पदे पदे कृता प्रकाशिता शङ्का स्वदुर्नयस्य परानुमेयत्वरूपाभिसारिकाणामनर्थप्रतिभा येषु तथाभूताः सन्तः अविनयवतीनामभिसारिकाणां पराञ्चोऽभिसरणरूपत्वेन निन्दितान् 'नाञ्चेः पूजायाम्' इत्युपधानस्य लोपो न। संचारान् विवृणते प्रकटयन्ति॥ ९१ ॥

मौक्तिकेभ्यो हिता मोक्तिकीयाः। 'तस्मै हितम्' इति छः। शुक्तिकेति— अस्याः प्रसूतय एतत्ताम्रपर्ण्युत्पन्नाः तोयबिन्दवो जलकणाः शुक्तिकागर्भस्य मुक्तास्फोटान्तःप्रदेशस्य संबन्धेन स्तम्भिता मुक्तात्मना परिणता इत्यर्थः सुभ्रुवां स्त्रीणां अङ्कादुत्संगात् अङ्कं भ्रमन्ति गच्छन्ति। यद्वा। अङ्कादङ्कनाच्छोभाविष्करणाद्धेतोः सुभ्रुवामङ्कं भ्रमन्ति ॥ ९२ ॥

**युवतीति**— शुक्तिसंपुटधृतानि ताम्रपर्ण्या अम्भांसि जलानि इहास्मिन् प्रदेशे उद्भूतैः फलोन्मुखीभूतैः युवतिकुचानां भोगकर्मभिर्मौक्तिकधारणसुखानुभवयोग्यैः प्राक्तनपुण्यकर्मभिर्हेतुभिः स्थिरकरकाभावं मौक्तिकत्वं दधति ॥ ९३ ॥

आए तम्मपण्णीए एव्व वण्णीअदि । आर्यपुत्र, ज्येष्ठेति दाक्षिण्यमात्रेण भगवतः सागरस्य भागीरथ्यां पक्षपातः, प्रेमसर्वस्वनिष्यन्दः पुनः सहजसर्वाङ्गमौक्तिकाभरणरमणीयायां ताम्रपर्ण्यामेव वर्ण्यते ।

**रामः** — (विलोक्य, विहस्य, अन्यतो दर्शयन् ।)

रमयति मलयाचलोऽयमस्मादुपनमता पवनेन मानिनीनाम् ।
दयितविनयकूटसाक्षिणीभिः स खलु सखीभिरदुष्करः प्रबोधः ९४

**लक्ष्मणः** — (अग्रतो दर्शयन् ।)

स्वपाणिप्राग्भागप्रचलविततोत्तानसलिल-
स्वयंक्लिष्टोत्ताम्यत्तिमिनिवहलग्नामिव घृणाम् ।
दधानस्यापीतोद्धृतजलनिधेरेतदपरं
पुरो लोपामुद्रासहचरमुनेराश्रमपदम् ॥ ९५ ॥

चतुरुदधिपानचेष्टादृष्टपिपासे मुनावुदयमाने ।
पाययितुमिवात्मानं विबोध्य सज्जीभवन्त्यापः ॥ ९६ ॥

---

रमयतीति— अयं मलयाचलो रमयति प्रीणयाति अस्मानिति शेषः । अस्मान्मलयाचलात् उपनमता आगच्छता पवनेन (करणेन) दयितस्य विनयेऽन्यत्र वैमुख्यपूर्वकं स्वस्मिन्नैवेदंपर्येणासक्तत्वकथने विषय इति यावत् । कूटसाक्षिणीभिरभूतानामपि तद्गुणानां तथ्यवत्कथनशीलाभिः सखीभिः स पूर्वमशक्यः मानिनीनां प्रणयकलहकुपितानां स्त्रीणां प्रबोधो नाम नष्टस्य गन्धस्य पुनरुत्पादनं, प्रकृते तु प्रणयकलहनष्टस्य दयितानुरागस्य पुनरुत्पादनमित्यर्थः 'अथ प्रबोधनम् । अनुबोधः' इत्यमरः । अदुष्करः खलु मलयमारुते सति मानं विहाय स्वयमेव भर्तृसङ्गमभिलषन्ति मानिन्य इति भावः ॥ ९४ ॥

स्वपाणीति— पुरोऽग्रे दृश्यमानं एतत् स्वपाणेः प्राग्भागेऽग्रप्रदेशे करतल इति यावत् । प्रचले वितते विस्तीर्णे उत्तानेऽगाधे च सलिले स्वयं क्लिष्टानां संमर्दादिना क्लेशमनुभवतां अत एव उत्ताम्यतामनवस्थितिखेदमनुभवतां तिमीनां मत्स्यविशेषाणां निवहे समूहे लग्नां संसक्तां घृणां दधानस्येवेत्युत्प्रेक्षा । आपीतः पूर्वं उद्धृतः पश्चाद्विसृष्टश्च जलनिधिर्येन तस्य लोपामुद्रासहचरमुनेरगस्त्यस्य अपरं पूर्वोक्तादन्यत् आश्रमपदं भवतीति शेषः ॥ ९५ ॥

चतुरिति—चतुर्णामुदधीनां पानं चतुरुदधिपानं 'तद्धितार्थ' इत्यादिना उत्तरपदे परे समासः तस्य चेष्टया व्यापारेण दृष्टा पिपासा पातुमिच्छा यस्य

**सुग्रीवः**— (सस्मितम् ।)

सप्तभिरम्भोनिधिभिर्विहितापोशानकर्माणि मुनीन्द्रे ।
भक्तंमन्यानि किमपि चकम्पिरे सप्तभुवनानि ॥ ९७ ॥

( सर्वतोऽवलोक्य । सहर्षाद्भुतम् ।) अहो चिरेणाद्य चतुर्दशलोकैकदण्डधारे धर्माधिकारिणि रामदेवे दण्डकारण्यगृहमेधिनां तपोधनानामृद्धयः ।

**रामः**— ( सलज्जस्मितम् । विमानवेगनाटितकेन, सहर्षाद्भुतम् । ) कथं हि हिरण्यहरिणविहारकान्तारस्थलीनामुपरि प्रतिष्ठामहे ।

**सुग्रीवः**—(सोपहासम् ।) इयं सा मारीचशरीरोपहाररक्षितात्मनो दशकण्ठस्य कपटभिक्षुविडम्बनाडम्बरैककर्मज्ञा पञ्चवटी [ सादरं च । ]

विश्वामित्रमखद्विषे च वपुषा चित्रेण पत्युर्मुखा-
दप्याकृष्टविदेहराजतनयानेत्रारविन्दाय च ।
मारीचाय नमो नमः किमपरं यस्मै कुले रक्षसां
द्वौ वारौ विभुनापि दाशरथिना चक्रे ततज्यं धनुः ॥ ९८ ॥

---

तस्मिन् मुनावगस्त्ये उदयमाने सति, आपः आत्मानं पाययितुं पानं कारयितुं विबोध्यानुस्मार्यैव सज्जीभवन्ति प्रसीदन्तीत्यर्थः । शरदारम्भेऽगस्त्यनक्षत्रोदये सति जलानि प्रसन्नानि भवन्ति, तदुत्प्रेक्षते— समुद्रपानेनातितृषितत्वमगस्त्यस्यानुमाय तदर्थं स्वयमप्यन्यानि सज्जीभवन्तीवेति ॥ ९६ ॥

**सप्तभिरिति**— मुनीन्द्रेऽगस्त्ये सप्तभिरम्भोनिधिभिर्लवणेक्ष्वादिसप्तसमुद्रैः विहितमनुष्ठितं अपोऽशानकर्माचमनं येन तथाभूते सति । 'अपो शान, कर्म कुरु' इत्यादि श्रुत्यनुकरणेनाचमनं वैदीकोऽयं प्रयोगः । ततश्च सप्तभुवनानि भूरादिलोकाः भक्तंमन्यानि तदन्नत्वेनात्मानं मन्यमानानि सन्ति 'आत्ममाने खश्च' 'भक्तमन्ने तत्परे च' इति हेमचन्द्रः । किमप्यातितरां चकम्पिरे कम्पितानि बभूवुरिवेत्युत्प्रेक्षा ॥ ९७ ॥

दण्डधार इत्यत्र कर्मण्यण् । दण्डधर इति प्रयोगे तु धरतीति धरः पचाद्यच् । दण्डस्य धरो दण्डधर इति समासः । धर्माधिकारिणि धर्मप्रवर्तके । उपहारो बलिः । विडम्बना वञ्चनं । **विश्वामित्रेति**— विश्वामित्रमखस्य द्विषे तद्विघ्नार्थमागतायेत्यर्थः । तथा चित्रेणाद्भुताकारेण वपुषा मायाकल्पितसौवर्णमृगरूपेण पत्युर्दाशरथेरामस्यमुखादप्याकृष्टं बलादपावर्तितं विदेहराजतनयानेत्रारविन्दं येन

(सीता लज्जते ।)

**रामः**—(प्रस्रवणाचलं दर्शयन् । सीतामपवार्य ।) देवि,

नक्तं रत्नमयूखपाटवमिलत्काकोलकोलाहल-
त्रस्यत्कौशिकमुक्तकन्दरतमाः सोऽयं गिरिः स्मर्यते ।
यत्राकृष्टकुचांशुके मयि रुषा वस्त्राय पत्राणि ते
चिन्वन्त्या वनदेवतास्तरुदलान्युच्चैर्व्यधुः कौतुकात् ॥ ९९ ॥

**सीता**— (स्मयमाना कपोतकं कृत्वा ।) भअवदीओ जणट्ठाणदेवदाओ, एसा वो परिचारिआ जाणई पणमादि भगवत्यो जनस्थानदेवताः, एषा वः परिचारिका जानकी प्रणमति

**रामः**—(अन्यतो दर्शयन् ।) देवि, वन्दस्व गोदावरीं भगवतीमितः ।

(जनान्तिकम् ।)

एतस्याः पुलिनोपकण्ठफलिनीकुञ्जोदरेषु स्रजं
कृत्वा किंशुककोरकैरकरजक्रीडासहिष्णुस्तने ।

---

तस्मै च (अपिशब्दाद्राममुखात्सीतानेत्रकर्षणमतीवदुष्करं तदपि कृतवत इत्यर्थः) मारीचाय नमो नमइति परिहासोक्तिः । किमपरं वक्तव्यमिति शेषः । रक्षसां कुले मध्ये निर्धारणे सप्तमी यस्मै मारीचाय परं विभुना दाशरथिनापि (सकृत्संधानेनैव विवक्षितलक्ष्यभेदिनापीत्यपेर्थः) द्वौ वारौ द्विः धनुः कर्म ततज्यं सज्यं चक्रे कृतम् । कर्मणि लिट् । अतोऽस्य कौशलं किं वक्तव्यमिति भावः ॥ ९८ ॥

**नक्तमिति**—नक्तं रात्रौ रत्नानां गुहागतमणीनां मयूखपाटवेन किरणप्रभावेण मिलतामरुणोदयबुद्ध्यैकीभवतां काकोलानां द्रोणकाकानां 'द्रोणकाकस्तु काकोलः' इत्यमरः । कोलाहलेन त्रस्यद्भिर्बिभ्यद्भिः कौशिकैरुलूकैः मुक्तं परित्यक्तं कन्दराणां गुहानां तमो लक्षणया तमोवृतप्रदेशो यस्य तथाभूतः 'महेन्द्रगुग्गुलूलूकव्यालग्राहिषु कौशिकः' इत्यमरः । सोऽयं गिरिः प्रस्रवणाचलः स्मर्यते । स्मृतमर्थमाह— यत्र गिरौ मयि आकृष्टकुचांशुकेऽपनीतस्तनोत्तरीये सति रुषा कोपेन वस्त्रायाच्छादनं कर्तुं पत्राणि चिन्वन्त्या हर्तुमुद्युक्तायाः ते तव कौतुकात्त्वदीयविक्रियादिदृक्षौत्सुक्येनेत्यर्थः वनदेवताः तरुदलानि त्वया चिचीषितानि पत्राणि उच्चैर्व्यधुस्त्वद्धस्ताग्राह्यस्थानं निन्युः ॥ ९९ ॥

**कपोतकमिति**—'स कपोतः करौ यत्र श्लिष्टमूलोरुपार्श्वकम् । प्रणामे गुरुसल्लापे विनयाविष्कृतावपि ॥' इत्युक्तरीत्याञ्जलिबन्धः । **एतस्या इति**—

दत्वा वक्षसि ते मयि प्रहसति प्राज्यापराधे तदा
कौमारव्रतभङ्गरोषितमपि स्मेरं तवासीन्मुखम् ॥ १०० ॥

(सीता सलज्जस्मितम् । मुखमवनमयन्ती च गोदावरीं प्रणमति ।)

**रामः**—(परिवृत्य प्रेक्षितकेन सखेदम् ।) देवि,

अस्मिन्माल्यवतस्तटीपरिसरे कादम्बिनीडंबरः
संस्थूलंकरणो ममाश्रुपयसामासीदवर्षन्नपि ।
यद्धारालुलितैर्न शाखिभिरपि त्वत्पालितैर्मां तथा
दृष्ट्वा कन्दलितं च केकिभिरपि प्रारम्भि संगीतकम् ॥ १०१ ॥

**सीता**—(मन्यूत्पीडगद्गदकण्ठग्रन्थिलस्वरा । पुष्पकं प्रति ।) विमाणराअ, पसीद, सीदह्मि । ण दलिअं एव्व वज्जमअं मे हिअअम् । तह वि तुवरेहि जह एसा अन्दरीअदि दण्डआरण्णविच्छोलि। विमानराज, प्रसीद । सीतास्मि, न दलितमेव वज्रमयं मे हृदयम् । तथापि त्वरस्व, यथैषान्तरीयते दण्डकारण्यपङ्क्तिः ॥

---

एतस्या गोदावर्याः पुलिनोपकण्ठे तोयोत्थितप्रदेशसमीपे फलिनीकुञ्जोदरेषु प्रियङ्गुलतागृहमध्येषु किंशुकानां कोरकैः कलिकाभिः स्रजं कृत्वा मालां निर्माय, अकरजक्रीडासहिष्णू अनतिरूढतारुण्यत्वेन तीक्ष्णनखक्षतासहनशीलौ स्तनौ यस्मिंस्तादृशे ते वक्षसि दत्वा मयि प्रहसति परिहासं कुर्वाणे सति प्राज्य उत्कटोऽपराधो यस्मिंस्तादृशे तदा तस्मिन्नवसरे कौमारव्रतभङ्गेनापूर्वपतित्वलोपेन रोषितं कोपितमपि तव मुखं स्मेरं मत्परिहासज्ञानेन मन्दहासावशिष्टमासीत् । तदानीं कौमारत्वे कविवचनमेव प्रमाणम् ॥ १०० ॥

अस्मिन्निति—अस्मिन् माल्यवतः प्रस्रवणागिरेः तटीपरिसरे तटसमीपप्रदेशे कादम्बिन्या मेघपङ्क्त्याः डम्बरो निर्घोषः अवर्षन् वर्षणक्रियामनुत्पादयन्नपि मम अश्रुपयसां त्वद्वियोगजन्यदुःखबाष्पवारीणां संस्थूलंकरणो वर्धक इत्यर्थः 'आढ्यसुभग' इत्यादिना करणे ख्युन् । आसीत् । यद्धाराभिरश्रुपयःसंपातैः लुलितैः शुष्कैः त्वया पालितैः जलसेचनादिना वर्धितैः शाखिभिर्वृक्षैरपि मां तथा दृष्ट्वा अतिदुःखितं विलोक्य न कन्दलितं नाङ्कुरितं तत्करोतीति ण्यन्तात्कन्दलशब्दान्निष्ठा, तथा केकिभिर्मयूरैरपि संगीतकं मेघदर्शनेन नर्तनार्थगानमपि न प्रारंभि न प्रारब्धं 'रभेरशब्लिटोः' इति नुम् ॥ १०१ ॥

**रामः**— (विमानवेगनाटितकेन । सीतां प्रति ।) इदमग्रे महाराष्ट्रमण्डलैकमण्डनं कुण्डिनं नाम नगरम् । इह हि-

अनन्यक्षुण्णश्रीर्मलयगिरिजन्माऽयमनिलो
निपीय स्वेदाम्बु स्मरमकरसंभुक्तविभवम् ।
विदर्भीणां भूरि प्रियजनपरीरम्भरभस-
प्रसङ्गादङ्गानि द्विगुणपुलकस्रञ्जि तनुते ॥ १०२ ॥

किं च

बिभ्रतीं कैशिकीवृत्तिसौरभोद्गारिणीर्गिरः ।
दूराध्वानोऽपि कवयो यस्या रीतिमुपासते ॥ १०३ ॥

**विभीषणः**—(दक्षिणतो दर्शयन् ।) प्रणम्यतामयमान्ध्रविषयलक्ष्म्याः सप्तगोदावरहारकलापैकनायको भगवान् भीमेश्वरः । तथाहि

तत्कालारभटीविजृम्भणपरित्रासादिव भ्रश्यता
वामार्धेन तदेकशेषचरणं बिभ्रद्वपुर्भैरवम् ।

---

मन्यूत्पीडेन भर्तृवियोगदुःखस्मरणनिमित्तशोकाधिक्येन गद्गदोऽस्फुटः अत एव कण्ठे ग्रन्थिलः स्तम्भितश्च स्वरो यस्याः सा । संस्कृते पाङ्क्तिरित्यस्य विच्छोलीति प्राकृते देशीप्रयोगः । **अनन्येति**— अनन्यक्षुण्णा देशान्तरेणानन्तरितत्वादितरैरननुभूता श्रीः शैत्यसौरभ्यादिसंपत् यस्य सः मलयगिरिजन्मायमानिलो वायुः स्मरस्य मन्मथस्य मकरेण केतुमत्स्येन संभुक्तविभवमनुभूतैश्वर्यं स्वेदाम्बु सुरते घर्मजलं निपीय परिहृत्येत्यर्थः । ततश्च भूरि पुनरपीत्यर्थः । प्रियजनपरीरम्भे दयितालिङ्गने रभसप्रसङ्गादौत्सुक्योत्पादनाद्धेतोः विदर्भीणां विदर्भदेशस्त्रीणामङ्गानि द्विगुणा पुनरुक्तभूता पुलकस्रक् रोमाञ्चपरंपरा येषु तथा भूतानि तनुते करोति

**बिभ्रतीमिति**— दूराध्वानो विप्रकृष्टदेशस्था अपि कवयः कैशिकीवृत्त्या 'अत्यर्थसुकुमारार्थसंदर्भा कैशिकीमता' इत्युक्तलक्षणया वृत्त्या सौरभोद्गारिणीराह्लादकारिणीः गिरो वाणीः बिभ्रतीं दधानां अस्या रीतिं 'बन्धपारुष्यरहिता शब्दकाठिन्यवर्जिता । नातिदीर्घसमासा च वैदर्भी रीतिरिष्यते ।' इत्युक्तलक्षणां वैदर्भीरीतिं उपासते प्रयुञ्जते बहुमन्यन्ते वा ॥ १०३ ॥

सप्तानां गोदावरीणां समाहारः सप्तगोदावरं 'संख्याया नदीगोदावरीभ्यां च' इत्यच् । 'नदीभिश्च' इत्यव्ययीभावः समाहार एवेति नियमश्च । कलापस्य संहते-

तुल्यं चास्थिभुजङ्गभूषणमसौ भोगीन्द्रकङ्कालकै-
बिभ्राणः परमेश्वरो विजयते कल्पान्तकर्मान्तिकः ॥ १०४ ॥

**रामः**—(कृताञ्जलिः ।)

नृत्तारम्भरसत्रसद्गिरिसुतारिक्तार्धसंपूर्तये
निर्व्यूढभ्रमिविभ्रमाय जगतामीशाय तुभ्यं नमः ।
यश्चूडाभुजगेश्वरप्रभृतिभिस्तादृग्भ्रमन्तीर्दिशः
पश्यद्भिर्घनघूर्णमानवदनैः श्रान्तोऽपि न श्रद्दधे ॥ १०५ ॥

अपि च ।

क्रीडाभटस्य प्रलयान्धकारैः कण्ठे निपीते तव नीलकण्ठ ।
पृथक्कबन्धं पृथगुत्तमाङ्गं नृत्तं भयादैक्षत कालरात्रिः ॥ १०६ ॥

---

भूषणस्य वा। तदिति-कल्पान्तकर्मान्तिकः प्रलयकर्मकृत् परमेश्वरःतत्काले प्रलयकाले आरभटीविजृम्भणस्य औद्धत्यप्रधाननाट्यविशेषवृद्धेः परित्रासाद्दर्शनभीत्येव भ्रश्यता अवपतता वामार्धेन पार्वत्याधिष्ठितस्वसव्यार्धेन तदेकशेषः सव्याभावेन दक्षिणमात्रश्चरणो यस्य तत् अत एव भैरवं भीषणं भैरवसंज्ञितं च वपुः बिभ्रद्दधानः सन् अत्र 'केवलं ताण्डवं कर्तुं चण्डिकाविरहासहः । वामार्धं दक्षिणे भागे संजहार महेश्वरः' इति शैवतन्त्रोक्तमैतिह्यमनुसंधेयम् । भोगीन्द्रकङ्कालकैस्ताण्डववेगेन सद्य एवशुष्कैरतएवास्थिमात्रावशिष्टैः सर्पैः अस्थ्नां भुजङ्गानां च भूषणं तुल्यं तादृशभैरववेषसदृशं, यद्वा अस्थिभूषणं भुजङ्गभूषणंचेत्युभयस्य सदृशं बिभ्राणो दधानः सन् विजयते ॥ १०४ ॥

**नृत्तेति**— नृत्तारम्भे तादृशनाट्योपक्रमे परित्रसंत्या कम्पमानया गिरिसुतयागौर्या रिक्तस्य मुक्तत्वेन शून्यस्य अर्धस्य वामभागस्य संपूर्तये संपूरणार्थमिव इव शब्दोऽध्याहार्यः निर्व्यूढोऽङ्गीकृतः भ्रमिविभ्रमो भ्रमरिकाविलासो येन तस्मै लोके हि न्यूनस्य वस्तुनो भ्रमणकाले तदभाव इवदृश्यते तथा कुर्वत इवेत्युत्प्रेक्षा जगतामीशाय तुभ्यं नमः, यस्तादृशो महेश्वरः श्रान्तो नाट्यादुपरतोऽपि घनमातितरां घूर्णमानवदनैर्भ्राम्यन्मुखैः अत एव दिशो भ्रमन्तीः पश्यद्भिः भ्रमन्तीरिव मन्वानैरित्यर्थः चूडाभुजगेश्वरप्रभृतिभिः शेखरीकृतवासुकिप्रमुखैः स्वपरिग्रहैः न श्रद्दधे उपरतत्वेन न विश्वस्तो भ्रमणक्रियाया अनुपरमादित्यर्थः ॥ १०५ ॥

**क्रीडेति**— भो नीलकण्ठ! साभिप्रायमिदं संबोधनं क्रीडाभटस्य लीलया ताण्डवमाचरतः तव कण्ठे प्रलयान्धकारैः प्रलयकालतमोभिः निपीतेऽविशेषतां नीते

( सर्वे नमन्ति । )

**रामः**—( अन्यतो दर्शयन् । )द्राविडमण्डलमौलिमाणिक्यस्तबकमिदं काञ्चीनामधेयमायतनं मीनकेतनस्य । ( सीतामपवार्य । ) इह हि

**स्वेदलवपिच्छिलाभिस्तनुभिर्यूनां श्लथं प्रियाश्लेषम् ।**
**विपुलं पुलकशलाकापटलं झटिति प्रतिकरोति ॥ १०७ ॥**

अपि चात्र

**अभिमुखपतयालुभिर्ललाटश्रमसलिलैरवधूतपत्रलेखः ।**
**कथयति पुरुषायितं वधूनां मृदितहिमद्युतिनिर्मलः कपोलः १०८**

**सुग्रीवः**— ( अन्यतो दर्शयन् । ) इयमिह शृङ्गारदेवतागर्भगृहमवन्तीविषयसीमन्तमौक्तिकमुज्जयिनी नाम राजधानी ।

सतीत्यर्थः । कालरात्रिः त्वत्तोऽनन्यशेषा संहारशक्तिः पृथक् असंहित इव दृश्यमानः कबन्धः ग्रीवाया अधोभागो यस्मिंस्तत् तथा पृथक् उत्तमांगं यस्मिंस्तत् नृत्तं भयात् शिरःकबन्धसन्धायककण्ठादर्शनजन्यभीत्या सह ऐक्षत ईक्षितवती । अयं भावः प्रलयावसरे सूर्याद्यभावेन गाढान्धकारव्याप्तत्वात् तदानीं नृत्यतो रुद्रस्य कण्ठस्य नीलत्वेन तमोनिर्विशेषत्वात् विविच्याग्रहणं कण्ठाभिन्नावयवस्य शुभ्रत्वेन पृथग्गृहणं च भवति ततश्च शिरःकबन्धं पृथक् पृथक् नृत्यदिव पश्यन्ती सती कालरात्रिः तादितराभावात् विभायेति भावः । एवं च सर्वोपसंहारेणावशिष्यमाण इति फलितार्थः ॥ १०६ ॥

**स्वेदेति**— विपुलं विस्तीर्णं पुलकशलाकापटलं शलाकावद्दण्डस्य रोमाञ्चस्य समूहः स्वेदलवैः घर्मजलबिन्दुभिः पिच्छिलाभिः विजिलाभिः यूनां युवपुरुषाणां तनुभिस्सह श्लथं शिथिलं प्रियाणां स्त्रीणां आश्लेषमालिङ्गनं झटिति त्वरया प्रतिकरोति दृढयतीत्यर्थः ॥ १०७ ॥

**अभिमुखेति**— मृदितहिमद्युतिवच्छाणोल्लीढचन्द्रवत् निर्मलः वधूनां स्त्रीणां कपोलो गण्डः अभिमुखं मुखं लक्षीकृत्य पतयालुभिः पतनशीलैरधोमुखत्वादित्यर्थः 'स्पृहिगृहिपति' इत्यादिनाऽऽलुच् । ललाटश्रमसलिलैः फालभवैः स्वेदसलिलैः अवधूता विलुलिता पत्रलेखा यस्य तथाभूतः सन् पुरुषायितं पुरुषवदाचरितमुपरिसुरतमिति यावत् कथयति व्यक्तं ब्रूते धातोरदन्तत्वेनोपधावृद्ध्यप्रवृत्तिः वीरायिताभावे रत्यन्ते स्वेदेन स्त्रीणां कपोलप्रवेशासंभवादिति भावः ॥ १०८ ॥

**कमितुरभिसृत्वरीणां गौराङ्गीणामिहेन्दुगौरीषु।**
**उड्डयमानानामिव रजनीषु परं समीक्ष्यते च्छाया॥ १०९॥**

अपि च

**अधस्तात्सौधानामिह हि चरतामिन्दुकिरणा-**
**न्घनोदश्चच्चञ्चूपुटनिहितनेत्रा युवतयः।**
**चकोराणां ज्योत्स्नारसकुतुपकौतूहलभृता-**
**मुदीक्षन्ते नश्यत्तिमिरविशदाभोगमुदरम्॥ ११०॥**

अपि च

**इह युवतिवदनकान्तिभिराप्यायिततुन्दपरिमृजःशेते।**
**भुक्तापभुक्तहिमरुचिमरीचिरन्तःपुरचकोरः॥ १११॥**

इहैवालकायाः शाखानगरगौरवभाजि त्रिपुरदहनाधिष्ठाने प्रतिष्ठितो भगवान् महाकालनाथः। अयं हि

---

**कमितुरिति**—इहोज्जयिन्यां इन्दुना चन्द्रेण गौरीषु शुभ्रासु रजनीषु रात्रिषु कमितुरभिसृत्वरीणां कान्तमुद्दिश्याभिसारिकाणां कमितुरिति संबन्धसामान्ये षष्ठी गौराङ्गीणां स्त्रीणां उड्डयमानानामुत्पतन्तीनामिव छाया परं समीक्ष्यते दृश्यते। न तु तच्छरीरयष्टिर्विविच्य गृह्यत इत्यर्थः॥ १०९॥

**अधस्तादिति**—इह नगर्यां युवतयः सौधानां चन्द्रशालानां अधस्तादधोभागे इन्दुकिरणांश्चन्द्रिकाः चरतां भक्षयतां ततश्च ज्योत्स्नारसकुतुपस्य चन्द्रिकारूपपारदद्रव्याधारभूतपात्रविशेषस्य 'कुतूः कृत्तेः स्नेहपात्रं सैवाल्पा कुतुपः पुमान्' इत्यमरः। 'कुत्वा डुपच्' कौतूहलभृतां कुतुकमुत्पादयतां चकोराणां नश्यता अदर्शनं गच्छता तिमिरेणान्धकारेण (हेतुना) विशदः प्रकाश आभोगः परिपूर्णता यस्य तादृशं उदरं चञ्चूपुटे निहितनेत्रास्तदेकदृष्टयः सत्य इत्यर्थः उदीक्षन्ते पश्यन्ति हि॥ ११०॥

**इहेति**—इह नगर्यां अन्तःपुरचकोरः युवतीनां वदनकान्तिभिर्मुखज्योत्स्नाभिः आप्यायितस्तर्पितः अत एव तुन्दपरिमृजश्चन्द्रिकापाने आलस्यविशिष्टः सन् 'तुन्दशोकयोः परिमृजापनुदोः' इति कः आलस्यसुखाहरणयोरित्युपसंख्यानादालस्येवृत्तिः, ततश्च भुक्ता पूर्वं भक्षिता अपभुक्ता स्त्रीमुखचन्द्रिकापानानन्तरं छर्दिता च हिमरुचिमरीचिश्चन्द्रिका येन तथाभूतः सन् शेते स्वपिति॥ १११॥

उद्दामभ्रमिवेगविस्तृतजटावल्लीप्रणालीपत-
त्स्वर्गङ्गाजलदण्डिकावलयितं निर्माय तत्पञ्जरम् ।
संभ्राम्यद्भुजदण्डपक्षपटलद्वन्द्वेन हंसायित-
स्त्रैलोक्यव्ययनाटिकानवनटः स्वामी जगत्त्रायताम् ॥ ११२ ॥

**रामः**— ( प्राञ्जलिः । )

नमस्तुभ्यं देवासुरमकुटमाणिक्यकिरण-
प्रणालीसंभेदस्नापितचरणाय स्मरजिते ।
महाकल्पस्वाहाकृतभुवनचक्रेऽपि नयने
निरोद्धुं भूयस्तत्प्रसवमिव कामं हुतवते ॥ ११३ ॥

वेगादगादेव तव त्रिणेत्र युग्मेतरस्मान्नयनात्कृशानुः ।
कामे तु संमोहनशस्त्रहस्ते स्वाहामनुध्याय चिरं जडोऽभूत् ॥ ११४ ॥

---

उद्दामेति— उद्दाम्ना अधिकेन भ्रमिवेगेन भ्रमणवेगेन विस्तृतजटावल्ल्यैव प्रणाल्या जलनिर्गममार्गेण पतता स्वर्गङ्गाजलेनैव दण्डिकया पञ्जरनिर्माणसाधनीभूतकाण्डेन वलयितं वेष्टितं तत्पञ्जरं स्वावासयोग्यं नीडं निर्माय सृष्ट्वा संभ्राम्यतोस्तत्तदभिनयप्रदर्शनार्थं चलतोः भुजदण्डयोरेव पक्षपटलयोः पक्षरूपच्छदिषोः द्वन्द्वेन हंसायितो हंसवदाचरितः त्रैलोक्यस्य व्ययनाटिकायाः संहाररूपनाटकारंभकस्य नवनटः सूत्रधारः स्वामी महाकालेश्वरः जगत् त्रायतां रक्षणस्यापि तदायत्तत्वात्पालयतु ॥ ११२ ॥

नम इति — देवासुराणां मकुटमाणिक्यानां किरीटरत्नानां किरणप्रणालीसंभेदे कान्तिरूपनदीनां संगमे ( प्रणालीशब्दस्य नदीवृत्तिकत्वं लक्षणया ) स्नापितावभिषिक्तौ चरणौ यस्य तस्मै ‘ संभेदः सिन्धुसंगमः ’ इत्यमरः । स्मरजिते कामारये तत्प्रकारमेवाह— महाकल्पे प्रलयावसरे स्वाहाकृतं हुतं भुवनचक्रं यस्मिंस्तादृशेऽपि नयने होमाधिकरणभूतललाटनेत्रे भूयः पुनरपि तस्य भुवनचक्रस्य प्रसवमुत्पत्तिं निरोद्धुं वारयितुमिव कामं हुतवते संसारस्य काममूलत्वात्तदनुच्छित्तौ च संसारानिवृत्तेस्तद्बीजोच्छेदार्थमिव कामं दग्धवत इत्यर्थः तुभ्यं नमः ॥ ११३ ॥

वेगादिति— त्रिणेत्र ‘ पूर्वपदात्संज्ञायाम् ’ इति णत्वम् । तव युग्मेतरस्मान्नयनाल्ललाटनेत्रात् कृशानुरग्निः वेगात्संभ्रमेण अगादेव मन्मथं दग्धुं निर्गतवान् नात्रसंशयः तु अपितु कामे संमोहनशस्त्रहस्ते संमोहनास्त्रमाददाने सति

(सर्वे नमस्यन्ति ।)

**सीता**—(विहस्य ।) अज्जउत्त, तत्तभवदो ससिसेहरस्स कवलिअचउद्दसलोअस्स वि ण पलाइदा किं बुभुक्खा। आर्यपुत्र, तत्र भवतः शशिशेखरस्य कबलितचतुर्दशलोकस्यापि न पलायिता बुभुक्षा । जेण णवणीदं विअ मअणो वि भअवं ललाटहुदवहगासीकिओ। येन नवनीतमिव मदनोऽपि भगवान् ललाटहुतवग्रासीकृतः।

**रामः**— (सविमर्शम् ।) अस्य हि पुरा भगवतः

बाणीभूतपुराणपूरुषधृतिप्रत्याशयाधाविते
विद्रातीक्षणजाशुशुक्षणिकणक्लान्ते शकुन्तेश्वरे ।
नम्रोन्नम्रभुजङ्गपुंगवगुणव्याकृष्टबाणासन-
क्षिप्तास्त्रस्य पुरद्रुहो विजयते संधानसीमाश्रमः ॥ ११९ ॥

(अन्यतो दर्शयन्।) इयं च खलचरीनरेन्द्रसाधारणाग्रमहिषी माहिष्मती नाम चेदिमण्डलमण्डनमाला नगरी । इह हि

आश्लेषचुम्बनरतोत्सवकौतुकादिक्रीडादुरोदरपणप्रतिभूरनङ्गः ।
भोगः स यद्यपि जयं च पराजये च यूनां मनस्तदपि वाञ्छति जेतुमेव ॥

---

स्वाहां स्वपत्नीं चिरं अनुध्याय ग्राम्यधर्मकाम्यया चिन्तयन्सन् जडो मन्मथे प्रवृत्तिशून्योऽभूत् ॥ ११४ ॥

न पलायिता अनुपरता । बुभुक्षा भोक्तुमिच्छा । **बाणीभूतेति**— बाणीभूतस्य पुराणपूरुषस्य विष्णोः धृतिप्रत्याशया धारणेच्छया आधावित आगते शकुन्तेश्वरे गरुडे ईक्षणजेन तृतीयनेत्रोत्थेन आशुशुक्षणेरग्नेः कणेन क्लान्ते तप्ते सति ततश्च विद्राति पलायमाने सति, नम्रेण गरुडागमनभियावाङ्मुखेन उन्नम्रेण तदपगमकुतूहलेन पुनरुद्ग्रीवेण भुजङ्गपुङ्गवेन वासुकिनैव गुणेन ज्यया व्याकृष्टात्कुण्डलितात् बाणासनाद्धनुषः क्षिप्तं प्रेरितं अस्त्रं विष्णुरूपं येन तस्य त्रिपुरद्रुहस्त्रिपुरासुरसंहारिणो महेश्वरस्य सन्धानसीमायां ज्यासंयोजनकार्यनिष्पत्तौ श्रमः गुणस्य नमनोन्नमनकृत आयासः विजयते ॥ ११९ ॥

**आश्लेषेति**— इहास्यां माहिष्मत्यां अनङ्गः कामः आश्लेष आलिङ्गनं चुम्बनं वक्त्रसंयोजनं रतोत्सवः सुरतं कौतुकं भोगकालोचितगानं च आदिर्यस्यास्तस्याः क्रीडाया विहारस्यैव दुरोदरपणस्य द्यूतेष्वक्षाग्लहस्य प्रतिभूर्लग्नको मा-

(विमानवेगनाटितकेन ।)

देव्या भूमेर्मृगमदमयं मण्डनं सिद्धसिन्धोः
सध्रीचीयं जयति यमुना या तटैकाग्रवृत्तीन्।
प्रेमोत्कर्षादिव पितृपतेर्भ्रातुराच्छिद्य हस्ता-
दस्तापायं गमयति पितुर्मण्डलं भास्करस्य ॥ ११७ ॥

**लक्ष्मणः**— (दूरमङ्गुल्या निर्दिशन् ।)

त्रिपुरहरकिरीटक्रीडनैः प्रीणयद्भि-
र्भुवनममृतभानोर्बालमित्रैः पयोभिः ।
सगरसुतचितायाः पावनी तोयराशे-
रियमियमघमग्रे जाह्नवी निह्नुते नः ॥ ११८ ॥

---

व्यस्थ्यक्त्वादित्यर्थः भवतीति शेषः 'कौतुकं नर्मणीच्छायामुत्सवे कुतुके मुदि ।पारम्पर्यागतख्यातौ मङ्गलोद्वाहसूत्रयोः । गीतादौ भोगकाले च' इति हेमचन्द्रः । 'द्यूते दुरोदरम्' 'पणोऽक्षेषु ग्लहः' 'स्युर्लग्नकाः प्रतिभुवः' इति सर्वत्रामरः जये पराजये च आश्लेषणादिष्वात्मन उत्कर्षेऽपकर्षेऽपि भोगः सुखानुभवः यद्यपि सः तादृश एव भवति तदपि तथापि यूनां युवतीनां यूनां च 'पुमान् स्त्रिया' इत्येकशेषः । मनोजात्येकवचनं जेतुमुत्कर्षं प्राप्तुमेव वाञ्छति ॥ ११६ ॥

देव्या इति— देव्या भूमेः मृगमदमयं मण्डनं कस्तूरीरूपालङ्कारभूता सिद्धसिन्धोर्गङ्गायाः सध्रीची सहचरी 'सहस्य सध्रिः' इयं यमुना जयति सर्वोत्कर्षेण वर्तते , या तटैकाग्रवृत्तीन् स्वकुलप्रदेशे नित्यवर्तनस्वभावान् जनान् प्रेमोत्कर्षात्प्रीत्याधिक्यादिव भ्रातुः पितृपतेर्मृत्योः हस्तादाच्छिद्य बलादपहृत्य पितुर्भास्करस्य मण्डलं गमयति प्रापयति । यमुनातीरवासिनः सूर्यद्वारा ब्रह्मलोकं यान्ति न तु मृत्युवशगा भवन्तीत्यर्थः ॥ ११७ ॥

त्रिपुरेति— त्रिपुरहरस्य रुद्रस्य किरीटे क्रीडनं विहारो येषां तैः भुवनं जगत् प्रीणयद्भिरैहिकामुष्मिकसुखदानेन तर्पयद्भिः अमृतभानोश्चन्द्रस्य बालमित्रैः बाल्यस्निग्धैः तद्वच्छुभ्रैराह्लादनैश्चेत्यर्थः पयोभिर्जलैः सगरसुतानां कपिलतेजसा भस्मीभूतानां सगरपुत्राणां चितायाः मृतार्थकाष्ठस्य पावनी पूतत्वकारिणी तान् स्वर्गं प्रापयन्तीत्यर्थः । बाहुलकात्कर्तरि ल्युट् । तोयराशेरियमियं समुद्रस्यात्यन्तसंबन्धिनी महिषीत्यर्थः । आभीक्ष्ण्ये द्विरुक्तिः । जाह्नवी गङ्गा अग्रे नः अघं पापं निह्नुतेऽपलपति दर्शनमात्रेण व्यपोहयतीत्यर्थः ॥ ११८ ॥

**रामः**— ( सहर्षम् । )

**गौरीविभज्यमानार्धसंकीर्णे हरमूर्धनि ।**
**अम्ब द्विगुणगम्भीरे भागीरथि नमोऽस्तु ते ॥ ११९ ॥**

( सीतां प्रति । ) वन्दस्व देवि,

**देवस्याम्बुजसंभवस्य भवनादम्भोधिमागामुका**
**सेयं मौलिविभूषणं भगवतो भर्गस्य भागीरथी ।**
**उद्यातानपहाय विग्रहमिह स्रोतःप्रतीपानपि**
**स्रोतस्तीव्रतरत्वरा गमयति द्राग्ब्रह्मलोकं जनान् ॥ १२० ॥**

**सीता**— ( कृताञ्जलिः । ) देवि, णिअसोत्तसिङ्खलासंदाणिअत्तिहुवणे मन्दाइणि वन्दीअसि । देवि, निजस्रोतःशृङ्खलासंदानितत्रिभुवने मन्दाकिनि वन्द्यसे ।

( सर्वे नमस्यन्ति । )

**लक्ष्मणः** — ( अन्यतो दर्शयन् । )

**धनाधिनाथप्रणयानुरोधादभग्नकैलासनिकेतनस्य ।**
**देवस्य कल्पान्तकपालपाणेर्वाराणसी नाम पुरी पुरस्तात् । १२१ ।**

---

**गौरीति**—गौर्या विभज्यमानेन विभागं नीयमानेन अर्धेन वामभागेन संकीर्णे संघटिते हरमूर्धनि द्विगुणं आवृत्तिद्वयेन गम्भीरे ! अगाधे ! अम्ब ! भागीरथि ! ते तुभ्यं नमोऽस्तु । हरमूर्ध्नः वामभागस्य स्त्रैणत्वेन जटिलत्वाभावाद्दक्षिणभागमात्रवृत्तिसंकोचेन गङ्गाया गांभीर्यद्वैगुण्यमिति भावः ॥ ११९ ॥

**देवस्येति**—देवस्याम्बुजसंभवस्य ब्रह्मणो भवनाद्गृहात् अम्भोधिं समुद्रं आगामुका आगमनशीला 'लषपत' इत्यादिना उकञ् । भगवतो भर्गस्य परमेश्वरस्य मौलिविभूषणं शिरोऽलंकारभूता सेयं भागीरथी इह जले विग्रहं शरीरं अपहाय त्यक्त्वा उद्यातानूर्ध्वगमनाय प्रवृत्तान् अत एव स्रोतसोऽधोगामिनः प्रवाहस्य प्रतीपान् प्रतियायिनः प्रतिस्रोतोगामिन इत्यर्थः जनान् स्रोतसा प्रवाहेण तीव्रतरोत्कटा त्वरा वेगो यस्यास्तथाभूतापि द्राग्देहत्यागोत्तरकालमेव ब्रह्मलोकं गमयति प्रापयति अतीव वेगवत्वाद्गङ्गाया तत्र पतितानामधः प्रापणे न्याय्येऽप्यूर्ध्वदेशप्रापणाद्विरोधाभासः, यद्वा स्रोतसा गत्या प्रतीपान् विपरीतान् तिर्यग्जन्तूनपीत्यर्थः किमुत सज्जनान् ब्रह्मलोकं गमयतीति वक्तव्यमिति कैमुत्यार्थः ॥ १२० ॥

सन्दानितं बद्धं । **धनेति**— धनादिनाथस्य कुबेरस्य प्रणयानुरोधात्प्रीत्य

**रामः** — ( सहर्षमवलोक्य । )

**प्लवमानैरपारोऽयं जनैः संसारसागरः ।**
**द्वीपे वाराणसीनाम्नि विश्रान्तैरिह तीर्यते ॥ १२२ ॥**

अपि चैनां नित्यमध्यास्ते भगवान् भीमेश्वरः

**कण्ठच्छायनिपीतपन्नगफणारत्नौघमात्रस्थितौ**
**हारे निर्भयपार्वतीभुजलताबन्धोल्लसत्कन्धरः ।**
**तत्सर्वाङ्गविरामवामनतरैरेकस्वरैः सामगं**
**बिभ्रद्ब्रह्मशिरः शिवाय जगतामेणाङ्कचूडामणिः ॥ १२३ ॥**

( अन्यतो दर्शयन् । सीतां प्रति । ) देवि, दृश्यतामितः ।

**नवोन्मीलन्मौर्वीकिणनिकरकार्कश्यसदयं**
**प्रवृत्ते मत्पाणौ किमपि निबिडं पीडयति ते ।**

---

नुसरणाद्धेतोः अभग्नमविच्छिन्नं कैलासे निकेतनं वासो यस्य तस्य देवस्य कल्पान्ते कपालपाणेः कपालेन नृत्यतो महेश्वरस्य पुरी वाराणसी नामेति प्रसिद्धौ पुरस्तादग्रे दृश्यत इति शेषः ॥ १२१ ॥

**प्लवमानैरिति**— अपारो जननमरणप्रबन्धस्य समाप्त्यदर्शनाददृष्टोत्तरतीरोऽयं संसार एव सागरः समुद्रः प्लवमानैस्तस्मिन् सागरे गच्छद्भिः 'प्लुङ् गतौ' विश्रान्तैरतएव विशेषेण खिन्नैः, यद्वा श्रमपरिहारकामैः जनैः वाराणसीनाम्नीह द्वीपे तीर्यते तरणं क्रियते वाराणस्या मुक्तिक्षेत्रत्वं त्वतिप्रसिद्धमेव ॥ १२२ ॥

**कण्ठेति**— हारे हारभूते सर्पे कण्ठस्य च्छाया कण्ठच्छायं 'विभाषा सेनासुरा' इत्यादिना च्छायाशब्दस्य क्लीबत्वम् । तेन निपीतस्याच्छादितस्य पन्नगस्य सर्पस्य फणारत्नौघमात्रस्य शिरोरत्नसमूहस्यैव स्थितिः स्फूर्तिर्यस्मिंस्तादृशे सति निर्भयायाः पार्वत्याः भुजलताबन्धेन उल्लसन्ती दीप्यमाना कंधरा ग्रीवा यस्य तथाभूतः तेषां स्वराणां सर्वाङ्गाणां विरामेणाभावेन वामनतरैरतीव ह्रस्वैः एकैर्ह्रस्वमात्रैरेव स्वरैः सामगं सामगानं कुर्वत् 'आतोऽनुपसर्गेकः' ब्रह्मणः शिरो बिभ्रद्दधानः एणाङ्कचूडामणिश्चन्द्रशेखरः भगवान् जगतां शिवाय क्षेमाय एनां वाराणसीं नित्यमध्यास्तेऽधिवसति ॥ १२३ ॥

**नवेति**— यत्र पुर्यां नवं यथा तथा उन्मीलत उद्भवतः मौर्वीकिणनिकरस्य ज्याकर्षणोत्थव्रणचिन्हसमूहस्य कार्कश्येन काठिन्येन सदयं यथा तथा प्रवृत्ते

कृतार्थो यत्रायं समजनि करः सैव पुरतः
पुरी पूर्वेषां ते नयनमियमानन्दयति नः ॥ १२४ ॥

**सीता**— (सस्मितानुरागं साचीकृताक्षी रामं पश्यति । पुरीं प्रति ।) अम्ब मिहिले, वन्दीअसि गुरुअणे वन्दणं मे विण्णवेहि । अम्ब मिथिले, वन्द्यसे गुरुजने वन्दनं मे विज्ञापय ।

**रामः**— (सुग्रीवविभीषणौ प्रति ।) वयस्यौ इयं सा जानकी प्रजायमानाया भगवत्या भूमेररिष्टमन्दिरं मिथिला नाम नगरी ।

**सुग्रीवविभीषणौ**— (सानुरागम् ।) अत्र भगवतः पार्वतीदयितस्य धनुरन्तेवासिनावजगवभार्गवौ भञ्जतो भवतः सहपांसुक्रीडादीर्घसखीयं वीरलक्ष्मीः ।

**रामः**— (सलज्जास्मितमन्यतो दर्शयन् ।) इयं पुरस्ताच्छम्पानाम गौडानां विनयमयरशृङ्गारविभ्रमरमणीया मकरकेतुकुमारव्रतचर्यातपोवनमिव राजधानी । (सीतामपवार्य ।) इह हि—

रोमाञ्चोच्छ्वसदङ्गसंधिनिबिडैरालिङ्गनैर्यामिनीं
शेषीकृत्य विवृण्वते निजरहश्चातुर्यमेणीदृशः ।
यष्टिस्थे सपदि प्रदीपमुकुले दग्ध्वा दशामल्पिकां
तैलेषु ज्वलति स्तृणाति वसुधां यन्नाभिदघ्नं तमः ॥ १२५ ॥

---

त्वत्पाणिग्रहणोद्यते मम पाणौ दक्षिणहस्ते किमपि प्रेम्णातितरां निबिडं यथा तथा पीडयति गृह्णति सति अयं ते करः कृतार्थः समजनि पाणिग्रहणोत्सवलाभेन कृतकृत्योऽभूत् सैवेयं पुरतोऽग्रे ते पूर्वेषां पुरी मिथिला नः नयनं नेत्रं आनन्दयत्याह्लादयति ॥ १२४ ॥

साचीकृताक्षी वक्रदृष्टिः सती अरिष्टमन्दिरं सूतिकागृहम् । **रोमाञ्चेति**— इह शम्पापुर्यां एणीदृशः स्त्रियः रोमाञ्चेन रोमोद्गमेन उच्छ्वसद्भिर्जृम्भमाणैः अङ्गसन्धिभिः निबिडानि निर्भराणि तैः आलिङ्गनैः यामिनीं रात्रिं शेषीकृत्य व्यपोह्येत्यर्थः ततश्च निजरहश्चातुर्यं सौरतपाण्डित्यं विवृण्वते प्रकटयन्ति यद्यतः यष्टिस्थे स्तम्भप्रतिष्ठिते प्रदीपमुकुले मुकुलाकारे दीपे सपदि तत्क्षणमेव अल्पिकामत्यल्पां दशां वर्तिं 'दशावस्थादीपवर्त्योर्वस्त्रान्ते भूम्नियोषिति ।' इति मेदिनी । दग्ध्वा तैलेषु ज्वलति दीप्यमाने सति तमो नाभिदघ्नं नाभिप्रमाणं यत् 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' । वसुधां भुवं स्तृणोत्याच्छादयति प्वादित्वाद्ध्रस्वः । केलीगृ-

**लक्ष्मणः**— ( अन्यतो दर्शयन् ।)एते भगवत्यौ भूमिदेवानां मूलायतनमन्तर्वेदीं पूर्वेण कृष्णागरुमलयजमयमङ्गरागमन्योन्यस्य कुर्वाणे कलिन्दकन्यामन्दाकिन्यौ संगच्छेते

**हिमालयोत्सङ्गचिराधिवासतो जडेव पाण्डुः प्रतिभाति जाह्नवी ।**
**निदाघभानोः पितुरङ्कलालनात्कृतेव काली यमुनापि दृश्यते ॥ १२६**

विभाव्य च

**बलिद्विषः पादनखांशुराजिभिः स्मरारिमौलीन्दुमरीचिवीचिभिः ।**
**हिमाद्रिनिःस्यन्दरसैः पदे पदे विवर्धते वैबुधसैन्धवी रुचिः १२७**

अपि च

**प्रयागः सर्वतीर्थेभ्यस्तीर्थमुच्चैस्तरामयम् ।**
**संसारस्य परं पारमिहस्थैरवलोक्यते ॥ १२८ ॥**

---

हेषु दीपानां सर्वरात्रज्वलनात्प्रातस्तैलेन वर्त्तिदहनमधोभागे तमोव्याप्तिश्च भवति तेन चानुमीयते स्त्रीणां रतिनैरन्तर्यं यत्रच गाढालिङ्गनेनेतरेषां रतिविलासानां वैदग्ध्यं चानुमितं भवत्येवंविधेयं पूरिति भावः ॥ १२५ ॥

भूमिदेवानां ब्राह्मणानां मूलायतनमावासास्पदभूतं अन्तर्वेदीं देशविशेषं पूर्वेण पूर्वदिग्भागे 'एनपा द्वितीया ' संगच्छेते संगते भवतः 'समो गम्यृच्छिभ्याम् ' इति तङ् । हिमेति— जाह्नवी गङ्गा हिमालयस्य उत्सङ्गेऽङ्के चिरं अधिवासतो निवासाद्धेतोः जडा शैत्यं नीतेव पाण्डुः पाण्डुरवर्णा प्रतिभाति । यमुनापि पितुर्निदाघभानोः सूर्यस्य अङ्के लालनादुपचरणाद्धेतोः काली कृष्णवर्णा कृतेव दृश्यते उभयत्रोत्प्रेक्षा ॥ १२६ ॥

**बलिद्विष इति**— वैबुधसैन्धवी विबुधसिन्धोर्गङ्गायाः संबन्धिनी 'हृद्भगणसिन्ध्वन्ते पूर्वपदस्य च' इत्युभयपदवृद्धिः । रुचिर्दीप्तिः बलिद्विषः त्रिविक्रमस्य विष्णोः पादनखानामंशुराजिभिः किरणपरंपराभिः स्मरारेःपरमेश्वरस्य मौलीन्दोः किरिटस्थचन्द्रस्य मरीचिवीचिभिः कान्तिसमूहैः तथा हिमाद्रेः निःस्यन्दरसैः हिमैश्चेत्यर्थः पदे पदे प्रतिक्षणं विवर्धतेऽधिकतरं भवति ॥ १२७ ॥

**प्रयाग इति**— अयं प्रयागो गङ्गायमुनासङ्गमध्यप्रदेशः सर्वेषां तीर्थानां पुष्करादीनामृषिजुष्टजलानां उच्चैस्तरामुत्कृष्टं तीर्थं 'गङ्गायमुनयोर्मध्ये ये वसान्ति ते वै प्रसन्नात्मानः' इत्यादिश्रुत्या तन्माहात्म्यस्य श्रुतिप्रसिद्धत्वादिति भावः । इहस्थैः प्रयागक्षेत्रवासिभिः संसारस्य परं पारमुत्तरतीरमवधिरिति यावत् अवलोक्यते इहस्था मुच्यन्त इत्यर्थः ॥ १२८ ॥

**सत्यमेव प्रयागोऽयं मोक्षद्वारमुदीर्यते ।**
**देव्यौ यत्राभितो गङ्गायमुने वहतः श्रियम् ॥ १२९ ॥**

( सीतां प्रति । ) प्रणम्यतामितः ।

**श्यामो नाम वटः सोऽयमेतस्याद्भुतकर्मणः ।**
**छायामप्यधिवास्तव्यैः परं ज्योतिर्निषेव्यते ॥ १३० ॥**

( सर्वे नमस्यन्ति । )

**रामः**— ( विमानवेगनाटितकेन । सहर्षम् । )

**यूपाङ्कुरप्रकरदन्तुरतीरलेखासंख्यायमानमनुसंततिसप्ततन्तुः ।**
**इक्ष्वाकुराजमहिषीपदपट्टलक्ष्मीर्देव्या भुवो भगवती सरयूरियं नः ॥**

इयं भगवत्ययोध्या

**गगनगतास्मदुदीक्षणकुतूहलोत्तानपृथुलनिष्पन्दैः ।**
**उन्नालस्थलकुवलयवनमिव जनलोचनैः क्रियते ॥ १३२ ॥**

( सर्वे प्रणमन्ति । )

**सुग्रीवविभीषणौ** —( निर्वर्ण्य । )

---

**सत्यमिति**— 'सितासिते सरितो यत्र संगते' इत्यादि श्रुत्या तस्य मोक्षद्वारत्वं प्रसिद्धं स्पष्टमन्यत् ॥ १२९ ॥

**श्याम इति**— सोऽयं श्यामो नाम श्याम इति प्रसिद्धो वटः अद्भुतकर्मण एतस्य श्यामवटस्य छायामपि अधिवास्तव्यैरध्यासीनैः पुरुषैः 'वसेस्तव्यत्कर्तरि णिच्च' परं ज्योतिर्निषेव्यते ब्रह्मप्राप्यत इत्यर्थः छायाप्राप्तस्य ज्योतिर्निषेवणमिति विरोधाभासः ॥ १३० ॥

**यूपेति**—यूपाङ्कुराणां वैदिकानां पशुबन्धनस्तम्भोद्भेदानां प्रकरेण समूहेन दन्तुरया निम्नोन्नतया तीरलेखया संख्यायमाना गण्यमानः मनुसन्ततीनां मनुवंश्यानां राज्ञां सप्ततन्तुर्मखो यस्याः सा देव्याः कृताभिषेकायाः भुवः इक्ष्वाकुराजानां महिषीपदे महिषीस्थाने पट्टलक्ष्मीः पट्टबन्धनश्रीभूता भगवती पूज्या नः इयं सरयूर्नदीविशेषः दृश्यत इति शेषः ॥ १३१ ॥

**गगनेति**—गगनगतानामाकाशवर्तिनां अस्माकं उदीक्षणकुतूहलेन ऊर्ध्वमुखदर्शनकौतुकेन उत्तानैरुत्पुच्छैः पृथुलैः विस्तीर्णैः निष्पन्दैर्निश्चलैश्च जनानां लोचनैः उन्नालानामुद्गतकाण्डानां स्थलकुवलयानां स्थलजातेन्दीवराणां वनमिव क्रियते ॥ १३२ ॥

वृन्तैरिव क्रतुसहस्रभुवां फलानामालोक्य यूपनिकरैर्मधुरामयोध्याम् ।
राज्ञामिह प्रभवतां च विचिन्त्य सिद्धिं देवः शचीसहचरोऽपि न रोचते नः

**रामः**—( तौ प्रति । ) वयस्यौ,

तादृशाः प्रागजायन्त राजानो यदिहान्वये ।
तद्वसिष्ठचरोरैन्द्राबार्हस्पत्यस्य वैभवम् ॥ १३४ ॥

( पुरोऽवलोक्य । सहर्षम् । ) कथं स एवायं भगवानुपकल्पितास्मदभिषेकसंभारो भरतशत्रुघ्नाभ्यां सह वसिष्ठो मां प्रतीक्षमाणस्तिष्ठति । ( पुष्पकं प्रति । ) विमानराज, अवतीर्यतां ककुत्स्थकुलोपकार्यायाम् । ( सर्वे विमानावतरणं नाटयन्ति । )

( ततः प्रविशति पटाक्षेपेण वसिष्ठो भरतशत्रुघ्नौ च । )

**वसिष्ठः**— वत्सौ,

चक्रे लङ्केश्वरपरिभवच्छेदनिष्णातदोष्णा
यद्ध्वंसेन त्रिजगदरुजं तन्न चित्रीयते नः ।
बालेनाजौ विगलितव्रतो वीर्यनिर्यासराशे-
र्यत्पिण्याकः स मुनिरमुना निर्मितो जामदग्न्यः । १३५ ॥

---

वृन्तैरिति — क्रतुसहस्रभुवामनेकयागजन्यानां फलानां वृन्तैः प्रसवबन्धनैरिव स्थितैः यूपानां निकरैः समूहैः मधुरां रम्यां अयोध्यां आलोक्य इहायोध्यायां प्रभवतामुत्पद्यमानानां राज्ञां सिद्धिं च विचिन्त्य देवः शचीसहचर इन्द्रोऽपि नः आवाभ्यां 'अस्मदो द्वयोश्च' इति द्वित्वे बहुत्वं 'रुच्यर्थानां' इति चतुर्थी च । न रोचते प्रीतिभाजनं न भवति ॥ १३३ ॥

वसिष्ठप्रवेशसूचनार्थमाह तादृशाइति— इहान्वयेऽस्मिन्वंशे तादृशा राजानः प्रागजायन्त जाताः इति यत्तत् ऐन्द्राबार्हस्पत्यस्येन्द्रबृहस्पतिदेवताकस्य वसिष्ठचरोः वैभवं माहात्म्यम् । इन्द्रश्च बृहस्पतिश्चेन्द्राबृहस्पती 'देवताद्वन्द्वे च' इत्यानङ् । तौ देवता अस्य ऐन्द्राबार्हस्पत्यः 'पत्युत्तरपदाण्ण्यः' 'देवताद्वन्द्वे च' इत्युभयपदवृद्धिः । 'यं कामयेत राजन्यमनपोद्ध्यो जायेत वृत्रान् घ्नंश्चरेदिति तस्माएतमैन्द्राबार्हस्पत्यं चरुं निर्वपेत्' इति श्रुतिश्चात्र भवति ॥ १३४ ॥

उपकार्या राजगृहानुकल्पगृहम् । चक्रइति— वत्सौ ! हे भरतशत्रुघ्नौ । लङ्केश्वरस्य रावणस्य परिभवे शूर्पणखावैरूप्यादिद्वारकावमानने च्छेदे संहारे च निष्णातौ कुशलौ दोषौ बाहू यस्य तेन 'निनदीभ्यां स्नातेः कौशले' इति षत्वम्

( राममवलोक्य। सहर्षम्। )

भल्लावलूनदशकंधरकण्ठपीठसीमासमाप्तभुजविक्रमकर्मकाण्डः।

दिष्ट्या जगद्विजयमाङ्गलिकैर्यशोभिः सोऽयं पुनर्नयनवर्त्मनि रामभद्रः॥

रामः— ( ससंभ्रममुपसृत्य वसिष्ठस्य पादावुपगृह्य। )

रघुब्रह्मक्रियाचार्यं पुराणब्रह्मवादिनम्।

ब्रह्मर्षिं ब्रह्मजन्मानमेष रामोऽभिवादये॥ १३७॥

वसिष्ठः— ( राममालिङ्ग्य। ) वत्स रामभद्र, का तुभ्यमाशीः।

आधाय प्रतिपक्षकीर्तिनिवहं ब्रह्माण्डमूषान्तरे

निर्विघ्नं धमता नितान्तमुदितैः स्वैरेव तेजोऽग्निभिः।

तत्तादृक्पुटपाकशोधितमिव प्राप्तं गुणोत्कर्षिणा

पिण्डस्थं च महत्तरं च भवता निःक्षारतारं यशः॥ १३८॥

---

वत्सेन रामेण कर्त्रा त्रिजगत् कर्म अरुजं नीरोगं चक्रे कृतं इति यत्तत् नोऽस्मान् न चित्रीयते न विस्मापयते 'नमोवरिवश्चित्रङः क्यच्' । तर्हि किं चित्रियते तदाह बालेनामुना रामेण आजौ युद्धे जामदग्न्यः विगलितवतः स्यन्दितवतः वीर्यनिर्यासराशेर्बलसारसमूहस्य पिण्याको निर्मितस्तिलकल्कः कृतः दुर्बलीकृत इत्यर्थः इति यत्तदेवास्मांश्चित्रीयत इति भावः॥ १३९॥

भल्लेति—रामभद्रः भल्लैरस्त्रविशेषैः अवलूनानां छिन्नानां दशकंधरकण्ठपीठानां सीमयावधिना समाप्तः कृतावभृथ इत्यर्थः भुजयोः विक्रमकर्मकाण्डः विक्रमणरूपाक्रियाकलापो येन तथाभूतः सन् जगतो विजयमाङ्गलिकैरभ्युदयाय प्रभवद्भिः यशोभिः सह दिष्ट्या पुनर्नयनवर्त्मनि नेत्रपथे वृत्त इति शेषः दृष्ट इत्यर्थः॥ १३६॥

रघ्विति—रघूणां ब्रह्मक्रियाचार्यमुपनयनादिसंस्कारकर्तारं पुराणब्रह्मवदिनं सनातनस्य परमात्मवस्तुनो वदनशीलं ब्रह्मर्षिं ब्रह्मणः परमेष्ठिनो जन्म यस्य तथाभूतं एष रामोऽभिवादये॥ १३७॥

आधायेति— प्रतिपक्षाणां शत्रूणां कीर्तिनिवहं यशस्तोमं ब्रह्माण्डस्यैव मूषायास्तैजसावर्तन्या अन्तरे मध्ये आधाय न्यस्य नितान्तमतितरां उदितैर्ज्वलितैः स्वैरेव ( नत्वन्यदीयैः ) तेजोऽग्निभिः प्रतापाग्निभिः निर्विघ्नं यथा तथा धमता अग्निसंयोजनं कुर्वता 'ध्माशब्दाग्निसंयोगयोः' इति धातोः 'पाघ्रा' इत्यादिना धमा-

किं च

त्रिजगदङ्गणलङ्घनजाङ्घिकैस्तव यशोभिरतीव पवित्रिताः ।
प्रथमपार्थिवपुंगवकीर्तयो विबुधसिन्धुजलैरिव सिन्धवः ॥ १३९ ॥

जगदालोकधौरेयौ सूर्याचन्द्रमसाविव ।
पुत्रौ गोत्रस्य गोप्तारौ जनय स्वभुजाविव ॥ १४० ॥

( सीता मुनिं वन्दते )

**वसिष्ठः**—जनकवंशसुवासिनि वत्से, युवयोः साधारणीमाशिषमवोचाम ।

**सीता**— ( सहर्षम् । )अहो णिस्सावत्तअं मे अज्जउत्तस्स घरिणित्तणं भविस्सइ । अहो निःसापत्न्यकं मे आर्यपुत्रस्य गृहिणीत्वं भविष्यति ।

**लक्ष्मणः**—सगरगोत्रगुरो मैत्रावरुणे, सौमित्रिराभिवादयते ।

**वसिष्ठः**—वत्स लक्ष्मण, आशिषां विषयमतिक्रम्य वर्तसे ।

वीरमिन्द्रजितं जित्वा दिष्ट्या वर्धयतो जगत् ।
अभवद्रक्षणीयस्ते गीर्वाणग्रामणीरपि ॥ १४१ ॥

---

देशः । गुणोत्कर्षिणा भवता तत्तादृशा पुटपाकेनाग्निसंस्कारेण शोधितं शुद्धिं प्रापितमिव स्थितं अत एव पिण्डस्थमेकीभूतं महत्तरमतिबृहच्च निःक्षारं श्यामिकावर्जितं तारं शुभ्रं च यशः प्राप्तमतोऽन्या का तवाशीरिति भावः ॥ १३८ ॥

त्रिजगादिति— त्रिजगदङ्गणस्य लङ्घनेऽतिक्रमणे जाङ्घिकैर्जङ्घाकरिकैर्व्यापकैरित्यर्थः । तव यशोभिः प्रथमपार्थिवपुंगवानां पूर्वेषां राजन्यश्रेष्ठानां कीर्तयः विबुधसिन्धुजलैर्गङ्गाजलैः सिन्धवोन्या नद्य इव समुद्रा इव वा अतीव पवित्रिताः । अद्भुतार्थसंप्राप्तिकथनादुपगूहनं नाम निर्वहणसंध्यङ्गमुक्तं 'तद्भवेदुपगूहनम् । यत्स्यादद्भुतसंप्राप्तिः' इति तल्लक्षणात् ॥ १३९ ॥

जगदिति —सूर्याचन्द्रमसाविव 'देवताद्वन्द्वे च' इत्यानङ् । जगत आलोकधौरेयौ प्रकाशकावित्यर्थः 'धुरो यड्ढकौ' स्वभुजौ तव बाहू इव गोत्रस्य कुलस्य गोप्तारौ रक्षकौ पुत्रौ जनयोत्पादय ॥ १४० ॥

सुवासिनि चिरण्टि यौवनप्राप्त्यनन्तरं पितृगृहवासशीला पिनाकभङ्गपर्यन्तं तथा संभवात् । साधारणीं तुल्यां । वीरमिति—गीर्वाणग्रामणीरिन्द्रः सुगममन्यत् ॥

तथापि यूयं सर्वेऽपि द्वौ द्वौ जनयतात्मजौ ।
यैरादिराजवंशोऽयमष्टशाखः प्ररोक्ष्यति ॥ १४२ ॥

**रामः**— (सहर्षम् कृताञ्जलिः ।) भगवन्, अनुगृहीतमिक्ष्वाकुकुलम् ।

**भरतः**— (रामं प्रति ।) आर्य, शून्यभवनप्रतिष्ठैकरक्षापदातिर्भरतः प्रणमति ।

**रामः** (सहर्षमालिङ्ग्य ।) वत्स भरत,

आत्मानमिन्दुकरमेदुरचन्द्रकान्तस्तम्भोज्ज्वलं वितर मे हृदि निर्वृणोमि ।
न भ्रातृसंगमसुखासिकया जहाति विष्णोः सकौस्तुभमुरश्चपलापि लक्ष्मीः

( भरतः सीतां प्रणमति )

**सीता**— वच्छ भरद, उण्णकराकिरणणिउरुम्बचुम्बिअं कमलं विअ विआसं दध । वत्स भरत, उष्णकराकिरणनिकुरुम्बचुम्बितं कमलमिव विकासं धेहि ।

( लक्ष्मणो भरतं नमति । )

**भरतः**— वत्स लक्ष्मण सोत्कण्ठं चिरात्परिरभस्व माम् ।
श्रद्धालुर्भ्रातुरङ्गेषु चन्दनेष्वप्यरोचकी ॥ १४४ ॥

( निर्भर च परिरभ्य )हन्त रघुवंशयशस्तडाकयूपदण्डेन लक्ष्मणबाहुना परिरभ्यमाणश्रिरेण शीतलीकृतोऽस्मि ।

इन्दोः कलाकलापेन पर्वक्रमनिवेशिना
सर्वदुःखापनोदाय सोदराणां भुजाः कृताः ॥ १४५ ॥

---

तथापीति— अष्टशाखोऽष्टप्रकारकः स्पष्टमन्यत । अनेनानन्दो नाम निर्वहणसंध्यङ्गमुक्तं 'आनन्दो वाञ्छितागमः' इति तल्लक्षणात् ॥ १४२ ॥

शून्यभवनस्य जनराहितगृहस्य प्रतिष्ठैकरक्षापदातिः स्थितिमात्रपालने नियुक्तः पादचरः । आत्मानमिति— इन्दुकरैश्चन्द्रकिरणैर्मेदुरो द्रवीभवन् चन्द्रकान्तस्तम्भ इव उज्ज्वलं दीप्यमानं आत्मानं त्वच्छरीरं मे हृदि मम वक्षसि वितर आलिङ्गेत्यर्थः निर्वृणोमि तेन निर्वृतो भवामि तत्रोपपत्तिमाह—लक्ष्मीः श्रीः चपला स्वयमस्थिरस्वभावापि भ्रातृसंगमस्य सुखासिकया सुखावस्थानेन हेतुना सकौस्तुभं विष्णोरुरो वक्षः न जहाति न मुञ्चति अतो निर्वृणोमीति भावः । इत आरभ्य समयो नाम निर्वहणसंध्यङ्गमुक्तं 'समयो दुःखनिर्याणम्' इति तल्लक्षणात्

वत्सेति— अरोचक्यरुचिमान् । स्पष्टमन्यत् ॥ १४४ ॥

इन्दोरिति —पर्वसु संधिषु क्रमं निवेशिना प्रविशता इन्दोश्चन्द्रस्य क-

**शत्रुघ्नः**— आर्य, पादुकाभृत्यानुभृत्यः प्रणमति ।

**रामः** — (गाढमालिङ्ग्य ।) कथमावृत्त्या लक्ष्मणमनुभवामि ।

(अपवार्य । सीतायै दर्शयन् ।)

**एतत्तदेव मुखमक्षतचन्द्रबिम्बसंवावदूकमवलोकय लक्ष्मणस्य ।**
**गीर्वाणवारणकरार्गलकर्कशौ मां तावेव लक्ष्मणभुजौ नु परिष्वजेते १४६**

(शत्रुघ्नः सीतां प्रणमति ।)

**सीता**— वच्छ, सत्तलोअसङ्कुद्धरणगोरवड्ढिएहिं चरिदेहिं वि लक्खणसारिसो होहि । वच्छ सत्तुक्खण, अज्जजणो कहिं । वत्स, सप्तलोकशङ्कूद्धरणगौरववर्द्धिश्चरितैरपि लक्ष्मणसदृशो भव । वत्स शत्रुघ्न, आर्यजनः कुत्र ।

**शत्रुघ्नः** —कृतमङ्गलोपचारा मध्यमाम्बा भवतीं प्रतीक्षते ।

(उपसृत्य लक्ष्मणं प्रणमति ।)

**लक्ष्मणः** —(सहर्षमालिङ्ग्य ।) दिष्ट्या दीर्घायुषि त्वयि दीप्यमाने वयमेकाकिनं भरतं परित्यज्य गताः ।

**रामः** — (मुनिं प्रति ।) एतौ लङ्काकिष्किन्धयोरधिपती विभीषणसुग्रीवौ भगवन्तं प्रणमतः ।

**वसिष्ठः** — विकर्तनकुलकीर्तिमालातोरणस्तम्भाविमौ भूयास्ताम् ।

**रामः**— (भरतं प्रति ।) वन्दस्व महात्मानावेतौ पौलस्त्यसावित्रौ ।

(भरतशत्रुघ्नौ विभीषणसुग्रीवौ च यथोचितमाचरतः ।)

**वसिष्ठः**—(सहर्षम् ।) दिष्ट्या चतुर्दशभिः परिवत्सरैः पुनःसमुदयमानं दशरथकुटुम्बमीक्षामहे । (सविमर्शस्मितम्)

---

लानां कलापेन समूहेन (करणेन) सोदराणां चतुर्णामप्यस्माकं भुजाः सर्वदुःखस्य अपनोदाय व्यपोहनार्थं कृता निर्मिताः एकैकोऽपि भुजः कलाद्वयघटित इत्यर्थः । एवं चालिङ्गनममृतासारवदाप्यायतीति भावः ॥ १४५ ॥

पादुकाभृत्यस्य भरतस्य अनुभृत्योऽनुचरः । आवृत्त्या आवर्त्तनेन पुनरपीत्यर्थः । **एतदिति**— अक्षतस्यान्यूनस्य चन्द्रबिम्बस्य सवावदूकं संवदनशीलं सदृशमित्यर्थः कुर्वादिगणे 'वावदूक' इति पाठात्साधुः । एतच्छत्रुघ्नमुखं लक्ष्मणस्य तन्मुखमेव ततो न भिद्यत इत्यर्थः अवलोकय, गीर्वाणवारणस्यैरावतस्य करार्गलस्तदर्गलसदृशहस्तवत् कर्कशौ दृढौ तौ लक्ष्मणभुजावेव न ततोभिन्नावित्यर्थः मां परिष्वजेते आलिङ्गतः नुर्वितर्के ॥ १४६ ॥

जेतारं दशकंधरस्य जितवानेवार्जुनं भार्गव-
स्तं रामो यदि काकपक्षकधरस्तत्पूरितेयं कथा ।
ऊर्ध्वं कल्पयतस्तु बालचरितात्तत्क्रियागौरवा-
दन्येयं कविताकथापि जगतस्तोषाय वर्तिष्यते ॥ १४७ ॥

( रामं प्रति ) वत्स, माङ्गलिकलग्नमतिक्रामाति ।

तादिदं रघुसिंहानां सिंहासनमलंकुरु ।
राजन्वन्तः प्रतन्वन्तु मुदमुत्तरकोसलाः ॥ १४८ ॥

( रामस्तथा करोति । वसिष्ठो मन्त्रपूताभिरद्भिरभिषिञ्चति, अन्ये तूष्णीमभिषिञ्चन्ति, अन्ये तूष्णीम-वचमभिषेकं नाटयित्वा पञ्चाङ्गचुम्बितभूमयः प्रणमन्ति । )

( नेपथ्ये मङ्गलगीतं नान्दीवाद्यादीनि च । )

**वसिष्ठः** ( सहर्षम् । ) वत्स रामभद्र, संप्रति हि ।

उदयदुदयच्छर्मस्कन्धे धुरं त्वयि बिभ्रति
क नु परिभवौ दृष्टादृष्टौ प्रजाः परिचिन्वते ।
अपि खलु यथा जीवात्मानः प्रभोः परमात्मनो
दिशि दिशि दिशामष्टौ नाथास्तथैव विभीषिकाः ॥ १४९ ॥

---

आर्यजनः श्वश्रूवर्गः । समुदयमानमेकीभवन्तम् । जेतारमिति— भार्गवो जामदग्न्यः दशकंधरस्य रावणस्य जेतारं निग्राहकं अर्जुनं कार्तवीर्यं जितवानेव तं जामदग्न्यं रामो दाशरथिः काकपक्षकधरश्चूडावानतिबाल इत्यर्थः यदि जितवानि-त्यनुवर्तते विजितवांश्चेत्तर्हि इयं कथा रावणसंहारकथा पूरिता पूर्वमेवोक्तप्राया, बालचरितादूर्ध्वं कल्पयतः कवेस्तु अन्या इयं कविताकथा तासां तासां क्रियाणां सेतुबन्धनादिकर्मणां गौरवाद्धेतोः जगतस्तोषाय वर्तिष्यते भविष्यति । अनेन पूर्व-वाक्यं नाम निर्वहणसंध्यङ्गमुक्तं 'पूर्ववाक्यं तु विज्ञेयं यथोक्तार्थोपपादनम्' इति तल्लक्षणात् ॥ १४७ ॥

तादिति—तदिदं रघुसिंहानां रघुश्रेष्ठानां सिंहासनं अलंकुरु आरोहेत्यर्थः उत्तरकोसलाः उत्तरकोसलजा जनाः राजन्वन्तः सौराज्यविशिष्टाः सन्तः मुदं संतोषं प्रतन्वन्तु विस्तारयन्तु ॥ १४८ ॥

पञ्चाभिरङ्गैः —'शिरः पादौ च बाहू च मुख्यान्यङ्गानि पञ्च वा' इत्युक्तलक्षणैः चुम्बिता आश्लिष्टा भूमिर्यैस्ते । अनेन कृतिर्नाम निर्वहणसंध्यङ्गमुक्तं 'लब्धार्थागमनं कृतिः' इति तल्लक्षणात् । उदयदिति— उदयच्छुदयन्नित्यर्थ-

( रामो लज्जते । )

**विभीषणः**--( कृताञ्जलिर्जानुभ्यां प्रणिपत्य । ) देव,

**लङ्का च पुष्पकमिदं च विमानमार्य यक्षेश्वरादपहृतं दशकंधरेण ।**
**एक भवानदित मह्यमथेदमन्यदाज्ञापय द्रुतमुपैतु निधिं निधीनाम् ॥**

**रामः**--( वसिष्ठेनानुज्ञातः पुष्पकं प्रति । ) विमानराज, प्रथमस्वामिनं प्रथमपौलस्त्यमुपतिष्ठस्व ।

**वसिष्ठः**-- ( महर्षम् । ) रामभद्र, किं ते भूयः प्रियमुपहरामि

**रामः**-- भगवन्, इतः परमपि प्रियमस्ति

**ताताज्ञामधिमौलि मौक्तिकमणिं कृत्वा महापोत्रिणो**
**दंष्ट्राविन्ध्यविलासिपत्रशबरी दृष्टा भृशं मेदिनी ।**

---

मेकीभवन् धर्मस्कन्धो धर्मसमूहो यस्मिंस्तादृशे त्वयि धुरं राज्यभारं बिभ्रति वहति सति प्रजाः प्रकृतयः दृष्टादृष्टावैहिकामुष्मिकौ परिभवावनर्थौ क नु कुतो वा ? हेतोः परिचिन्वतेऽभ्यस्यन्ति प्राप्नुवन्तीत्यर्थः त्वद्धर्मेणैव सर्वानर्थनिवृत्तेरिति भावः । ननु दृष्टस्यानर्थस्य प्रारब्धाधीनत्वेनानुभवैकानिवर्त्यत्वाददृष्टस्य च 'फलमत उपपत्तेः' इति न्यायेन कर्मसापेक्षेश्वराधीनत्वात्तस्य चेन्द्रादिदिक्पालात्मनावस्थाय जगन्नियन्तृत्वस्य च सिद्धत्वात्कथं वा मदीयधर्ममात्रेण सर्वानर्थनिवृत्तिरित्याशङ्क्य 'एकमेवाद्वितीयम्' 'नेह नानास्ति किंचन मृत्योः स मृत्युं गच्छति । य इह नानेव पश्यति' 'अतोऽन्यदार्तम्' इत्यादिश्रुतिकदम्बेभ्यः पारमार्थिकाद्वैतात्मनोऽन्यस्य मिथ्यात्वदर्शनात् द्वैतश्रुतीनां चानाद्यविद्योद्भावितभ्रान्त्यनुवादमात्रत्वेन चारितार्थ्याच्चोपक्रमोपसंहारादिषड्विधलिङ्गतात्पर्यनिर्धारिताखण्डैकरसत्वस्य भवतोऽनन्यशेषत्वं सर्वस्याप्यवसितमित्यतः परमार्थदशायां सर्वमनवद्यमित्याह अपि खलु किं च जीवात्मनः प्रभोः सर्वशक्तिसंपन्नस्य परमात्मनः सकाशात् यथा येन प्रकारेण भवन्तीति शेषः । वस्ततोऽभिन्ना अपि व्यवहारतो भिन्नवद्भान्तीत्यर्थः । तथैव दिशामष्टौ नाथाः दिशि दिशि विभीषिकाः क्षेत्रसीमासु मृगादित्रासनार्थं तृणकाष्ठादिनिर्मिताः पुरुषा विभीषिका उच्यन्ते तद्वदविवेकिनः प्रत्येवेश्वरा भवन्तीति भावः । तस्माद्रामनामनि परमात्मनि त्वयि शासति कुतोऽमङ्गलवार्त्तापीति भावः ॥ १४९ ॥

लङ्केति--अदित दत्तवान् । निधीनां निधिं कुबेरम् । सुगममन्यत् ॥ १५०

किं ते भूय इत्यादिना काव्यसंहारो नाम निर्वहणसंध्यङ्गमुक्तं, 'वरप्रदानसं-

सेतुर्दक्षिणपश्चिमौ जलनिधी सीमन्तयान्निर्मितः
कल्पान्तं च कृतं समस्तमदशग्रीवोपसर्गं जगत् ॥१५१

तथापीदमस्तु

( भरतवाक्यम् । )

समुन्मीलत्सूक्तिस्तबकमकरन्दैः श्रवणयो-
रविश्राम्यद्धाराः सततमुपचिन्वन्तु कवयः ।
न शब्दब्रह्मोत्थं परिमलमनाघ्राय सुजनः
कवीनां गम्भीरे वचसि गुणदोषौ रचयतु ॥ १५२ ॥

अपि च

देवस्यात्मभुवः कमण्डलुजलस्रोतांसि मन्दाकिनी-
गङ्गाभोगवतीमयानि पुनते यावत्त्रिलोकीमिमाम् ।
तावद्वीरयशोरसायनमधुस्यन्दः कवीनामयं
जागर्तु श्रुतिशष्कुलीवलयितव्योमावगाही गुणः ॥ १५३ ॥

---

प्राप्तिः काव्यसंहार इष्यते' इति तल्लक्षणात् । तातेति — तताज्ञां पितुरादेशं अधिमौलि शिरसि विभक्त्यर्थेऽव्ययीभावः । मौक्तिकमणिं कृत्वा विनयेनाङ्गीकृत्येत्यर्थः महाप्रोत्रिण आदिवराहस्य विष्णोः दंष्ट्रायामेव विन्ध्ये विलासिनी विहरणशीला पत्रशबरी भिल्लस्त्रीविशेषः तासां विन्ध्याभिजनत्वेन दंष्ट्रायास्तथारूपणं, तादृशी मेदिनी भूः भृशं सम्यक् दृष्टा मयेति शेषः भगवदुद्धृतत्वेनातिपवित्रायाः पृथ्व्यास्तत्तत्स्थानभेददर्शनेन कृतार्थोऽस्मीति भावः । दक्षिणपश्चिमौ जलनिधी समुद्रौ सीमन्तयन् द्विधा विभजन् सेतुः निर्मितः, तथा समस्तं जगत् कल्पान्तं प्रलयपर्यन्तं अदशग्रीवोपसर्गं रावणोपद्रवरहितं कृतम् ॥ १५१ ॥

समुन्मीलदिति — कवयः समुन्मीलन्तीनां समुज्जृम्भमाणानां सूक्तीनां शोभनानां भणितीनामेव स्तबकानां मञ्जरीणां मकरन्दैः पुष्परसैः श्रवणयोः श्रोत्रयोः अविश्राम्यन्तीः संततः धारा आसारान् सततमनवरतं उपचिन्वन्तु वर्धयन्तु सुजनः शब्दब्रह्मणः शब्दशास्त्रात्मकाद्ब्रह्मणः उत्थमुद्भूतं परिमलं वासनां सारं अनाघ्रायाननुभूय कवीनां गम्भीरे दुरवगाहार्थे वचसि गुणदोषौ न रचयतु न कल्पयतु ॥

देवस्येति — मन्दाकिनीगङ्गाभोगवतीमयानि यथाक्रमं स्वर्गभूमिपातालाख्यलोकत्रयेऽपि मन्दाकिनी, गङ्गा, भोगवती, इत्येवंरूपाणि देवस्यात्मभुवो ब्रह्मणः

**वसिष्ठः**— तथास्तु ।

**रामः**— ( लक्ष्मण प्रति । ) एह्येहि मन्त्रिणां दर्शनायेति

( इति निष्क्रान्ताः सर्वे । )

## इति नायकानन्दो नाम सप्तमोऽङ्कः ।

समाप्तमिदं मौद्गल्यायनस्य भट्टश्रीमुरारेः कृतिष्वनर्घराघवं नाम नाटकम् ।

---

कमण्डलुजलस्रोतांसि कमण्डलुधृतजलप्रवाहाः इमां त्रिलोकीं यावद्यावत्कालं पुनते पवित्रां कुर्वन्ति, तावत् वीराणां यशोरसायनस्य कीर्तिरूपजराव्याधिजिदौषधस्य मधुस्यन्दः मधुप्रवाहभूतः कवीनामयं कविसंबन्धी श्रुतिशष्कुल्या शष्कुलीतुल्येन श्रोत्रगोलकेन वलयितस्य वेष्टितस्य व्योम्न आकाशस्य अवगाह्यवगाहनशीलः गुणः शब्दाख्यगुणः जागर्तु प्रकाशताम् । अत्र मङ्गलार्थश्चायं गुणशब्दः । भरतवाक्यमित्यारभ्येयता ग्रन्थेन प्रशस्तिर्नाम निर्वहणसंध्यङ्गमुक्तम् ' नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयते '। इति तल्लक्षणात् ॥ १५२ ॥

पाटीरशैलकन्या जयतितरां जगति ताम्रपर्णी सा ।
अवरोधभूम्नि सत्यपि रत्नाकरता ययैव सिन्धुपतेः ॥

तस्यास्तटेऽग्रहारो हरिकेशवनल्लुरित्यभिख्यातः ।
वास्तव्यस्तत्र पुनर्वेलिश्रीमुद्गुसुब्बकवितनयः ॥

नैध्रुवकाश्यपगोत्रो लक्ष्मणसूरिर्व्यधत्तेमाम् ।
व्याख्यामनर्घराघवनाटकतात्पर्यसर्वस्वम् ॥

इति श्रीलक्ष्मणसूरिविरचितायामाकराख्या-
यामनर्घराघवनाटकव्याख्यायां

**सप्तमोऽङ्कः ।**

॥ श्रीरस्तु ॥

ॐ तत्सत् ।

